# परामर्शदातृ-समितिः

1. **प्रो. वी. कुटुम्ब शास्त्री,**
   36, एवरग्रीन अपार्टमेण्ट, प्लॉट न. 9,
   सेक्टर-7, द्वारका, नई दिल्ली-110075

2. **प्रो. के.वी. रामकृष्णमाचार्युलु,**
   4-45 अपोजिट सत्य सांई मंदिर,
   सत्य सांई नगर, सांई नगर पंचायत,
   तिरुपति (आन्ध्र प्रदेश) - 517503

3. **प्रो. रामचन्द्रपाण्डेयः**
   38, मानसनगर दुर्गाकुण्डः वाराणसी (उ. प्र.)

4. **प्रो. किशोरचन्द्रमहापात्रः**
   श्री जगन्नाथसंस्कृतविश्वविद्यालयः, पुरी (उड़ीसा)

5. **प्रो. आजादमिश्रः**
   2/239, विरामखण्डः-2, गोमतीनगरम्
   लखनऊ, (यू. पी.) 226010

6. **प्रो. जि.एस्.आर. कृष्णमूर्तिः**
   कुलसचिवः वेङ्कटेश्वर वेद वि.वि., अलिपिरी-चन्द्रगिरि-
   सम्पर्कमार्गः तिरुपति (आन्ध्र प्रदेश) - 517502

7. **प्रो. श्रीपादभट्टः**
   राष्ट्रियसंस्कृतविद्यापीठम् तिरुपतिः (आन्ध्रप्रदेशः)

# विषयानुक्रमाणिका

✦✦✦

संस्कृत-विमर्शः 2016 ( अङ्कः-11 ) ISSN : 0975-1769

# पाणिनीयं व्याकरणमर्थशास्त्रञ्च

**डॉ.दिनेशकुमारगर्गः**
सहायक आचार्यः, सं.सं.वि.वि.वाराणसी

**निबन्धेऽस्मिन् अनुसन्धात्रा पाणिनिव्याकरण-अर्थशास्त्रयोः तौलिनिकमध्ययनं कृतमिति।**

"काणादं पाणिनीयञ्च सर्वशास्त्रोपकारकम्" इति वचनात् सर्वाणि शास्त्राणि प्रति पाणिनिप्रणीतस्य व्याकरणस्य महानुपकारोऽस्ति। एवमर्थशास्त्रं प्रत्यपि व्याकरण-शास्त्रस्योपकारताऽस्ति। आचार्यपाणिनिमधिकृत्य उक्तिरस्ति -

**येनाक्षरसमाम्नायमधिगम्य महेश्वरात्।**
**कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः॥**

अष्टाध्यायीसूत्रपाठस्य, गणपाठस्य, धातुपाठस्य, लिङ्गानुशासनस्य, शिक्षायाश्च प्रणेतुः आचार्यपाणिनेः मतमभिलक्ष्य किञ्चिदुच्यते -

व्याकरणशास्त्रस्य शब्दानुशासनं प्रयोजनमस्ति। यतोहि तदुद्देश्येन प्रवृत्तेः तत्प्रयोजनम्। यथा स्वर्गोद्देश्येन प्रवृत्तस्य यागस्य स्वर्गः प्रयोजनम्, तथा शब्दानुशिष्टिः संस्कारपदपठनीया शब्दानुशासनस्य प्रयोजनम्। कथं शब्दप्रयोगः कार्यः, अत्र विषये विचार्यते। प्रतिपदपाठश्चेत् क्रियते, तत्रोच्यते भगवान् भाष्यकारः - "बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदपाठविहितानां शब्दानां शब्दपारायणं प्रोवाच नान्तं जगाम, बृहस्पतिश्च प्रवक्ता, इन्द्रोऽध्येता दिव्यं वर्षसहस्रमध्ययनकालः, न च पारावाप्तिरभूत्, किमुताऽद्य यश्चिरं न जीवति।" अधीतबोधा-चरणप्रचारणैश्चतुर्भिरूपायैः विद्या प्राप्यते। तत्र चतुर्षूपायेषु मध्ये अध्ययनकालेनैव आनुरूपयुक्तं भवति, तस्मादनभ्युपायः शब्दानां प्रतिपत्तौ "प्रतिपदपाठः" इति प्रयोजनं न सिद्ध्येदिति चेन्न शब्दप्रतिपत्तेः प्रतिपदपाठसाध्यत्वानङ्गीकारात् प्रकृतिप्रत्ययविभागकर्तृणां मते सामान्य-विशेषरूपाणां लक्षणानां सूत्राणां पर्जन्यवत् सकृदेव प्रवृत्तौ बहूनां शब्दानामनुशासनोपलम्भाच्च, तथाहि "कर्मण्यण्"[1] इत्येकेन सामान्यरूपेण लक्षणेन कर्मोपपदाद् धातुमात्रादण्प्रत्यये कृते "कुम्भकारः" इत्यादीनां बहूनां पदानामनुशासनमुपलभ्यते। एवमन्यमपि, अत एव कथ्यते यत् प्रतिपदपाठाशक्य इति। अत्राशंक्यते यत् वेदानामन्येषु अपि अङ्गेषु सत्सु व्याकरणशास्त्रस्य काऽवश्यकता तत्र उच्यते - "प्रधाने च कृतो यत्नः फलवान् भवति" अतोऽस्ति

1. पा.सू. 3.2.1

व्याकरणस्यावश्यकता, अतः व्याकरणस्य शब्दानुशासनं भवति। साक्षात् प्रयोजनं, पारम्पर्येण तु वेदरक्षादीनि। अत्रोक्तं भगवता भाष्यकारेण "रक्षोहागमलघ्वसन्देहाः प्रयोजनम्"[1] इति साधुशब्दप्रयोगादभ्युदयोऽपि भवति। तथा चोक्तं कात्यायनेन "शास्त्रपूर्वकं प्रयोगेऽभ्युदयस्तत्तुल्यं वेदशब्देन", अन्यदपि "एकः शब्दः सम्यग्ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके च कामधुग् भवति" इति। अत्राशंक्यते यद् अचेतनस्य शब्दस्य कथमीदृशं सामर्थ्यमुपपद्यते। अत्र उच्यते –

**चत्वारि शृंगा त्रयोऽस्य पादाः द्वे शीर्षे सप्त हस्तासोऽस्य।**
**त्रिधा बद्धो वृषभो रोरवतीति महो देवो मर्त्यामाविवेश॥**

व्याचकार भाष्यकारः – "चत्वारि शृंगाणि चत्वारि पदजातानि "नामाख्यातोपसर्गनिपाताः", त्रयो अस्य पादाः लडादिविषयः, त्रिधा भूतभविष्यद्वर्तमानकालाः। द्वे शीर्षे द्वौ नित्यानित्यात्मानौ नित्यः कार्यश्च, व्यङ्‌ग्यव्यञ्जकभेदात्, सप्तहस्तासोऽस्य तिङा सह सप्तसु ब्विभक्तयः, त्रिधा बद्धः, त्रिषु स्थानेषु उरसि शिरसि कण्ठे च बद्धः, वृषभ इति प्रसिद्धवृषभत्वेन रूपणं क्रियते। वर्षणाद्वर्षणञ्च ज्ञानपूर्वकानुष्ठानेन फलप्रदत्वम्। रोरवीति शब्दं करोति, रौतिः शब्दकर्मा, मरणधर्माणो मनुष्याः तानाविवेश। महादेवः शब्दः मर्त्यां मरणधर्माणो मनुष्यास्तानाविवेश। महता देवेन परेण ब्रह्मणा साम्यमुक्तं स्यादिति।" जगन्निदानं स्फोटाख्यो निरवयवो नित्यः शब्दो ब्रह्मैव। अत्र भर्तृहरिणोच्यते –

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।**
**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥**[2]

ब्रह्मरूपात्मकः शब्दः स्फोटरूप एव। स च वर्णातिरिक्ततो वर्णाभिव्यङ्ग्योऽर्थप्रत्यायकः नित्यः शब्दः स्फोटः। अत्रोच्यते – स्फुट्यते व्यज्यते वर्णैरिति स्फोटो वर्णाभिव्यङ्ग्यः, स्फुटीभवत्यस्मादर्थ इति स्फोटोऽर्थप्रत्यायक इति स्फोटशब्दार्थमुभयथोचुः। अत एव भगवता भाष्यकारेणोक्तम् – "अथ गौरित्यत्र कः शब्दः, येनोच्चारितेन सास्नालाङ्‌गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्दः।" अत्र कैयटेनोच्यते – "वैयाकरणाः वर्णव्यतिरिक्तस्य पदस्य वाचकत्वमिच्छन्ति, वर्णानां वाचकत्वं द्वितीयादिवर्णोच्चारणानर्थक्यप्रसङ्गादित्यादिना तद्व्यतिरिक्तः स्फोटः नादाभिव्यङ्ग्यो वाचकः" इति। आचार्यपाणिनिना जातिव्यक्त्योरुभयोरपि चर्चा कृता वर्तते। जातिपदार्थमुपलक्ष्य "जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्"[3] इत्यादिव्यवहारः। एवं द्रव्यपदार्थमङ्गीकृत्य "सरूपाणामेकशेष एकविभक्तौ" इत्यादिसूत्राणि प्राप्यन्ते। व्याकरणस्य सर्वपार्षदत्वान्मतद्वयाभ्युपगमे न कश्चिद् विरोधः। अतः "अद्वयं सत्यं परं ब्रह्मतत्त्वं सर्वशब्दार्थः" इति। सत्यस्वरूपविषये भतृहरिणोच्यते –

---

1. म.भा.पस्पशा.
2. वा.प.ब्र.1
3. पा.सू.1.2.58

**यत्र द्रष्टा च द्रश्यञ्च दर्शनाञ्चाविकल्पितम्।**
**तस्यैवार्थस्य सत्यत्वमाहु वेदान्तवेदिनः॥**

इति। द्रव्यसमुद्देशेऽपि –

**विकारोपगमे सत्यं सुवर्णं कुण्डले यथा।**
**विकारापगमो यत्र तामाहुः प्रकृतिं पराम्॥**

अभ्युपगतद्वितीयत्वनिर्वाहाय वाच्यवाचकयोरविभागः प्रदर्शितः।

**वाच्या सा सर्वशब्दानां शब्दानाञ्च न पृथक्कृतः।**
**अपृथक्त्वेऽपि सम्बन्धस्तयोर्वा नात्मनोरिव॥**

इति तत्तदुपाधिपरिकल्पितभेदबहुलतया व्यवहारस्याविद्यामात्रकल्पितत्वेन प्रतिनियताकारोपाधीयमानरूपभेदं ब्रह्मतत्त्वं सर्वशब्दविषयः, अभेदे च परमार्थिके संवृत्तिवशाद्व्यवहारदशायां स्वप्नावस्थावदुच्चावचः प्रपञ्चो विवर्तत इति, तदाहुः वेदन्तवादनिपुणः – "यथा स्वप्नप्रपञ्चोऽयं मयि मायाविजृम्भितः" इति। तदित्थं कूटस्थे परस्मिन् ब्रह्मणि सच्चिदानन्दरूपे प्रत्यगभिन्ने अनाद्यविद्यानिवृत्तौ तादृग् ब्रह्मात्मनावस्थानलक्षणं निःश्रेयसं सेत्स्यति। "शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति" इत्यभियुक्तोक्तेः। तथा शब्दानुशासनमात्रस्य निःश्रेयससाधनत्वं सिद्धम्। उक्तञ्च –

**तद्द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम्।**
**पवित्रं सर्वविद्यानामधिविद्यं प्रचक्षते॥**[1]

तस्माद् व्याकरणशास्त्रं परमपुरुषार्थसाधनतयाऽध्येतव्यम्। अत्र पाणिनिप्रोक्ताष्टाध्यायीरूपस्य व्याकरणत्वम्। व्याकरणशास्त्रस्य प्रभावोऽर्थशास्त्रे दृश्यते। किमस्ति अर्थशास्त्रमत्र विचार्यते।

**अर्थशास्त्रम्** –

अत्र अर्थशब्दः मनुष्यवत्या भूमेः वाचकः। तन्त्रयुक्तौ कौटिल्येनोक्तम् – "मनुष्याणां वृत्तिरर्थः मनुष्यवती भूमिरित्यर्थः।"[2] तस्या अर्जनं रक्षणं वर्धनं सत्पात्रप्रतिपत्तिश्च कर्तव्या भवति। चाणक्यः ब्रूते – "अर्थमूलौ हि धर्मकामौ"[3] इति। धर्मादर्थः, अर्थतः कामः इत्युक्त्वा केचन त्रिवर्गमिति अर्थत्वेनाऽन्तर्भावयन्ति। तस्य अर्थस्य विधायकं शासनं यत्र तद् अर्थशास्त्रमिति।

---

1. वा.प.
2. कौ.अ. 15.1
3. चा.सू. 91

**अर्थशास्त्रस्य परम्परा -**

भगवान् ब्रह्मा लक्षाध्यायात्मकमर्थशास्त्रं रचयामास। अत्र धर्मार्थकामसम्प्रतिपत्तिः वर्णिताऽस्ति। तं ग्रन्थं भगवान् शिवातारो विलाक्षोऽधीतवान्। ततः संक्षिप्य स्वीयं ग्रन्थं विशालाक्षः दशसहस्राध्यायात्मकमिन्द्रमध्यापयामास। सोऽपि संचिक्षेप पञ्चसहस्राध्यापम्। तं बृहस्पतिः जग्राह, सोऽपि त्रिसहस्राध्यायात्मकं ग्रन्थं निर्माय शुक्राय ददौ। काव्योऽध्यायानां सहस्रेण ग्रन्थं निर्ममे। औशमसं भारते विस्तरेण वर्ण्यते। उक्तपरम्परातिरिक्ताद्यर्थशास्त्रविदां परम्परा बभूवेति ग्रन्थान्तराज्ज्ञायते। अपि च आभीयविदुरोद्धवभीष्मादिमतत्वेनापि तत्र तत्र संग्रहो दृश्यते। एवं रीत्या अर्थशास्त्रस्य मूलग्रन्थस्य विस्तारो भवति। तानि सर्वाणि अर्थशास्त्राणि पर्यालोच्य अमन्दमतिः विद्यापारदृश्वा आचार्यः कौटिल्यः सूत्रं भाष्यञ्च संक्षिप्य षट्श्लोकसहस्रं साशीतिप्रकरणशतपरिमितं ग्रन्थं निर्बबन्ध, अमात्याश्रियं च साधितवान्। नीतिं निरूपयन्नपि ग्रन्थकर्ता भूमेरर्जनमभिदधाविति स्वग्रन्थमर्थशास्त्रत्वेन घोषितवान्। एतत्प्रणीतस्य शास्त्रस्याध्ययनेन नीतिशास्त्रं विशालाक्षादारभ्य इतरैः अनेकैः संक्षिप्य प्रणीतं सम्पूर्णं परिचितं भवति।

**आचार्यकौटिल्यः -**

अर्थशास्त्रस्य प्रणेता आचार्यः कौटिल्यो मौर्यवंशस्य प्रतिष्ठापक आसीत्। अस्मिन् विषये विष्णुपुराणे कथितमस्ति "महाभारन्तः तत्पुत्राश्चैकं वर्षशतभवानीपतयो भविष्यन्ति। नवैव, तान्नन्दान् कौटिल्यो ब्राह्मणः समुद्धरिष्यति। तेषामभावे मौर्याश्च पृथिवीं भोक्ष्यन्ति। कौटिल्य एव चन्द्रगुप्तं राज्येऽभिषेक्ष्यति। तस्यापि पुत्रो बिन्दुसारो भविष्यति। तस्याप्यशोकवर्धनः" इति। आचार्यः कामन्दको ब्रूते-

> **"नीतिशास्त्रामृतं धीमानर्थशास्त्रमहोदधेः।**
> **समुदध्रे नमस्तस्यै विष्णुगुप्ताय मेधसे॥"**[1]

अपि च अर्थशास्त्रेऽपि -

> **"येन शास्त्रं च शास्त्रञ्च नन्दराजगता च भूः।**
> **अमर्षेणोद्धृतान्याशु तेन शास्त्रमिदं कृतम्॥"**[2]

आचार्यकौटिल्यस्यार्थशास्त्रस्य शासनाधिकारप्रकरणे आज्ञापत्रस्य विधिनिरूपणकाले व्याकरणशास्त्रस्य महत्वं प्रतिपादितमस्ति। तत्रोच्यते - "शासने शासनमित्याचक्षते, शासनप्रधाना राजानः, तन्मूलत्वात् सन्धिविग्रहयोः।" किं नाम शासनं तत्राह - "पन्नारूढोऽर्थः शासनं तस्मिन् शासनमिति व्यपदेशं कुर्वन्त्याचार्याः, न तु संदिष्टेऽर्थे वाचिकाख्ये" इत्यर्थः। लेखकः कीदृशः स्यात् - "तस्मादमात्यसम्पदोपेतः सर्वसमयविदाशुग्रन्थश्चार्वाक्षरो लेखवाचनसमर्थो लेखकः स्यात्" इति। सोऽव्यग्रमना राज्ञः सन्देशं श्रुत्वा निश्चितार्थं लेखं

1. का.नी.प्रथमसर्गे
2. अर्थ.शा.पृ.सं. 771

विदध्यात्। देशैश्वर्यवंशनामधेयोपधारमीश्वरस्य, देशनामधेयोपचारमनीश्वरस्य। अपि च –

**श्रुत्वा नु वाक्यं परभावं चावधार्यपरलेखात्।**
**लेखः खलु कर्त्तव्यो गुणदोषविनिश्चयमज्ञेन॥**

तत्र जात्यादेः निर्देशः कार्यः। "जातिः कुलं स्थानवयः श्रुतानीत्यादि"[1] इति। एवमर्थक्रमादीन् षट्लेखगुणान् वक्ति –

1. अर्थक्रमः – यथावदानुपूर्वक्रियाप्रधानस्यार्थस्य पूर्वमभिनिवेशः।
2. सम्बन्धः – प्रस्तुतस्यार्थस्यानुपरोधादुत्तरस्य विधानमासमाप्तेः।
3. परिपूर्णता – अर्थपदाक्षराणामन्यूनातिरिक्तता हेतूदाहरणदृष्टान्तैरर्थोपवर्णनाश्रान्तपदता।
4. माधुर्यम् – सुखोपनीतपार्वर्थशब्दाभिधानं माधुर्यम्।
5. औदार्यम् – अग्राम्यशब्दाभिधानमौदार्यम्।
6. स्पष्टत्वम् – प्रतीतशब्दप्रयोगः स्पष्टत्वम्[2]।

**व्याकरणस्योपयोगित्वं दर्शयति आचार्यः कौटिल्यः –**

"अकारादयो वर्णास्त्रिषष्टिः। तत्र ह्रस्वदीर्घप्लुतभेदादचो द्वाविंशतिः, कादयो मावसानाः स्पर्शाख्या पंचविंशतिः, यरलवा अन्तस्थाश्चत्वारः, अयोगवाहा अनुस्वारविसर्गजिह्वा-मूलीयोपध्मानीयाश्चत्वारः। यमाक्षराणि चत्वारि, शषसहा ऊष्माख्याश्चत्वार इत्येवं वर्णानां त्रिषष्टित्वम्।" अपि च –

**दीर्घाः स्वराणां तत्राष्टौ पञ्चह्रस्वाः प्लुता नव।**
**चतुर्धा योगवाहोष्मयमान्तस्थाः पृथक् पृथक्॥**
**विंशतिः पञ्चस्पर्शास्त्रिषष्टिरिति कीर्तिताः॥**

अत्र पदस्वरूपमुच्यते – "वर्णसंघातः पदम्"[3] इति। अर्थात् नियतानुपूर्विकाणां वर्णानां समूहोऽर्थविशेषसंकेतितः पदमित्युच्यते। तच्चतुर्विधमाह – "नामाख्यातोपसर्गनिपा-ताश्च"[4] इति। तत्र नाम सत्वाभिधायि, अर्थात् जातिद्रव्यगुणवाचकं नाम सत्वाभिधायि। एवमविशिष्टलिङ्गं स्त्रीपुंनपुंसकस्य लिङ्गविशेषशून्यं क्रियावाचकमाख्यातम्। क्रियाविशेषाः क्रियागत- प्रकर्षादिविशेषद्योतकाः, प्रादयः प्र, परा, अप, सम्, अनु, अव इत्यादयः उपसर्गाः अव्ययाश्चादयो निपाताः। एवमेव वाक्यस्वरूपं कथ्यते – "पदसमूहो वाक्यमर्थसमाप्तौ"। अर्थात् पदसमूहः पदानां संघाती वाक्यमुच्यते। अर्थपरिसमाप्तौ। अर्थस्य पर्यवसाने सति तेन पदसमूहेन चेदेको विशिष्टार्थो नैराकाङ्क्ष्येण बुद्धौ प्रतिष्ठितो भवति।

---

1. कौ.अ.द्वि.शा.
2. कौ.अ.द्वि.शा.
3. कौ.अ.द्वि.शा.
4. कौ.अ.द्वि.शा.

समासकरणविषयमाह – एकपदाक्षरः, त्रिपदपरः, परपदार्थानुरोधेन वर्गः कार्यः। अर्थात् वर्णः, समासः, पदपदार्थानुरोधेन कार्यः, परं यत् पदं समासघटकादेकस्मात् पदाद् अन्यत् समासघटकं पदं तस्य अर्थानुरोधेन अर्थमनुसृत्य कार्यः, अर्थस्य समासघटकपदान्तरार्थेन सहैकीभावयोग्यतायामभिलक्ष्य कार्य इति। पदयोः पदानां वा सति सामर्थ्ये समासः कार्यः नान्यथेति अभिप्रायः। स च कथम्भूतकार्यः, एकपदावरस्त्रिपदपरः समस्यमानपदातिरेकेणैकं पदमवरं निकृष्टं यस्मिन् तथा भूतश्च कार्यः, त्र्यधिकसमासस्तु न कार्यो माधुर्यायुक्तगुणहानात्। उक्तञ्च –

**"माधुर्यमभिवाञ्छन्तः प्रसादं च समेधसः।**
**समासवेति भूयांसि न पदानि प्रयुञ्ज्यते॥"**

लेखकपरिसंहरणार्थ इति शब्दो वाचिकमात्रस्येति। तथाग्रे –

**"निन्दा प्रशंसा पृच्छा च तथाख्यानमर्थार्थता।**
**प्रत्याख्यानमुपालम्भः प्रतिषेधोऽथ चोदना॥**

**सात्वमभ्यवपत्तिश्च भर्त्सनानुनयौ तथा।**
**एतेष्वर्थाः प्रवर्तन्ते त्रयोदशसु लेखजाः॥"**

तत्राभिजनशरीरकर्मणां दोषवचनं निन्दा। गुणवचनमेतेषामेव प्रशंसा। कथमेतदिति पृच्छा, एवमित्याख्यानम्, देहीत्यर्थना। न प्रयच्छामीति प्रत्याख्यानम्। अननुरूपं भव इत्युपालम्भः। मा कार्षीः इति प्रतिषेधः। इदं क्रियतामिति चोदना, योऽहं स भवान्, मम यद् द्रव्यं तद् भवतः इत्युपग्रहः सान्त्वम्। व्यसवसाहाय्यमभ्यवपत्तिः। सदोषमायाति प्रदर्शनम्, अर्थात् अनित्यं कुर्वाणमचिरात् त्वां घातयेयं, बद्ध्वाकारागृहे निवेशयेयमित्येवमनर्थ-दोषयुक्तमुत्तरकालकथनमभिमत्सर्वम्।[1]

**सारांशः –**

अर्थशास्त्रस्याध्ययनेन ज्ञायते यत् विना व्याकरणं तच्छास्त्रस्य अध्ययनं सम्यक्तया कर्तुमशक्यम्। अतः सत्यमेव कथितमस्ति "यद्यपि बहुनाधीषे तथापि पठ पुत्र व्याकरणमिति" अर्थात् वेदाङ्गेषु प्रधानतमं मुखरूपं व्याकरणमस्ति, प्रधाने च कृतो यत्नः फलवान् भवति, अतः तद्रहितं कस्यापि शास्त्रस्य ज्ञानं कठिनतरं भवति, व्याकरणाध्ययनानन्तरं चेत् अर्थशास्त्रादिशास्त्राणामध्ययनं भवति तर्हि सारल्यं भवति। मदीया स्वकीयैवानुभूतिरस्ति यदहं व्याकरणस्यैव प्रथमः छात्र आसम्, अनन्तरमर्थशास्त्रस्याध्ययनं मया कृतम्। अत एव सर्वं सहजमेव ज्ञातुं शक्नोमि। अर्थशास्त्रकारः कौटिल्योऽपि शासनाधिकारमाध्यमेन व्याकरणमध्येतुं प्रेरयति। अतः सर्वैः व्याकरणशास्त्रमवश्यमेवाध्येतव्यमिति शम्॥

✦✦✦

---

1. कौ.अ.द्वि.शा.

संस्कृत-विमर्शः 2016 ( अङ्कः-11 ) ISSN : 0975-1769

# संरचना साहित्य के संदर्भ में मानव अधिकार की अवधारणा

- दीपशिखा पाराशर

शोधछात्रा, कोट विश्वविद्यालय

**प्रस्तुत लेख में अनुसन्धाता ने वैदिक उद्धरणों के द्वारा मानव अधिकार की अवधारणा को प्रस्तुत किया।**

इतिहास पुराण की परम्परा के अनुसार मानव का प्रादुर्भाव एक विलक्षण घटना थी। मानव एक जैविक अभिव्यक्ति के साथ-साथ एक सामाजिक धार्मिक एवं एक सांस्कृतिक अभिव्यक्ति था। जीवन के नए-नए अभ्यासों से परिचय कराने का काम मानव जीवन से ही प्रारम्भ हुआ। मानव ने अपनी आवश्यकताओं को पूर्ण करने के लिए अपने आस-पास एक ताने-बाने को बुनना प्रारम्भ किया। इसके परिणाम स्वरूप, समाज एवं परम्परा जन्म लेने लगी। सामाजिक व्यवस्था व्यक्तिवाद के समूहवाद में परिवर्तित होने लगी। चूंकि मानव को प्रकृति व उसकी शक्तियों के साथ प्रतिदिन संघर्षरत रहना था और अस्तित्व बनाए रखना एक चुनौतीपूर्ण संघर्ष बनता जा रहा था। इसी के फलस्वरूप धीरे-धीरे सामूहिकता ने जन्म लेना प्रारंभ किया।

इस समूहीकरण, सामाजीकरण का ही परिणाम था मानवों के ताने-बाने से बने कानून, अधिकार और दायित्व। यद्यपि प्रत्येक जीव वस्तुतः जीवन के अधिकार के साथ ही उत्पन्न होता है, परन्तु मानव की उत्पत्ति के उपरान्त जैसे-जैसे समय बीतने लगा, मानव अधिकारों की नवीन व्याख्याए, नवीन रूप में अवतरित होने लगीं। इसकी झलक भारतीय संस्कृति में प्राचीन काल से दिखाई देती रही हैं।

भारतीय संस्कृति प्राचीन काल से ही स्वयं में विशिष्ट और गरिमापूर्ण है। भारतीय संस्कृत केवल मूल्यों की संस्कृति ही नहीं है, अपितु भारतीय संस्कृति में प्रारम्भ से ही मानव मात्र की गरिमा और मूल्यों की सुरक्षा के विशेष प्रयत्न किए गए हैं।

मानवाधिकार वे अधिकार हैं जो हमारी प्रकृति या स्वभाव में अन्तर्निहित हैं, जिनके बिना मानव अपने व्यक्तित्व का सर्वांगीण विकास नहीं कर सकता। इस वैश्विक और सार्वजनीन भावना के तहत, प्राचीन काल से ही संस्कृत वाङ्मय में मानवाधिकारों के अनेक संदर्भ प्राप्त होते हैं।

मानवाधिकार हर मनुष्य को प्राप्त हैं, चाहे वो किसी भी राष्ट्र, समाज या साहित्य से सम्बन्धित हो। हर मनुष्य को बिना किसी भेद-भाव के इन अधिकारों को प्राप्त करने का अधिकार है। हर अधिकार परस्पर सम्बन्धित हैं और अपने आप में पूर्ण और मुक्त भी हैं। न्याय, समानता, बन्धुत्व आदि मानवीय मूल्य मानवाधिकार के प्राणस्वरूप हैं, जिनका लौकिक संस्कृत-साहित्य में रामायण, मृच्छकटिकम्, अभिज्ञानशाकुन्तलम्, रत्नावली, दशकुमारचरितम्, मेघदूतम् आदि संस्कृत ग्रंथों में उल्लेख किया गया है, ये मानवाधिकार प्राचीन काल से ही संस्कृत वाङ्मय में बीज रूप से विद्यमान हैं। इसी प्रकार हमारे धार्मिक साहित्य-कुरान, गुरूग्रन्थ साहिब, बाईबल आदि में मानवाधिकारों का विशद् वर्णन प्राप्त होता है।

हर मानव के मूल अधिकार हैं - सर्वत्र सुखी, निरोगी, दु:खविहीन, मानवी सृष्टि की संस्थापना। वर्तमान पारिभाषिक मान्यताओं में, 'मानवाधिकार' शब्द की सार्वभौम घोषणा 1948 में संयुक्त राष्ट्रसंघ द्वारा हुई, जिसके अन्तर्गत ऐसी भावनाओं का प्राकट्य हुआ है कि मानव परिवार के सभी सदस्यों की अन्तर्निहित गरिमा, शान्ति, मानवाधिकारों के आधार हैं। मानव देह गरिमा-महत्त्व, स्त्री-पुरुष समानाधिकारिता, वाक्स्वातन्त्र्य, भयमुक्त जीवन यापन सहित उत्कृष्ट जीवन स्तर की प्राप्ति का अधिकार इत्यादि कल्याणी बिन्दुओं के विधि सम्मत संरक्षण पर चिंतन किया गया है। 30 अनुच्छेदों में संयुक्त राष्ट्रसंघ की सार्वभौम घोषणा विश्व के समक्ष प्रस्तुत हुई, जो वेद और उपनिषदों की विचारणा का रूपान्तरित, अनुवादित, अनुवाक्यांश या अनुवर्तन मात्र है।

ऋग्वेद में मानव के मूलभूत अधिकारों का अद्वितीय वर्णन किया गया है।

—कोई मानव उत्कृष्ट या अपकृष्ट नहीं है, सब परस्पर बन्धु हैं, सबको समान अधिकार प्राप्त है। हर मानव को अधिकार है कि वो एक-दूसरे को आगे बढ़ाने के लिए प्रयत्नशील और सामूहिक रूप से प्रगति के पथ पर अग्रसर हो।[1]

चारों वेदों में ऋग्वेद प्रथम वेद है। वेदों में यह प्रमुख रूप से बताया गया है कि पूरे विश्व के सम्पूर्ण प्राणियों को एकता से जीवन यापन करने का अधिकार प्राप्त है।

—हर व्यक्ति को संकल्प, हृदय और मन से एकरसता का अधिकार है। परस्पर सहयोग से रहने के अधिकार का सब में दृढ़ संकल्प हो।[2]

वेद और उपनिषद् निरन्तर मानव के मूलभूत अधिकारों की ओर इशारा करते हैं। मानव के इन मूलभूत अधिकारों में एक अत्यन्त महत्त्वपूर्ण अधिकार है - सदा प्रसन्न रहने का अधिकार तैत्तरीय उपनिषद् में इसका इस प्रकार उल्लेख है।

---

1. अज्यस्थासो अकनिस्थासा येते।
   सम भ्रात्रो वावरूद्धयु: सौभाग्य:।। (ऋग्वेद, मंडल-5 सूक्त-60, मंत्र-5)
2. समानी वा आकृतिति समाना हृदयानिवाह।
   समानमस्तु वो मानो यथा वह सुसहासति।। (ऋग्वेद, मंडल-10, सूक्त-191, मंत्र-4)

**सब प्रसन्न हों**
**सब रोगों से मुक्त हों**
**सब शुभ वस्तुएँ देखें**
**कोई शोक न सहे।**[1]
**भगवान् हम सबकी एक साथ रक्षा करें**
**भगवान् हम सबका एक-साथ लालन पालन करें**
**हमारा अध्ययन ओजस्वी प्रभावशाली हो**
**हम एक-दूसरे से घृणा न करें**
**हर तरफ शांति हो।**[2]

प्रसन्न रहने के अधिकार के साथ-साथ, अथर्ववेद में स्पष्ट रूप से उल्लेख है कि सब मनुष्यों को समानता का अधिकार है, हर मनुष्य समान है।

हर मनुष्य को भोजन और जल पाने का अधिकार है। जीवन के रथ का जुआ सबके कन्धों पर बराबर रूप से है। सबको इस प्रकार एक दूसरे के साथ सांमजस्य से रहना चाहिए, जिस प्रकार रथ का पहिया और किनारा एक दूसरे से जुडे हैं।[3]

भगवान् श्रीकृष्ण ने भगवद्‌गीता में भी मानव अधिकारों का उल्लेख किया है, जिसमें यह बताया गया है कि हर मानव को कर्म करने का अधिकार है। भगवान् श्रीकृष्ण कहते है-

-तुम्हें अपने कर्म (कर्त्तव्य) करने का अधिकार है, किन्तु कर्म के फल के तुम अधिकारी नहीं हो। तुम न तो कभी अपने आपको अपने कर्मों के फलों का कारण मानो, न ही कर्म न करने में कभी आसक्त होओ।[4]

---

1. सर्वेपि सुखिनः सन्तु
   सर्वे सन्तु निरामयाः
   सर्वे भद्राणि पश्यन्तु
   मा कश्चिद् दुःखभाग् भवेत्। (तैत्तरीय उपनिषद् में शिक्षावली में प्रार्थना)
2. ओम् सह नाववतु सह नो भुनक्तु
   सहवीर्यं करवावहै, तेजस्वीनावधीतमस्तु,
   मा विद्विशामहे, ओम् शान्तिः शान्तिः शान्ति।।
   (तैत्तरीय उपनिषद् में शिक्षावली में प्रार्थना)
3. समानी प्रापा सह नून्नभागः
   समाने योक्त्रे सह वो युनज्मि
   आराः नाभिमिनाभिताः। (अर्थवेद-समज्ञान सूक्त)
4. कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।
   मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि।। (भगवद्‌गीता 2.47)

मानवाधिकारों के अन्तर्गत ही स्वास्थ्य का अधिकार भी सम्मिलित है। ऋग्वेद और यजुर्वेद में स्वास्थ्य के मानवाधिकार की बात कई स्थलों पर दृष्टिगोचर होती है। इनमें पशुओं तक के स्वास्थ्य की कामना की गई है।

**इमा रूद्राय तवसे कपर्दिने, क्षयद्वीराय प्रभरामहे मतीः।**
**यथा शमसद् द्विपदे चतुष्पदे, विश्वं पुष्टं ग्रामे अस्मिन्नातुरम्॥**

अर्थात् हम बलवान्, जटाधारी, वीरों के शासक, रूद्र के लिए ये स्तुतियाँ अर्पित करते हैं, जिससे हमारे मनुष्यों और पशुओं के लिए सुख हो, इस ग्राम में सभी हृष्ट-पुष्ट और निरोग हों।

शारीरिक रूप से स्वस्थ रहने के साथ-साथ मनुष्य के लिए आध्यात्मिक रूप से उन्नत होना भी अति आवश्यक है। इसके लिए वैदिक युग से स्वास्थ्य के अधिकार के साथ-साथ मनुष्य को यज्ञ करने का अधिकार भी प्राप्त है। वैदिक काल में यज्ञ प्रधान संस्कृति थी। भारतीय जन-जीवन यज्ञीय भावनाओं में ओत-प्रोत रहा है। यही कारण है कि परवर्ती पुराणकाल में "सर्व यज्ञमयं जगत्"[1] कहकर यज्ञ की व्यापकता को स्वीकार किया गया है। फलतः यजन, पूजन, उपासना, कथा श्रवण, तीर्थयात्रा, अध्यापन तथा विवाह आदि नैमित्तिक एवं राज्य प्राप्ति आदि काम्यकर्म भी आगे चलकर यज्ञ की श्रेणी में गिने जाने लगे।

वैदिक काल में नारी नर के साथ स्वतन्त्र रूप से यज्ञ करने की पूर्ण अधिकारिणी थी। इस सम्बन्ध में अथर्वसंहिता में कहा गया है-"मैं शुद्ध, पवित्र यज्ञ की अधिकारिणी, इन स्त्रियों को विद्वानों के हाथों मे पृथक्-पृथक् रूप से प्रसन्नता से अर्पित करता हूँ।"[2]

आध्यात्मिक उन्नति के साथ-साथ वैदिक काल में स्त्रियों को यज्ञ करने का अधिकार प्राप्त था, जिसके फलस्वरूप वे अपना सर्वांगीण विकास करने में सक्षम थी। इसी कारण समाज में उन्हें सम्मान की दृष्टि से देखा जाता था, जिससे उन्हें सम्मानीय अधिकार भी प्राप्त थे। फलतः वैदिक काल में स्त्रियों को अत्यन्त ही महत्त्वपूर्ण व गौरवशाली स्थान प्राप्त था। स्त्री को नित्य नवीना, यौवनसम्पन्ना, शुभ्रवसना, सत्यभाषिणी आदि विशेषणों से सम्बोधित कर उसके कन्या, भगिनी, पत्नी, मातृ आदि रूपों के प्रति आदर व्यक्त किया गया है।[3] पत्नी रहित गृह को जंगल मानकर

---

1. कालिका पुराण - 31/40
2. शुद्धाः पूता योषितो यज्ञिया इमा ब्रह्मणा हस्तेषु प्रपृथक् सादयापि।
   यत्काम इदमभिषिञ्चामि वोऽममिन्द्रो मरुत्वान्त्स ददातु तन्मे।। (अथर्ववेदसंहिता-6/122/5)
   ननान्दुः सम्राज्येधि सम्राज्युतः श्वश्रवा।। -अथर्ववेद संहिता 14/1, 43-44
3. तस्य दाक्षिण्यरूदेन नाम्ना मगधवंशजा।
   पत्नी सुदक्षिणेत्यासीदध्वरस्येव दक्षिणा।-रघुवंशम् 1/31

गृहिणी को गृह की संज्ञा दी गयी।[1]

धार्मिक कार्यों में भी स्त्री सहधर्मिणी होती थी। उसके बिना कोई भी धार्मिक कृत्य पूर्ण रूप से सफल नहीं माना जाता था। क्योंकि शतपथ ब्राह्मण में कहा गया है कि, 'अपत्नीक पति को यज्ञ का अधिकार नहीं था।'[2]

स्त्री को घर में सम्मानजनक पद प्राप्त था, मनु ने तो यहां तक कहा है कि जहाँ पर नारी की पूजा होती है, वहाँ देवता निवास करते हैं।

**'यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः।'**

अथर्ववेद संहिता में नारी के गौरव की पुष्टि करते हुए कहा गया है कि – जिस प्रकार शक्तिशाली सागर नदियों पर शासन करता है, वैसे ही तुम अपने पति के घर पहुँचकर महारानी बनो। तुम सास–श्वसुर, देवर, ननद में साम्राज्ञी बनकर रहो।[3]

अतः स्त्री को साम्राज्ञी एवं महिषी आदि सम्मानजनक शब्दों से पुकारा गया है। नारी को और अधिक सशक्त बनाने के लिए उसे सम्पत्ति से सम्बन्धित कई अधिकार भी प्राप्त थे। वैदिक युग में पत्नी की स्थिति बहुत उन्नत थी, ऋग्वेद के मतानुसार, "पत्नी ही घर है।"[4] पत्नी गृहस्थाश्रम का मूल होने से उसे घर की आत्मा और प्राण समझा जाता था। अतः वैदिक युग के प्रारम्भ में स्त्रियों को कुछ साम्पत्तिक अधिकार प्राप्त थे।

तैत्तिरीय संहिता में पत्नी को पारिणाह्य अर्थात् घर की वस्तुओं की स्वामिनी कहा गया है।[5] किन्तु ऐसा धन, जिस पर केवल पत्नी का ही अधिकार होता है और उसके बाद उस धन की उत्तराधिकारिणी उसकी पुत्री होती है, उसे स्त्रीधन कहा जाता है, जो विवाह के समय कन्या के माता–पिता तथा वर पक्ष की ओर से धन दिया जाता है, अर्थात् वस्त्र–आभूषण आदि जो स्त्री को विवाह के समय दिए जाते हैं, वह स्त्री धन कहलाता है। स्त्री जाति को सम्पत्ति सम्बन्धी जो अधिकार दिये जाते थे, वह विवाह के समय दिये जाने वाले दहेज रूपी चल अथवा अचल सम्पत्ति थी।[6] आपस्तम्ब धर्मसूत्र में कहा

---

क्षितिरिन्दुमती च भामिनी पतिभासाद्य तमग्रयपौरूपम्।
प्रथमा बहुरत्नसूर भूदपरा वीरमजीजनत्सुतम्।। –रघुवंशम 8/28

1. गृहिणी गृहमुच्यते। –महाभारत 12/145/6
2. अयज्ञीयो वैषयो अपत्नीकः। –शतपथ ब्राह्मण
3. यथासिन्धुर्नदीनां साम्राज्यं सुषुवे वृषा।
   एवा त्वं सम्राज्येधि पत्युरस्तं परेत्य।।
   सम्राज्येधि श्वशुरेषु सम्राज्युत देवृषु।
4. जायेदस्तम् –ऋग्वेद 3/53/4
5. पत्नी हि पारिणाहयस्येशे। –तैत्तिरीय संहिता 6/2/1/1
6. भर्तापि तावत्क्रथकैशिकानामनुतिष्ठतानन्तरजाविवाहः। –रघुवंश 7/32
   सत्तवनुरूपाहरणीकृतश्रीः प्रास्थापय द्राधवभन्वगाच्चः।। –नैषधचरितम् 16/34

गया है कि पति-पत्नी में किसी भी प्रकार का साम्पत्तिक विभाजन नहीं होता। दोनों का सम्पत्ति पर बराबर का स्वामित्व होता है।[1]

समाज में प्राचीन काल से नारी की महत्त्वपूर्ण भूमिका रही है, किन्तु समाज के संचालन के लिए राजा की भूमिका सर्वोपरि है। वैदिक काल में राजा को सूर्य के समान माना गया है, इसलिए हर राजा को कुछ विशेष अधिकार प्राप्त हैं। राज्य में राजा प्रमुख रूप से विभिन्न अधिकारों से युक्त होता है, यथा-प्रजा रंजन, सुव्यवस्था, रक्षा व शांति प्रबन्ध, सामाजिक कार्य, कर ग्रहण, अपने कार्यों को निष्ठापूर्वक वहन करना, दण्डनीति का ज्ञान व उचित पालन, श्रेष्ठ व उचित लोगों को महत्त्वपूर्ण पदों पर नियुक्त करना, कोष की सुरक्षा व सम्वर्धन इत्यादि।

महाकवि अश्वघोषानुसार-

**भारैरशीशमच्छत्रून गुणैर्बन्धूनरीरमत्।**
**रन्धैनांयूयुदद् भृत्यान् करैर्नापीपिडत् प्रजाः।।**[2]

शत्रु मध्यस्थ और मित्र का निर्धारण करना राजा का अधिकार है-

यथा -

**मध्यस्थतां तस्य .................... पक्षावपरस्तु नास।**[3]

जो राजा धर्म से प्रजा की रक्षा करता है और वध करने वाले लोगों को मारता है, वह प्रतिदिन एक लाख गायों की दक्षिणा वाले यज्ञ के समान फल को प्राप्त करता है।[4]

इसी प्रकार जो मनुष्य पढ़ता है, यज्ञ करता है, दान देता है और देवताओं का पूजन करता है उन सबमें से प्रजा की रक्षा के कारण राजा छठे हिस्से का भागी होता है।[5]

समाज में राजा अपने अधिकारों का पूर्ण उपयोग करते हुए प्रजा के हित के लिए कार्यरत रहते हैं, तो घर में परिवारजन जैसे पिता, पुत्र जो घर के संचालक माने जाते हैं, इन्हें भी कई अधिकार प्राप्त हैं। पिता का पुत्र पर पूर्ण अधिकार था। पिता की आज्ञा का पालन पुत्र का परम कर्तव्य था। सम्पत्ति के विघटन का नियम नहीं था। सभी की अर्जित सम्पत्ति पर पिता का अधिकार था। स्त्रियों को सम्पत्ति रखने का कोई अधिकार नहीं था। दूसरी ओर कुछ अपवाद भी हैं। यथा ऋग्वेद में पिता की वृद्धावस्था में

---

1. जायापत्योर्नविभागो विद्यते।। -2/6/14/20
2. सौन्दरानन्दः 2/27
3. बुद्धचरितम् 2/6
4. मनुस्मृतिः 8/306
5. मनुस्मृतिः 8/305

विद्यमान रहने पर भी पुत्रों ने सारी सम्पत्ति का बंटवारा करा लिया। बालक यदि छोटा है, अन्य भाई बड़े हैं तो ऐसी स्थिति में सम्पत्ति प्राप्त करने में यह बालक भी अधिकारी होता था। उसके बालिग होने तक भ्राता, पितामह, मातामह आदि द्वारा सुरक्षा की जाती थी। बालिग होने पर उसे उसकी सम्पत्ति प्राप्त करने का पूरा अधिकार था। यदि पुत्र नपुंसक है, अधर्मी है, चरित्रहीन है तो उसे पैतृक सम्पत्ति से वंचित रखने का माता-पिता को पूरा अधिकार प्राप्त था।

आचार्य मनु[1] तथा याज्ञवल्क्य[2] ने भी सम्पत्ति में कन्याओं को भाईयों के भाग का चौथा हिस्सा देने की व्यवस्था की है। ऋग्वेद में कहा गया है-अभ्रातृका विवाहिता होने पर भी धन प्राप्त करने के लिए पितृकुल की ओर आती है।[3] महाभारत में कुमारी कन्या के साम्पत्तिक अधिकारों में बराबर की भागीदारी का समर्थन किया गया है।[4] सृष्टि के आरम्भ में स्वयम्भू के पुत्र मनु ने कहा था कि दोनों प्रकार की सन्तानों का बिना किसी भेद के धर्मानुसार दाय का अधिकार होता है।[5]

समाज में विवाह एक ऐसा गठबन्धन है जो समाज के सर्वांगीण विकास के लिए अत्यधिक आवश्यक है। इसलिए पिता-पुत्र के अधिकारों के साथ-साथ समाज में हर नर-नारी को विवाह करने का अधिकार भी प्राप्त है। विवाह प्रथा देवताओं से (शिव-पार्वती विवाह) लेकर सर्वसाधारण मनुष्य के जीवन में एक विशेष महत्त्वपूर्ण स्थान रखती है। वैदिक काल से ही विवाह को एक पवित्र संस्कार माना जाता रहा है। विवाह की आधारशिला सत्य एवं सतित्व पर प्रतिष्ठित थी। इस वैवाहिक आधार शिला को सुदृढ़ करने हेतु वाग्दान, कन्यादान, अग्निसाख्य पाणिग्रहण, अग्नि प्रदक्षिणा, लाजाहोम एवं सप्तपदी आदि प्रमुख क्रियाएं सम्पन्न की जाती थीं। विवाह प्रायः ब्रह्मचर्याश्रम की समाप्ति पर ही बालक-बालिकाओं का होता था।

ऋग्वेद संहिता में स्पष्ट कहा गया है कि विवाह संस्कार सत्य और कर्त्तव्य पर प्रतिष्ठित था।[6] विवाह दम्पत्ति के आत्मा, मन, प्राण, शरीर को आध्यत्मिक सम्बन्ध द्वारा सुदृढ़ करने का एक चिरस्थायी प्रयत्न था।

---

1. स्वेभ्योऽशेभ्यस्तु कन्याभ्यः प्रदद्युर्भ्रातरः पृथक्।
   स्वात्स्वादंशाच्चतुर्भागं पतिताः स्युरदित्सव।। मनुस्मृति-9/118
2. विभाग चेत्पिता कुर्यादिच्छया विभजेत्सुतान्।
   ज्येष्ठवा श्रेष्ठभागेन सर्वे वा स्युः समांशिनः।। याज्ञवल्क्य स्मृति-2/114
3. अभ्रातेव पुंसएति प्रतीची गर्तायगिव सनये धनानाम्।। ऋग्वेद-1/124/7
4. अथकेन प्रमाणेन पुंसामादीयते धनम्।
   पुत्रवृद्धि पितुस्तस्य कन्या भवितुमर्हति।। महाभारत-13/48
5. अविशेषेण पुत्रावां दायो भवति धर्मतः।
   मिथुनानां विसर्गादौ मनुः स्वयम्भुवोऽब्रवीत्।। निरूवत्-3/4
6. ऋतस्य योनौं सुकृतस्य लोके। -ऋग्वेद संहिता 10/85/24

महाकाव्यकाल में कन्य को वर-चयन कर, विवाह करने का पूरा अधिकार था, वह जिसे चाहती थी उसे वरण कर सकती थी किन्तु वह अपने योग्य वर का वरण करती थी, जो उसके कुल की मर्यादा के अनुरूप होता था। अतः कन्या का पिता वर चयन हेतु वर समारोह का आयोजन करता था, जिसे स्वयंवर का नाम दिया गया।[1] रामायण में सीता स्वयंवर,[2] महाभारत में कुन्ती स्वयंवर,[3] द्रौपदी स्वयंवर आदि।

संस्कृत साहित्य में मानव को कई रूपों में अधिकार प्राप्त हैं। संस्कृत वाङ्मय में सम्पूर्ण सृष्टि के समग्र विषय बीज रूप में, पुष्पित, पल्लवित पुष्प रूप में सर्वदा बिखरे हुए हैं। ज्ञान, दर्शन, जीवन, कला व्यवहार, राजनीति, इतिहास, भूगोल, चिकित्सा आदि समन्वित रूप में एक दूसरे से जुड़े विषय हैं। 'अधिकार' शब्द अत्यन्त व्यापक कलेवर लिए हुए है। घर, परिवार, समाज, राष्ट्र, अन्तर्राष्ट्रीय आदि सभी स्तर पर कुछ-न-कुछ अधिकारों की चर्चा हम नित्य प्रति करते हैं। संस्कृत संसार की प्राचीन भाषा में भी अनेकों अधिकारों की विस्तृत व्याख्या, हमें अनेकों ग्रंथों में अलग-अलग प्रकार से विभिन्न संदर्भों में दृष्टिगोचर होती है।

अतः संस्कृत साहित्य में मानव अधिकारों का उल्लेख इस बात का द्योतक है कि 'भारतीय संस्कृति में मानवाधिकार सदैव बीजरूपेण विद्यमान रहे हैं।[4] तथा मानवाधिकार सर्वदा मूलरूप से मानव के सर्वांगीण विकास में सदा ही एक अहम् भूमिका निभाते रहे हैं।

✦✦✦

---

1. अथेश्वरेण क्रथकैशिकानां स्वयंवरार्थं स्वसुरिन्दुमत्याः।
   आप्तः कुमारानयनोत्सुकेन भोजेन दूतो रघवे विसृष्टः।। -रघुवंशम् 5/39
2. तस्यबुद्धिरियं जाताचिन्तयानस्य सततम्।
   स्वयंवरं तनूजायाः करिष्यामीति धीमतः।। -रामायण 2/118/38
3. ततः सा कुन्तिभोजेन राज्ञाहूय नराधिपान्।
   पिता स्वयंवरे दत्ता दुहिता राजसत्तम।। -महाभारत 1/112/3
4. कमला वशिष्ठ, मानवाधिकार शिक्षा और भारतीय संस्कृति, आशा कौशिक, पृ.243

# 'सदुक्तिकर्णामृत' में बुद्ध का चित्रण

- डॉ. संघसेन सिंह
केन्द्रीय तिब्बती अध्ययन वि.वि., वाराणसी

**प्रस्तुत आलेख में सदुक्तिकर्णामृत ग्रन्थ के सन्दर्भ में भगवान् बुद्ध को चित्रित किया गया है।**

तेरहवीं सदी ईसवी के प्रथम दसक में गौतम बुद्ध की जो तस्वीर या चित्र तत्कालीन या तत्पूर्वकालीन कवियों की रचनाओं[1] से उभरती है, वह उत्तम कोटि की है। यह वह समय है जब बौद्धधर्म भारत के मैदानी भागों में ह्रासोन्मुख था। पालवंशी राजाओं के संरक्षण में बौद्धधर्म आधुनिक भारत के पूर्वी भागों (बिहार, बंगाल, उड़ीसा, असम आदि) में एक उन्नत धर्म के रूप में व्यवस्थित था। किन्तु ऐसा मालूम पड़ता है कि सेन-वंशी राजाओं के शासन-काल में राज्याश्रम के अभाव में उसमें ह्रास के लक्षण दिखने लगे थे। सेनवंशी राजाओं ने ब्राह्मणधर्मी मतों के मानने वालों को अत्यधिक प्रश्रय दिया। फलतः बौद्ध आदि धर्मों की हानि हुई। प्रकृति का नियम है कि जिसका उदय होता है, उसका व्यय (नाश) भी होता है। इस तथ्य को गौतम बुद्ध ने अपने उपदेशों में बार-बार दुहराया है–यं किंचि समुदय-धम्मं, सब्बं तं निरोध-धम्मं ति।[2] किन्तु इसके

---

1. संकलनकार और कवि श्रीधरदास ने सदुक्तिकर्णामृत नामक सुभाषित संग्रह 1205-06 ईसवी में बनाया था। यह बात ग्रंथ की पुष्पिका से व्यक्त होती है। उन्होंने चार कवियों के पाँच पद्य संकलित किये हैं। उनके नाम है–संघश्री, वसुकल्प, श्रीधरनन्दी और मंगल। ये कवि संकलनकार के समकालीन थे या पूर्ववर्ती, यह बात स्पष्ट नहीं है, क्योंकि संकलनकार ने उनका कोई विवरण प्रस्तुत नहीं किया है। ऐसी स्थिति में इन कवियों के पद्यों से गौतम बुद्ध की जो तस्वीर उभरती है, वह संकलनकार के युग की ही मानी जायेंगी, क्योंकि उन्होंने अपने काल के पाठकों की रुचि का ध्यान रखकर गौतम बुद्ध पर लिखे तमाम उपलब्ध पद्यों में से इन्हीं पाँच को अपने संकलन में सम्मिलित किया। अतः उस तस्वीर को तेरहवीं सदी ईसवी के प्रथम दशक की तस्वीर ही माना जायेगा।
   इस ग्रन्थ का संपादन और हिन्दी अनुवाद राधा वल्लभ त्रिपाठी ने किया है और यह साहित्य अकादमी, नई दिल्ली से प्रकाशित है।
2. देखिये महापरिनिब्बान सुत्त और अन्य सुत्तों में।

बावजूद बौद्धधर्म की जो तस्वीर श्रीधरदासकृत सदुक्तिकर्णामृत (जो तेरहवीं सदी ईसवी के प्रथम दशक का संकलन है) उसे उभरती है, वह उसका उज्वल पक्ष ही प्रस्तुत करती है।

'सदुक्तिकर्णामृत' तेरहवीं ईसवी[1] का सुभाषित-संग्रह है। इस संग्रह-काव्य के संकलनकर्त्ता श्रीधरदास[2] हैं। उनके विषय में ज्यादा जानकारी नहीं है। किन्तु जो भी जानकारी मिली है, वह उनके इस ग्रन्थ से ही मिली है।

इस संकलन में पाँच प्रवाह[3] (धारायें, अध्याय के अर्थ में) हैं। प्रवाहों को अलग-अलग भागों में बाँटा गया है, जिनका नाम वीचि रखा गया है। ये प्रवाह हैं– अमरप्रवाह पुष्पिकाओं में उन्होंने अपने को 'महामाण्डलिक'[4] कहा है। यह 'महामाण्डलिक' का पद उन्हें बंगाल-बिहार के राजा लक्ष्मणसेन के आश्रय[5] में मिला था। उस समय संभवतः राजा लक्ष्मणसेन का राज्य प्रशासन की दृष्टि से मंडलों में विभक्त था। उनमें से किसी बड़े मंडल के वे प्रशासक या बड़े प्रशासक बनाये गये थे। श्रीधरदास के पिता वटुदास को उन्हीं राजा लक्ष्मणसेन के द्वारा महासामन्तचूडामणि की पदवी मिली थी। इस संग्रहकाव्य की अन्तिम वीचि, प्रतिराजस्तुतिः, में जो श्लोक संग्रहीत हैं, उनमें पहला राजा लक्ष्मणसेन के विषय में है और अन्य चार वटुदास के बारे में। ये श्लोक या तो श्रीधरदास द्वारा स्वयं रचित हैं, या फिर उनके समकालीन किसी कवि या कवियों द्वारा।

सदुक्तिकर्णामृत की पुष्पिका से इस ग्रन्थ के संकलन की निश्चित तिथि की भी सूचना मिलती है। वह तिथि है-1205-06 ईसवी।

इस ग्रन्थ के अध्ययन से यह भी व्यक्त होता है कि श्रीधरदास एक वैष्णव कवि और संकलनकार थे। उन्होंने इस ग्रन्थ के प्रथम प्रवाह, यानी अमरप्रवाह (देवप्रवाह) में दशावतारों का ही नहीं, बल्कि अन्य अवतारों का वर्णन करने वाले श्लोकों को संकलित किया है। इन अवतारों के क्रम में एक वीचि (लहर, प्रवाहों के भाग) में बुद्धविषयक श्लोक भी हैं। जैसा कि संकलनकार ने अपना क्रम बनाया है (अर्थात् प्रत्येक वीचि में

1. देखिये 'सदुक्तिकर्णामृत' की पुष्पिका, पेज 788
2. देखिये ग्रन्थ का प्रस्ताव, पेज 10
3. अध्याय के लिये संकलनकार 'प्रवाह' (धारा) शब्द का प्रयोग करता है और उन प्रवाहों के भागों को वीचि (लहर) कहता है। इन शब्दों का प्रयोग अर्थपूर्ण है। यह परिपाटी बौद्धों की है। वे ग्रन्थों के भागों या खण्डों को 'परिवर्त' आदि शब्दों से व्यक्त करते हैं। परिवर्त शब्द उनके अनित्यवाद सिद्धांत का द्योतक है। ऐसा प्रतीत होता है कि संकलनकार का झुकाव बौद्ध धर्म के प्रति रहा होगा, यद्यपि वे ग्रन्थ के आदि में अपने मंगलाचरण में 'हरि' (विष्णु) की वन्दना करते हैं।
4. देखिये प्रत्येक प्रवाह की पुष्पिकायें- पेज 170, पेज 454, पेज 546, पेज 662 और पेज 778
5. देखिये ग्रन्थ का प्रस्ताव, पेज 10

पाँच पद्य या श्लोक रखे गये हैं), इस वीचि में पाँच पद्य (श्लोक) संकलित हैं। इसके बावजूद यह बात स्पष्ट है कि संकलनकार का सबसे ज्यादा झुकाव विष्णु और उनके कुछ अवतारों के प्रति है, उदाहरण के लिये कृष्णा के प्रति। इसीलिए कृष्णा के विषय में कई वीचियाँ संकलित हैं। शिव पर भी कई वीचियाँ संकलित हैं। इन देवों की स्तुतियों को कई उपविषयों में विभाजित किया गया है, यही कारण है कि वीचियों की संख्या बढ़ा दी गई है।

सुभाषित या सदुक्ति के संग्रहों में सदुक्तिकर्णामृत का स्थान विशिष्ट है। संस्कृत साहित्य में सुभाषितों के कई संग्रह मिलते हैं। ऐसा प्रतीत होता है कि संस्कृत साहित्य में सुभाषित-संग्रह तैयार करने की परंपरा प्राकृत साहित्य के अनुकरण पर बनी है। प्राकृत साहित्य में जो सबसे पुराना सुभाषित-संग्रह मिलता है, उसका नाम गाथासत्तसई (गाथासप्तशती) है। इसका संकलन ईसा की प्रथम शताब्दी में तत्कालीन राजा हाल के द्वारा बताई जाती है। संस्कृत साहित्य में इस प्रकार का सुभाषित-संग्रह ग्यारहवीं सदी ईसवी से पहले का नहीं मिलता। संस्कृत के सुभाषित संग्रहों के विषय में बंगाल-बिहार के साहित्यकार अग्रणी रहे हैं। इनमें विद्याधर और श्रीधर का नाम प्रमुख रूप से गिनाया जा सकता है। विद्याधर के सुभाषितरत्नाकर और श्रीधरदास के सदुक्तिकर्णामृत का उल्लेख बार-बार आया है। प्राकृत सुभाषितसंग्रह 'गाहासत्तसई' की तर्ज पर संकलित एक प्रसिद्ध संग्रहकाव्य जो बार-बार उल्लेख में आता है, वह है गोवर्धन-संकलित आर्यासप्तशती। यह भी प्राय: तेरहवी सदी ईसवी के प्रारंभिक दशकों का संकलन है। क्योंकि गोवर्धन भी संभवत: राजा लक्ष्मणसेन के प्रश्रय में थे। इन संग्रह-काव्यों के बाद कई सुभाषित-संग्रह प्रकाश में आये और आज तक संकलित किये जा रहे हैं।

अमरप्रवाह (देवप्रवाह) का प्रारंभ ब्रह्मा-वीचि से होता है। इस क्रम में उनचालीसवीं वीचि बुद्धविषयक है, पचासवीं कल्कि-विषयक। बुद्धवीचि में जो पाँच पद्य (श्लोक) संकलित हैं उनके रचयिताओं के नाम हैं—संघश्री, वसुकल्प, श्रीधरनन्दी और मंगल। बुद्धविषयक वीचि का पहला पद्य (श्लोक) संघश्री नामक किसी कवि का है। संकलनकार ने उनका नाम तो सुरक्षित रखा है, लेकिन उनके विषय में कोई अन्य सूचनायें नहीं दी है। यह पद्य या श्लोक अधोलिखित है—

**कामक्रोधौ द्वयमपि यदि प्रत्यनीकं प्रसिद्धं**
**हत्वानङ्गं किमिव हि रुषा साधितं त्र्यम्बकेन।**
**यस्तु क्षान्ता शमयति शतं मन्मथादीनरातीन्**
**कल्याणं वो दिशतु स मुनिग्रामणीरर्कबन्धुः॥**

'मन्दाक्रान्ता' छन्द में रचित यह श्लोक उच्चकोटि की कविता का उदाहरण प्रस्तुत करता है। इस श्लोक के माध्यम से कवि शंकर और बुद्ध की तुलना प्रस्तुत करते हुये बुद्ध की श्रेष्ठता स्थापित करता है। शंकर क्रोध के आवेश में आकर कामदेव को

भस्म कर डालते हैं, उसे मार डालते हैं। लेकिन दूसरी तरफ बुद्ध काम[1] या कामदेव आदि सौ-सौ शत्रुओं को क्षान्ति (क्षमा) के माध्यम से शान्त कर देते हैं। इस प्रकार कवि मुनियों में श्रेष्ठ बुद्ध के द्वारा कल्याण किये जाने की कामना करता है।

दूसरा पद्य या श्लोक जो 'शार्दूलविक्रीडित' छन्द में रचित है, किसी वसुकल्प नामक कवि की रचना है। श्लोक अधोलिखित है।–

**पादाम्भोजसमीपसन्निपतितस्वर्णाभदेहस्फुरन्**
**नेत्रस्तोमतया परिस्फुटमिलन्नीलाब्जपूजाविधिः।**
**वन्दारुत्रिदशौघरत्नमुकुटोत्सर्पत्प्रभापल्लव-**
**प्रत्युन्मीलदपूर्वचीवरपटः शाक्यो मुनिः पातु वः॥**

इस श्लोक में कवि बुद्ध के विशिष्ट रूप का वर्णन करता है और देवाधिदेव के रूप में प्रस्तुत करता है। बुद्ध की वन्दना करते हुए देवों के रत्नमुकुटों से जो प्रभा-पल्लव बन जाते हैं, वे बुद्ध के अपूर्व चीवर वस्त्र जैसे लगते हैं। कवि कामना करता है कि ऐसे महानुभाव वाले शाक्यमुनि यानी बुद्ध आपकी रक्षा करें।

तीसरा पद्य या श्लोक भी शार्दूलविक्रीडित छन्द में रचित है। इसके रचयिता कोई श्रीधरनन्दी नाम के कवि हैं। श्लोक अधोलिखित है–

**कारुण्यामृतकन्दलीसुमनसः प्रज्ञावधूमौक्तिक-**
**ग्रीवालङ्करणश्रियः शमसरित्पूरोच्छलच्छीकराः।**
**ते मौलो भवतां मिलन्तु जगतीराज्याभिषेकोचित-**
**स्त्रग्भेदा अभयप्रदानचरणप्रेङ्खन्नखाग्रांशवः॥**

शान्ति रूपी सरिता (नदी) के उफान से उठे फुहारों के कण, करुणा रूपी अमृत (के सागर) में उगते कदली के फूल, प्रज्ञा वधू के कण्ठ में पड़ी मुक्तामाला के अलंकरण और जगत् के राज्याभिषेक के लिए समर्पित मालाओं के फूल जैसे हैं। वे फुहारों के कण बुद्ध के अभयदान करने वाले चरण-नखों (नाखूनों) के किरणों से मिले आपके माथे (मस्तक) पर उपमा की अद्भुत छटा मानो ऐसा प्रतीत होता है कि श्रीधरनन्दी वसुकल्प की तरह महान् कवि रहे होंगे। दुर्भाग्य से इन कवियों की अन्य रचनाओं और उनकी जीवनियों के विषय में हमारा ज्ञान प्रायः शून्य है।

चौथा पद्य या श्लोक भी शार्दूलविक्रीडित छन्द में है। इसके रचयिता कवि श्रीधरनन्दी ही है। संकलनकार इस श्लोक के सामने 'तस्यैव' शब्दों की टिप्पणी प्रस्तुत करता है। अतः यह तथ्य स्पष्ट है। श्लोक अधोलिखित है–

---

1. प्रारंभिक बौद्ध परंपरा में जिसे 'मार' कहा गया है, उसी को संस्कृत साहित्य की परम्परा में काम या कामदेव के रूप में चित्रित किया गया है।

**शीलाम्भः परिषेकशीतलदृढध्यानालवालस्फुर-**
**द्दानस्कन्धमहोन्नतिः पृथुतरप्रज्ञोल्लसत्पल्लवः।**
**देयात्तुभ्यमवार्यवीर्यविटपः क्षान्तिप्रसूनोद्गमः**
**सुच्छायः षडभिज्ञकल्पविटपीसम्बोधबीजं फलम्॥**

इस श्लोक में भी कवि ने उपमाओं और रूपकों की झड़ी लगा दी है। कवि के अनुसार शील रूपी जल से सींचा हुआ, ध्यान रूपी थाल्हे में उगा हुआ, दान रूपी तने से उठा हुआ, बड़े-बड़े विकसित प्रज्ञापल्लवों वाला, क्षमा रूपी फूलों के उद्भव से भरा-पूरा, दुर्जेय वीर्य रूपी वृक्ष, छः अभिज्ञाओं वाला कल्पवृक्ष सम्बोधि[1] के बीज रूपी फल तुम्हें दे।

बुद्धविषयक वीचि का पांचवां और अन्तिम श्लोक मंगल नामक किसी कवि द्वारा रचित है। इसका छन्द शिखरिणी है। यह श्लोक अधोलिखित है–

**यदाख्यानासङ्गादुषसि पुनते वाचमृषयो**
**यदीयः सङ्कल्प हृदि सुकृतिनामेव रमते।**
**स सार्वः सर्वज्ञः पथि निरपवादे कृतपदो**
**जिनो जन्तूनुच्चैर्दमयतु भवावर्तपतितान्॥**

इस श्लोक में कवि ने बड़े ही सरल शब्दों में सरल भावों को व्यक्त करते हुए बुद्ध (जिन अर्थात् अकुशल धर्मों पर विजय प्राप्त करने वाले, बुद्ध के लिये प्रयुक्त होने वाला एक पर्यायवाची शब्द) की स्तुति करता है। बुद्ध की स्तुति में कवि जिन बातों की ओर संकेत करता है, वे हैं–(1) प्रातः जिनकी चर्चा करके ऋषि लोग अपनी वाणी को पवित्र करते हैं, (2) जिनके विषय में संकल्प पुण्यकर्मियों के मन में ही रमता है, (3) जो सार्व अर्थात् सर्वजन के हितैषी और प्रिय हैं; (4) जो सर्वज्ञ (सब कुछ जानने वाले) हैं, (5) जो अच्छाई वाले (अपवाद-रहित, बुराई-रहित) मार्ग पर पैर रखते (चलते) हैं, (6) ऐसे जिन अर्थात् बुद्ध भवसागर के भंवरों में फंसे प्राणियों को उबारें।

इसी प्रकार संकलनकार श्रीधरदास ने अपने समकालीन और अपने से पूर्व के कवियों की कविताओं का संकलन करके तेरहवीं सदी ईसवी के प्रारम्भ में बुद्ध की जो तस्वीर खींची है, वह वस्तुतः शुद्धोदन-पुत्र सिद्धत्थ (सिद्धार्थ)[2] से बने बुद्ध की नहीं है। वह तो एक देवत्व-प्राप्त प्राणी का है। कवियों ने उन्हें देवाधिदेव बना दिया है। वे शंकर

---

1. पाठ में 'सम्बोधि' होना चाहिए, क्योंकि बौद्ध कवि और लेखक प्रायः बोधि या सम्बोधि शब्दों का प्रयोग करते हैं। यद्यपि सम्बोध और सम्बोधि शब्द को ही प्रयोग में लाया जाता है।
2. धर्मानन्द कोसंबी सिद्धत्थ (सिद्धार्थ) को राजकुमार नहीं मानते। उनके अनुसार सिद्धार्थ उच्चवर्गीय कृषक परिवार में पैदा हुए थे। देखिए उनकी पुस्तक, भगवान् बुद्ध, प्रकाशित साहित्य अकादमी, नई दिल्ली।

से भी श्रेष्ठ बताये गये हैं। वे करुणा के सागर हैं। दुखों में फंसे और दुखों से त्रस्त प्राणियों के वे त्राता (तारने वाले) हैं। छठवीं-पाँचवीं सदी ईसवी पूर्व के बुद्ध से जब उनकी तुलना की जाती है, तो जमीन-आसमान का अन्तर मालूम पड़ता है। छठवीं-पाँचवीं सदी ईसवी पूर्व के बुद्ध बोधिसत्त-सिद्धत्थ वाली स्थिति से परिवर्तित होकर गौतम बुद्ध बने थे। वे शुद्धोदन के महल या घर से निकल कर अपनी चर्याओं के आधार पर बुद्ध बने थे। पैंतालीस वर्षों तक मध्यदेश में घूम-घूमकर उन्होंने लोगों को सद्धम्म (सद्धर्म = सच्चा धर्म) का पाठ पढ़ाया और अस्सी वर्ष की आयु में कुसीनारा (आधुनिक कसिया, उत्तर प्रदेश) में प्राण त्यागा। वे लोगों को अपनी मुक्ति के लिए स्वयं प्रयास करने की बात करते थे। वे अपने को मार्ग बताने वाला ही बताते थे, मार्गदाता ही कहते थे, त्राता या तायी नहीं। लेकिन आगे चलकर लोगों ने उन पर देवत्व आरोपित कर दिया और उन्हें इंसान (मानव) से देव बना दिया, लेकिन बारहवीं तेरहवीं सदियों में आते-आते देवत्व सर्वश्रेष्ठ हो गया और मनुष्य उनका दास (=गुलाम) बन गया। यह है तस्वीर तेरहवीं सदी ईसवीं के प्रारंभ में बुद्ध की। यहाँ पर भी बुद्ध द्वारा प्रतिपादित अनित्यवाद (जगत् की सारी वस्तुएं अर्थात् समूचा जगत् उसका कण-कण सतत-परिवर्तनशील है, वाला सिद्धान्त लागू होता है। इसका कोई अपवाद नहीं। इसका कोई विकल्प नहीं।

दूसरी बात जो खासतौर से ध्यान देने योग्य है, वह अमरप्रवाह में देवों व देवताओं की स्तुति में संकलित पद्यों के क्रम का है। ऐसा प्रतीत होता है कि संकलनकार ने कोई क्रम नहीं रखा है। जो भी पद्य जब मिलते गये, उन्हें पद्य-मंजूषा में डालते गये और संकलन तैयार हो गया। ब्रह्मावीचि के बाद सूर्यवीचि, तदुपरान्त ईषप्रणति, आदि आदि। कुछ देवों और देवताओं की स्तुतियों के बाद गंगावीचि, गंगा प्रशंसावीचि, वराहवीचि, नरसिंहवीचि, वामनवीचि, त्रिविक्रमवीचि, परशुरामवीचि, श्रीरामवीचि, विरहि-रामवीचि, हरधरवीचि, बुद्धवीचि, कल्कीवीची, कृष्णा वीचियाँ। इस प्रकार संकलन का क्रम क्रमविहीन (बेतरतीब) हो गया है।

ऐसा प्रतीत होता है कि संकलनकर्ता ने बुद्ध को विष्णु के अवतारों के क्रम में रखने का प्रयास किया है। सदुक्तिकर्णामृत में बुद्ध पर संकलित पद्यों से किसी एक में भी बुद्ध को विष्णु का अवतार नहीं बताया है। इस प्रकार बंगाल की परम्परा में बुद्ध को विष्णु के अवतार के रूप में चित्रित करने की कोई अनिवार्यता नहीं रही है। कवि जयदेव के गीतगोविन्द की बात अलग हो सकती है।

✦✦✦

ISSN : 0975-1769

# काव्येषु माघस्य योगदानम्

**- प्रवीणरायः**

शोधच्छात्रः, राष्ट्रियसंस्कृतसंस्थानम्

**एतस्मिन् शोधपत्रे विभिन्नकाव्यग्रन्थेषु आचार्यमाघस्य विशिष्टं योगदान-मभिलक्ष्य विवरणं वर्तते।**

काव्यजगति माघं को न वेत्ति? महाकविमाघः संस्कृतवाङ्मये सर्वाधिकं भासुरं रत्नम्। अस्य नूतनातिनूतनपदविन्यास-रचनाचातुरी अत्यन्तं प्रौढतामगात्। महाकवि माघः काव्यसंसारे बहुकीर्तिं प्राप्नोति, अयं महाकविः गुर्जरप्रान्तस्य मालवाप्रदेशे जनिं लेभे। एतस्य पिता दत्तकः, माता ब्राह्मी पितृव्यश्च शुभङ्कर आसीत्।

एतस्य पिता दत्तकः परमविद्वान् आसीत् वदान्यश्च बभूव। कवेरस्य रचनाकालः अत्यन्तं विवादास्पदो वर्तते। यद्यपि नाद्यावधि निर्णयोऽजायत अद्यापि केचन सप्तमशतकप्रारम्भोऽपरे च अष्टमशतकस्य मध्यभाग एतस्यकाल निश्चयं कुर्वन्ति। परं परवर्ती काव्यालोचकैः सप्तमशताब्योत्तरकालः निश्चीयते। कालनिर्णयप्रसङ्गे माघ अस्य पितामहस्य सुप्रभदेवस्याश्रयदातः गुर्जराधिपस्य वर्मलान्तस्य शिलालेखेषु सुप्रभदेवसमयः पञ्चविशत्युत्तरषट्शतमिति (625) शताब्याः प्रागेव निरूपितः तदनुसारं माघसमयः प्रायः (675) ख्रीष्टाब्दनिकटे सिद्ध्यति। अपि च माघस्य कालनिर्णय एकमन्यदस्ति महत्त्वपूर्ण मन्तरङ्गप्रमाणमपि तच्चेदम्-

> **अनुत्सूत्र पदन्यासा सद्वृत्तिः सन्निबन्धना।**
> **शब्दविद्येव नो भाति राजनीतिरपस्पशा॥**

अस्मिन् श्लोके काशिकावृत्ति-न्यासग्रन्थयोः समुल्लेखः स्पष्टः। वृत्तिकारो वामनो जयादित्यश्च। उभयोरपि कालः कैस्तीयपञ्चाशदुत्तरषट्शतवर्षाभ्यन्तर एव कदाचिन्निश्चीयते। माघस्यापि समय एतत्कालोत्तर एव भविष्यति। अतः माघस्य समयः सप्तमशताब्या अन्तिम चरण एव तर्कसम्मतमिति।

संस्कृत-साहित्ये महाकविर्माघः सर्वतन्त्रस्वतन्त्रव्यक्तित्वसम्पन्नो कविरस्ति। कवेर्महाकाव्यस्य स्थानं वृहत्त्रय्यां सुरक्षितमस्ति। शिशुपालवधनामक एकैव अस्य कृतिः। अस्या एषा कीर्तिः लोकप्रसिद्धा अस्ति। संस्कृतसाहित्ये विद्वद्भिः प्रणीताः प्रभूता प्रशस्तयो माघकाव्यस्य। काव्यस्य वैशिष्ट्यं दृष्ट्वा प्रशंसकैः प्रतिपादितमस्ति यत् काव्येषु माघः।

माघकाव्ये कवेः कलानैपुण्यं स्फुटं प्रतिभाति, कवेश्च ज्ञानं, तस्य पाण्डित्यं वैदुष्यं च परीक्ष्य आलोचकैः उद्घोषितमस्ति "नवसर्ग-गते माघे नवशब्दो न विद्यते" काव्येऽस्मिन् विशालं शब्दकोषं वीक्ष्य एव एतत् कथनम्। अस्याशयोऽयम् यत् नवसर्गाध्ययनान्तर न कोऽपि नवीनो शब्दः अवशिष्यते। समस्तशब्दसमूहो अस्य (माघकाव्यस्य) नवसर्गाध्ययनेनैव ज्ञायते। काव्यस्य भावसौष्ठवम् माधुर्यमौद्रार्यादिकञ्च मनसि विधाय केनाप्युच्यते-मेघे माघे गतं वयः। शिशुपाल-वधस्य मेघदूतस्याध्ययनाध्यापने व्यतीतम् जीवनम्। भारवेरर्थगौरवमिति प्रसिद्धिर्जगति। परं सर्वतोभावेन कविः अधिभारविम् अतिशेते। अतः केनाऽपि उक्तम्-"तावद्भारवेर्भाति यावन्माघस्य नोदयः।" अनर्घराघवकारस्य मुरारेः पाडित्यं विशेषेण प्रसिद्धं संस्कृतसाहित्ये। तस्य नाटकस्य काठिन्यं दृष्ट्वा केनाप्युक्तम्-"यन्मुरारिजिज्ञासितश्चे-न्माद्ये मनसाधेयम्"-"मुरारेः पदिचिन्ता चेत्तदा माघे रतिं कुरु।" अपरञ्च माघकाव्ये कालिदासस्य उपमाकौशलम् भारवेरर्थगौरवम् दण्डिनश्च पदलालित्यम्-संघीभूय स्थितम्। अतः केनापि साधूक्तम्-

**उपमा कालिदासस्य भारवेरर्थगौरवम्।**
**दण्डिनः पदलालित्यम् माघे सन्ति त्रयोणागुणाः॥**

अस्य श्लोकस्य श्रीबालकृष्णशास्त्रिणाः इत्थं व्याख्यानम् कृतम्-"तथाहि न्यवकृतकविभासः, कालिदासः, उपमापरः न चार्थगौरवधरः न च पदलालित्यकरः। इतश्च भारविस्तु अर्थगौरवकरणे सिद्धहस्तः, उपमाग्रथने च त्रस्तः। पदलालित्ये चाप्रशस्तः। दण्डी तु पदलालित्ये योग्यः उपमाग्रन्थेन च त्रस्तः उपमायामयोग्यः अर्थगौरवादयोग्यः। निराकृत-दोषोऽघोमाघो दत्तकदारक उपमाधारकः अर्थगौरवकारकः पदलालित्यस्थापकश्चेति त्रिगुणसत्त्वात् प्रशस्यः, अतएव तत्प्रशंसामाशंतता स्वभावप्रकाश नरत्रिणा कविना कथितम्-"माघे सन्ति त्रयो गुणाः"।

शिशुपालवधमहाकव्ये रमणीयोपमानां प्राचुर्यम्। प्रीतोपवीतधारी गोराङ्ग नारदस्याभा शरदि आकाशे विद्युत इव चकास्ते। तद्यथा-

कृतोपवीतं हिमशुभ्रमुच्चकैर्घन घनान्ते तडिता गजैरिव। तथा च-

**सप्तप्तकार्त्तस्वभास्वराम्बरः**
**कठोरताराधिपलाञ्छनच्छविः।**
**विदिधुते वाऽवजातवेदसः**
**शिखाभिरारिलष्ट इवाम्भसां निधिः॥**

अत्र हरे प्रीतिविशेषणं प्रायः उपमाबद्धम्। अत्र समुदापमो हरिवडिवाग्नि-तुल्यश्च सुवर्णाम्बरम्। सुवर्णसिंहासनोपविष्टस्य धनश्यामस्य शोभा दिव्यजम्बूवृक्षाफलाडस्थान मनोहरस्य सुमेरुशृङ्गस्य शोभामधश्चकार-

**स काञ्चने यत्र मुनेरनुज्ञपा**
**नवाम्बुदश्यामतव्नुर्न्यविक्षत।**
**जिगाय जम्बूजनितश्रियः श्रियं**
**सुमेरुशृङ्गस्य तदा तदासनम्॥**

शत्रुस्तु वर्द्धमानो नोपक्षणीयः। यतो वर्द्धमानो रोगः शत्रुश्च तुल्यावेव हानिप्रदौ नीतिविद्भिरुदाहृतौ–

**उत्तिष्ठमानस्तु परो नोपेक्ष्यः पश्यतामिच्छता।**
**समौ हि शिष्टैराम्नातो वर्त्स्यन्तावामयः स च॥**

दुष्टबुद्धिमनुष्यः सान्त्वनावचनैः न साम्यति अपितु सान्त्ववादाः प्रदीप्तस्य घृतस्य तोयबिन्दव इव दीपिका एव न शान्तिप्रदाः–

**सामवादाः सकोपस्य तस्य प्रत्युत दीपकाः।**
**प्रतप्तस्येव सहसा सर्पिषस्यो बिन्दवः॥**

कुशलवक्तारो हि चित्रां हृद्यां बहुगुणां विशदां वाचं पटीमिव विस्तारयन्ति–

**म्रदीयसीमपि घनामनल्पगुणकल्पिताम्।**
**प्रसारयन्ति कुशलाश्चित्रां वाचं पटीमिव॥**

यथा सत्कविः शब्दार्थमपेक्षते तथैव विद्वान् पौरुषमदृष्टञ्चेति द्वयमप्यपेक्षते।

**नालम्बते दैष्ठिकतां न निषीदति पौरुषे।**
**शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते॥**

अर्थगौरवपराणां श्लोकानामप्यत्र बाहुल्यम्। अर्थगौरवदृष्ट्या माघः न हीनः। महाकविना भारविना उदाहरणार्थं केचन श्लोका अत्र निर्दिश्यन्ते, अनियन्त्रितं बलमन्यत्, नित्यनुसारि बलमन्यत्। कथमनयोः सामानाधिकरण्यं संभवति। तदेवं निर्गलवलबलशालितयाऽस्माभिः पदे-पदे शास्त्रचिन्ता न कार्या। शत्रुर्हन्तव्य एव–

**अन्यदुच्छृङ्खलं सत्त्वमन्यच्छास्त्रनियन्त्रितम्।**
**सामानाधिकरण्यं हि तेजोस्तिमिरयो कुतः॥**

अपि च–

**जगत्पवित्रैरपि तन्न पादैः स्पष्टुं जगत्पूज्यमयुज्यार्कः।**
**यतो बृहत् पार्वणचन्द्रचारु तस्यातपत्रं विभराम्बभूवे॥**

अत्र खलु भगवान् मरीचिमाली भगवन्तं हरिं अभ्यर्च्य विचार्य जगप्तपवित्रैरपि स्वीयैः किरणैः स्प्रष्टुं नार्हति प्रत्युत हरेः पूर्णेन्दुदीप्तिनिभातपत्रं दध्रे। अपरञ्च–हे विश्वम्भर! दुष्टैः कंसादिभिरुपप्लुतं जगदिदं भवानेव त्रातुं समर्थो नान्यः। यतो हि मार्त्तण्डं

विना रात्रेर्धनमन्धकारं गगनतलादपसारयितुं कः समर्थः-

**उपप्लुतं पातुमदो मदोद्धतै**
**स्त्वमेव विश्वम्भर? विश्वमीशिषे।**
**ऋतेरवेः क्षालयितुं क्षमेत कः**
**क्षपातमस्काण्डमलीमसं नभः॥**

एवमेवान्यतः स सवणो रामं स्वान्तकरं जानन्नपि अभिमानात् सीतां न तत्याज। यतो हि मानिनो अभिमानैकधनाः भवन्ति-

**अमानवं जातमजं कुले मनोः**
**प्रभाविनं भाविनमन्तमात्मनः।**
**मुमोच जानन्नपि जानकी न यः**
**सदाभिमानैकधना हि मानिनः॥**

अनेकशः सूक्तयः माघकाव्यस्यार्थगौरवं दर्शयन्ति तद्यथा-

**महीयांसः प्रकृत्या मितभाषिणः** (2/13)
**सर्वः स्वार्थं समीहते** (2/65)
**अनुज्झितार्थसम्बन्धः प्रबन्धो दुरुदाहरः** (2/73)
**नैकभोजः प्रसादो वा रसभावविदः कवेः** (2/83)
**वृहत्सहायः कार्यान्तं क्षोदीयानपि गच्छति** (2/100)

महाकविमाघकृतमहाकाव्ये पदलालित्यं तु पदे पदे समुपलभ्यते केचन श्लोकाः अत्रोदाह्रियन्ते-

**स्थगयत्यभूः शमितचालकान्तं स्वरा।**
**जलदास्तडितुलितकान्तमार्न्तस्वरा॥**
**जगतीरिह स्फुरित चारु-चामीकराः।**
**सवितुः क्वचित् कपिशयन्ति चामीकराः॥**

अगाद्रिवर्णने जलदानां विशेषणेषु ललितानि पदानि न्यस्तानि कविना। अनुप्रासोल्लासोऽप्यस्य चित्तप्रसादकः-

**मधुरया मधुबोधितमाधवीमधुसमृद्धिसमेधितमेधया।**
**मधुकराङ्गनया मुहुरुन्मदध्वनि भृतानिभृताक्षरमुज्जते॥**

तथा च-

**नवपलाशपलाशवनं पुरः स्फुटपरागपरागतपंकजम्।**
**मृदुलतान्तलतान्तमलोकयत् सुरभिं सुरभिं सुमनोहरैः॥**

संस्कृत-विमर्शः 2016 ( अङ्कः-11 ) ISSN : 0975-1769

# रत्नाकरे हि व्यादेशो वलादावविशेषतः

- **प्रो. आजादमिश्रो 'मधुकरः'**
गोमतीनगर, लखनऊ-226010

**एतस्मिन् शोधपत्रे आचार्यः रत्नकरीय व्याख्यानम् आदाय धात्वर्थं प्रतिपादितवान्।**

**धातुमहिमा -**

सर्वे शब्दा धातुजा इति हि शाकटायनः। ऋषेः मतमिदं चिरनवीनं सर्वथा युक्तियुक्तं वैज्ञानिकं देशकालाबाधितं व्यावहारिकं च। सन्तु नाम धातुकल्पनायाम् अनुकरणसिद्धान्तो दैवसिद्धान्तः सिद्धान्तान्तरं नित्यत्ववादो वा। परं न केवलं संस्कृते प्रत्युत भाषान्तरेष्वपि प्रयुक्तानां पदानां लघुतमोऽवयवो धातुरेवेति न केषाञ्चिदपि विमतिः। संस्कृतव्याकरणे हि धातूनां वर्तते विशालो भाण्डागारः, यस्मात्पाथेयमादाय सर्वा लोकभाषाः सामोदम् उपजीवन्ति, सोल्लासं समुल्लसन्ति, व्यवहारम् उपगच्छन्ति च।

तथाहि- 2274 वेश्च स्वनो भोजने (9.3.69) इति व्यवाभ्यां स्वनतेः षत्वविधायकेन सूत्रेण सुस्पष्टं यत् 'विष्वणति मांसम्, अवष्वणति सूपम् इत्यादिः प्रचलितः प्रयोगः पुरा, यस्य लोकभाषायाम् 'दाल सुड़क रहा है, 'सुड़कऽता' इति इदानीं प्रयोगो दृश्यते, परं संस्कृते 'सशब्दं भुङ्क्ते, इत्यादिप्रयोगा दृश्यन्ते। ढौकृ गतौ, ढौकते > ढूकना, ताकि कृच्छ्रजीवने, तङ्कति > तंग करना/होना, शिघि आघ्राणे शिङ्घति > सूँघना, रख गत्यर्थे, रखति > रखना, खुजु स्तेयकरणे खोजति > खोजना, क्षीज अव्यक्ते शब्दे, क्षीजति > सीजना > खीझना, उच्छी विवासे, विवासः समाप्तिः, व्युच्छति > उच्छिन्न होना, इत्येवं सहस्राधिका धातवः लोकभाषायाम् अभिनवरूपेण व्यवह्रियमाणाः कामपि नवीनां विच्छित्तिं विसारयन्ति। एतादृशो हि भ्वादिगणे पठितो धातुः 'अज 230 गतिक्षेपणयोः' इति धातुमेन-मधिकृत्य निबन्धेऽस्मिन् रत्नाकरव्याख्यानमतं समीक्षया विमृश्यते।

**रत्नाकरः -**

भट्टरामकृष्णप्रणीतो वैयाकरणसिद्धान्तकौमुदी-प्रौढव्याख्यानग्रन्थो नाम रत्नाकरः, यस्य पूर्वार्द्धं सम्पाद्य समीक्षया यथामति मया द्वयोर्भागयोः प्रकाशितो वर्तते सिद्धान्तकौमुदी-

मूलेन सह। इदानीमधीयेऽस्य तृतीयभागं तिङन्तम्। तत्र गतिक्षेपणयोरर्थयोः उपदिष्टस्य अजधातोः रूपनिष्पत्तिमधिकृत्य व्याख्यातो मतभेदो भट्टोजिदीक्षितरामकृष्णयोरुपन्यस्यते।

**अज गतिक्षेपणयोः -**

इह धातौ पाणिनेः सूत्रम् 2292 अजेर्व्यघञपोः (2.4.56) इति। वृत्तिकारादिभिः सूत्रार्थो निर्धारितः 'अजेर्वी इत्ययमादेशः स्याद् आर्धधातुकविषये घञमपं च वर्जयित्वा' इति। सार्वधातुकलकारेषु लट्लोट्लङ्विधिलिङ्क्षु शतरि च धातोः 'अज' रूपमेव तिष्ठति। तथा च लटि-अजति, अजतः, अजन्ति, अजसि, अजथः, अजथ, अजामि, अजावः, अजामः। एवमेव अजतु-अजतात्, आजत्, अजेत्, शतरि तु अजत् प्रातिपदिकं निष्पद्यते। लडादि-भिन्नेषु षट्सु आर्धधातुकलकारेषु आर्धधातुकप्रत्ययविषये च अज् धातोः 'वी' आदेशोऽनेन सूत्रेण विधीयते। यद्यपि व्यादेशोऽयं लडादिसार्वधातुकेषु विधीयते तथापि तत्र वीरूपं प्रयुज्यते; धान्वन्तरत्वात्।

**वी गतिव्याप्ति० -**

अत्रायमभिसन्धिः– अदादिगणे वी 1048 गतिव्याप्तिप्रजनकान्त्यसनखादनेषु पठितो धातुः गतिक्षेपणातिरिक्तमपि व्याप्ति-प्रजन-कान्ति-खादनरूपम् अर्थं यथाप्रकरणं बोधयति। लोकभाषायामस्य प्रजनरूपोऽर्थः 'गाय व्या रही है' (हिन्दी) 'बियातिया' (भोजपुरी) सुरक्षितः। अस्य 'वी' धातोः केवलं सार्वधातुकविषये एव प्रयोगः इति व्याकरणसिद्धान्तः; भाष्यकैयटरत्नाकरनागेशादीनां तथावचनात्। तदुक्तं बालमनोरमायाम्– 'अजेर्व्यघञपोः' इति सूत्रभाष्यरीत्या अस्य आर्धधातुके नास्ति प्रयोग इति शब्देन्दुशेखरे स्थितम्' इति। एवञ्च यथा 'अज्' धातोः तथास्य 'वी' धातोरपि सार्वधातुकविषये एव रूपाणि प्रयोज्यानि प्रयोगाय अनुमतानि भवन्ति। तद्यथा लटि-वेति वीतः वियन्ति, वेषि वीथः वीथ, वेमि वीवः वीमः। लोटि- वेतु-वीतात् वीताम् वियन्तु, वीहि-वीतात् वीतम् वीत, वयानि वयाव वयाम्। एवमेव लङि अवेत् अवीताम् अवियन्, विधिलिङि वीयात् वीयाताम् वीयुः इत्यादि-रूपाणि प्रयोज्यानि, शतरि तु वियदिति प्रातिपादिकं निष्पद्यते। तदित्थं सार्वधातुके 'वी' धात्वन्तरं प्रयुज्यते, न तु व्यादेशः। स तु आर्धधातुकविषय एव, तत्र नान्यो 'वी' धातुः प्रयोगार्हः।

**दीर्घान्त-आदेशः -**

अजेः व्यादेशोऽयं दीर्घेकारान्तः 'वी' इति। यद्यपि प्रवेता, प्रवेतुम् इत्यादौ तृचि तुमुनि वा आदेशस्य ह्रस्वान्तत्वेऽपि सार्वधातुकार्धधातुकयोरिति गुणेन रूपसिद्धौ नास्ति कश्चन दोषः, तथापि संवीतो रथः, संवीतिः इत्यादौ किति आर्धधातुके दीर्घेकारश्रवणाय दीर्घान्तोऽयमादेशः आवश्यकः। संवीतो वेष्टित इत्यर्थः; 'वेष्टितं स्याद् वलयितं संवीतं रुद्धमावृतम्' (अमर. 3.1.90) इति कोषात्। संवीतिः आवरणम्।

**अघञपोः व्यादेशः -**

घञपौ आर्धधातुकौ प्रत्ययौ, तयोर्विषये अजेर्व्यादेशो न, तेन समाजः उदाजः समजः उदजः इत्यादिपदानि निष्पद्यन्ते। तत्र 3246 'समुदोरजः पशुषु' (3.3.69) इत्यनेन पशुविषये समुदाये प्रेरणे च समुत्पूर्वकाद् अज्-धातोः अप्प्रत्ययो विधीयते। पशूनां संघः समजः, पशूनां प्रेरणम् उदजः उद्वास इत्यर्थः। पशुविषयाद् भिन्नेऽर्थे घञि सति समाजः ब्राह्मणानाम्, उदाजः इत्यादिषु अज्-धातोरेव प्रयोगः, न व्यादेशस्य।

किञ्चास्मादेव सम्पूर्वाद् अज्-धातोः क्यपि सति समज्या शब्दोऽपि निष्पद्यते। समज्या सभा इत्यर्थः। क्यपः आर्धधातुकत्वेऽपि नेह अजेर्व्यादेशः। तत्र केचन वैयाकरणाः 'घञपोः' इत्यत्र अपः अकारात् क्यपः इत्संज्ञकपकारान्तम् 'अप्' प्रत्याहारं व्याख्याय समादधते, परं नेदं समाधानं युक्तियुक्तम्; अप्क्यपोर्मध्ये क्तिनः सद्भावात्। तथा सति क्तिन् विषयेऽपि व्यादेशो दुर्लभः स्यात्। तदुक्तं भाष्ये 'यदि प्रत्याहारः संवीतिः न सिद्ध्यति' इति। अतः प्रत्याहारकल्पना सर्वथा भाष्यविरुद्धेति स्पष्टम्।

अपि च 'अजेर्व्यघञपोः' इति सूत्रभाष्ये 'प्राजनम् समजनम् उदजनम्' इत्युदाहरता भाष्यकृता ध्वनितं यल्ल्युटि अपि व्यादेशो नेष्टः। अत एव भाष्यकारः 'घञपोः प्रतिषेधे क्यप उपसंख्यानं कर्तव्यम्' इति वार्तिकं प्रत्याख्याय सूत्रमन्यथा व्याख्यातवान्। तदुक्तं भाष्ये—एवं तर्हि नार्थ उपसंख्यानेन नापि घञपोः प्रतिषेधेन। इदमस्ति 'चक्षिङः ख्याञ्' 'वा लिटि' इति। ततो वक्ष्यामि 'अजेर्वी', अजेर्वीभावो भवति वा। व्यवस्थितविभाषा 'वा' इति। तेनेह च भविष्यति—प्रवेता, प्रवेतुम्, प्रवीतो रथः, संवीतिः। इह च न भविष्यति-समाजः समजः, उदाजः उदजः, समजनम् उदजनं समज्येति। एवञ्च भाष्यकारः 'अजेर्वी' इत्येव सूत्रस्वरूपमङ्गीकृत्य 'अघञपोः' इति सूत्रांशम् 'क्यपः उपसंख्यानम्' इति वार्तिकं च प्रत्याख्यातवान्। तथा इह सूत्रे 'वा लिटि' इति पूर्वसूत्राद् 'वा' इत्यनुवर्त्य सूत्रमिदं व्यव-स्थितविभाषामङ्गीचकार, तेनेष्टरूपसिद्धिः जायते। रत्नाकरेऽयमेव पक्षः सिद्धान्तितः। बाल-मनोरमाकारोऽपि अमुमेव पक्षं कुक्षीकृत्य सूत्रं व्याख्याति—'वा लिटि' इत्यतो वेत्यनुवर्तते। व्यवस्थितविभाषेयम्' इति। तदित्थं भाष्योक्तेन व्यवस्थितविभाषाश्रयणेन घञि, अपि, क्यपि, ल्युटि च व्यादेशो न भवतीति रत्नाकरपक्षः।

**दीक्षितमतप्रत्याख्यानम् -**

इह सूत्रे भाष्ये व्यवस्थितविभाषाफलमुदाहरन् भाष्यकारः प्राह—'इदमपि सिद्धं भवति प्राजितेति।' इतः पूर्वं तेन 'प्रवेता' इत्युदाहृतम्। एवञ्चेह भाष्यकारः तृचि विभाषया व्यादेशं मत्वा 'प्रवेता-प्राजिता' इति रूपद्वयम् उदाहरति। तत्र प्रवेता गमनाद्याश्रयबोधकं विशेषणपदम्, प्राजिता पुनः सारथेर्वाचकः संज्ञाशब्दः; 'नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः।' (अमर. 2.8.59) इति। इह भाष्यकारः सूतवैयाकरणयोः श्रवणीयं संक्षिप्तं संवादमपि मनाग् ग्रथ्नाति, यथा-

'किं च भो इष्यते एतद् रूपम्? बाढम्, इष्यते।

एवं हि कश्चिद् वैयाकरण आह- 'कोऽस्य रथस्य प्रवेता?'

सूत आह- अहमस्य रथस्य प्राजिता।

वैयाकरण आह- अपशब्दः इति।

सूत आह- प्राप्तिज्ञो देवानांप्रियः, न तु इष्टिज्ञः। इष्यते एतद् रूपम्।

वैयाकरण आह- अहो नु खलु, अनेन दुरुतेन बाध्यामहे।

सूत आह- न खलु वेञः सूतः, सुवतेरेव सूतः। यदि सुवतेः कुत्सा प्रयोक्तव्या, दुःसूतेन इति वक्तव्यम्।

इह प्रसङ्गे भाष्यकारेण उक्तस्य 'इदमपि सिद्धं भवति' इति वाक्यस्य 'इदमपि' इति प्रतीकमादाय प्रदीपे कैयटः प्राह-'वलादावार्धधातुके विकल्पः सिद्ध्यतीति भावः' इति। इमामेव कैयटोक्तिम् आधारीकृत्य दीक्षितः शब्दकौस्तुभे सिद्धान्तकौमुदीग्रन्थे च रचयामास वार्तिकम्-'**वलादावार्धधातुके वेष्यते**' इति। तेन न केवलं तृचि, अपितु सर्वेषु लिडादिषु आर्धधातुकलकारेषु वलादिप्रत्यये परे अज्-धातोर्विकल्पेन व्यादेशोऽङ्गीकृतः। तथा च वलादावार्धधातुके व्यादेशाभावपक्षे आजिथ, आजिव, आजिम, अजिता, अजिष्यति, आजीत्, आजिष्यत् इत्यादीन्यपि अज्-धातोः रूपाणि दीक्षितसम्मतानि कौमुद्यामुदाहृतानि सन्ति। परमेतानि रूपाणि रत्नाकरे नाङ्गीकृतानि।

वस्तुतस्तु 'वलादावार्धधातुके वेष्यते' इति वार्तिकं भाष्ये नोपलभ्यते। वार्तिकमिदं तत्र स्याच्चेत्तर्हि अनेनैव तृचि व्यादेशविकल्पविधानेन 'प्रवेता-प्राजिता' इति रूपद्वयसिद्धौ भाष्यकारस्य व्यवस्थितविभाषाश्रयणं निष्फलं स्यात्। अतः कैयटस्य इदमपीति प्रतीके स्वकीयोत्प्रेक्षा 'वलादावार्धधातुके विकल्पः सिद्ध्यति' इति निर्मूला प्रतिभाति। अत एव भाष्ये संवीतः, संवीतिः, प्रवेतुम् इत्येव उदाहृतम्। अन्यथा वलादित्वात् समजितः, समजितिः, समजितुम्, इत्याद्यपि उदाहरेत्, 'प्राजिता-प्रवेता' इत्यादिवत्।

वस्तुतस्तु तस्मिन् भाष्यवाक्ये इदमिति इदमा 'प्राजिता-प्रवेता' इतीमौ शब्दौ एव निर्दिश्येते; पूर्वापरवाक्ययोः 'प्राजिता' शब्दस्यैवोल्लेखात्। किंच तत्र 'इदमिति.' वाक्यात्परमेव 'प्राजिता' इति शब्दमाश्रित्य वर्तते सूतवैयाकरणसंवादः। अतस्तत्र प्रतीके कैयटस्य वलादौ व्यादेशविकल्पकल्पना सर्वथा प्रकरणविरुद्धैव सिद्ध्यति। अत एव उद्योते तत्र नागेशोऽपि मौनायते। अत एव दीक्षितमतमिह भाष्यविरुद्धमप्रामाणिकं प्रतीयते।

अपि च शब्दकौस्तुभे दीक्षितः अग्रिमं सूत्रम् 3292 'वा यौ' (2.4.57) ल्युड्-विषयकं मत्वा व्याख्याति ल्युडादिप्रत्यये विकल्पेन व्यादेश इति। 'प्राजनम्-प्रवयणम्' इति। पुनश्च स ल्युटि व्यवस्थितविभाषया व्यादेशविकल्पं मत्वा सूत्रमिदं प्रत्याख्याति। रत्नाकरव्याख्याने दीक्षितस्य एतत्त्रितयमपि अज्ञानविजृम्भितमुक्तम्। तद्यथा

**प्रथमम्**—भाष्यकारेण सूत्रमिदं ल्युड्विषयकं नाङ्गीकृतम्।

**द्वितीयम्**—भाष्यकारः सूत्रमिदं न प्रत्याख्याति, प्रत्युत 'युप्रत्यये अजेः 'वा' इत्यादेश' इति सूत्रार्थं विधाय अजतीति विग्रहे अज् धातोरौणादिकेन **यजिमनिशुन्धिदसिजनिभ्यो युच्** (300) इति सूत्रेण बाहुलकाद् युच्प्रत्यये अजेर्वादेशेन वायुः इति शब्दं निष्पादयति। इह 'वा' इति न विकल्पबोधकः, प्रत्युत आदेशस्वरूपबोधकः। एवञ्च सूत्रमिदं सफलम्।

**तृतीयम्**—अजेर्ल्युटि अजनम्, प्राजनम्, समजनम्, उदजनम् इत्येव भाष्ये उदाहृतम्। एवञ्च इह ल्युटि भाष्यकृतो व्यवस्थितविभाषाश्रयणान्न व्यादेशः संमत इत्युन्नीयते। अत एव भाष्ये 'प्रवयणम्' इति नोदाहृतम्। अतः 'प्राजनम्-प्रवयणम्' इति विकल्पोदाहरणम् असाध्वेव।

एवञ्च 'वा यौ' इति सूत्रस्य ल्युड्विषयकत्वम्, प्रत्याख्यानम् अथ च ल्युटि व्यादेशविकल्पेन प्राजनम्-प्रवयणम् इति रूपद्वयं च दीक्षिताभिमतं न युक्तियुक्तम्; भाष्यविरुद्धत्वात्। अत एव रत्नाकरे खण्डितमेतद् दीक्षितमतम्। 'वा यौ' इति सूत्रस्य प्रत्याख्यानं त्वन्यैर्वैयाकरणैः 'वा' धातोः 'कृवापाजिमिस्वदिसाध्यशूभ्य उण् (1) इति सूत्रेण उणि 'आतो युक् चिण्कृतोः' इत्यनेन युगागमे वायुरिति शब्दं निष्पाद्य निष्फलत्त्वाद् अकारीति रत्नाकरोद्योतादौ निरूपितम्।

### विषयसप्तमीफलम् -

2292 अजेर्व्यघञपोः (2.4.56) इति सूत्रे 2432 'आर्धधातुके (2.4.35) इति सूत्रमधिकृतम्। तत्र अधिकृते आर्धधातुके विषयसप्तमी ग्राह्या, न तु परसप्तमी; व्याख्यानात्। अजेः इति इका निर्दिष्टं षष्ठ्यन्तं पदम्, अज् धातोरित्यर्थः। वी इति दीर्घान्तं लुप्तप्रथमाकं पदं बोध्यम्। 'आर्धधातुके' इति परसप्तम्याश्रयणे तु यङि 'वेवीयते' इति न स्यात्; वीभावात्प्राग् अज्-धातोः हलादित्वासम्भवेन 2629 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' (3.1.22) इत्यनेन यङोऽविधानात्। विषयसप्तम्याश्रयणे तु यङि विवक्षिते प्रत्ययं विनैव पूर्वं वीभावे सति हलादित्वाद् यङ् निर्बाधः। एवञ्च यङ्विधानं विषयसप्तमीफलम्। यङ्लुकि विवक्षिते तु न वीभावः, लुमता लुप्ते प्रत्ययलक्षणं न भवतीति सिद्धान्तात्। तदुक्तं 'न लुमताङ्गस्य' इति सूत्रे कैयटेन—'लुमता लुप्ते प्रत्यये यदङ्गं तस्य यत्कार्यं प्रत्ययाश्रयम् आङ्गमनाङ्गं वा तन्न भवति' इति। रत्नाकरेऽप्युक्तम्-'यङ्लुक्तु नात्र भवति; लुकाऽपहृतस्य यङो विषयत्वासम्भवात्। तच्चादेशोत्तरं भाव्युच्चारणक्रियाऽवश्याभिव्यङ्ग्यत्वम्। एतच्च 'न लुमता.' इति सूत्रे कैयटे व्यक्तम्। धात्वन्तरस्य तु आर्धधातुके प्रयोगो नास्ति' इति।

इत्थञ्च 'अजेर्व्यघञपोः' इति सूत्रेण आर्धधातुकविषये अजेर्वीभावो वलादाववलादौ च समानरूपेण विधीयते। तेन न हि तत्र कश्चन विशेष आपाद्यते वलादौ वा, अवलादौ नित्यमित्यादिरूपः। परं तत्र सूत्रे 'वा लिटि' इत्यतो 'वा' इत्यनुवर्त्य तेन व्यवस्थितविभाषां

चाश्रित्य तृचि प्रत्यये विभाषया वीभावः, क्यपि ल्युटि च वीभावनिषेधो विधेयः। तथा च लिटि आजिथ, ल्युटि प्रवयणम्, आर्धधातुकलकारान्तरेषु अजिता, अजिष्यति, आजीत् आजिष्यत् इत्यादीनि दीक्षितानाम् उदाहरणानि असाधून्येव; भाष्यविरुद्धत्वात्। तदेवं निष्कृष्य निबध्नाति कारिकया रत्नाकरकारः-

**तदित्थं भाष्यनिष्कर्षे वलादावविशेषतः।**
**वेत्युक्तिः कौस्तुभादौ सा न युक्तेहाजिथाद्यपि।।** इति।

निबन्धेऽस्मिन् विषयो यद्यपि लघीयांस्तथापि बालानां सुखबोधाय विस्तरशैलीम् आसेदिवान्, तेषामुपयोगाय प्रकृतधातुरूपजातमपि प्रचुरम् आसूतवान्, तेषाम् अभिरुचि-संवर्धनपूर्वकं विवक्षितविषये प्रवृत्तये धातुमहिमाख्यानप्रसङ्गे तद्व्यापकत्वं चाचकथम् अचिरम् अजगवेषं च। अनेन ममाध्ययनं दैनिकं समेधितम्, कालोऽपि शास्त्रचिन्तने संचितः, विदुषां जिज्ञासूनामनेन मनागपि मोदो भवेच्चेत्तर्हि सुवर्णः सुगन्धिः स्यादिति दिक्।

# लिङर्थविचारः

- डॉ. रामबदनपाण्डेयः
सहाकाचार्य, श्री एकरसानन्द आ.सं.म., मैनपुरी

**शोधपत्रेऽस्मिन् वैयाकरणभूषणमाधारीकृत्य लेखकेन भाष्यप्रमाणपुरस्सरं समीक्षणं कृतमिति।**

व्याकरणशास्त्रे दशलकाराः सन्ति–लट् लिट् लुट् लृट् लेट् लोट् लङ् लिङ् लुङ् लृङ् इति। तत्र लिङ्लकारविषये वैयाकरणनैयायिकप्रभाकराचार्यखण्डदेवादिभिः किमभिहित-मिति विचार्यते। तत्र प्रथमस्तावत् वैयाकरणमतम् उपस्थाप्यते –"विधिनिमन्त्रणामन्त्रणा-धीष्टसम्प्रश्नप्रार्थनेषु लिङ्[1]" इति पाणिनिसूत्रेण विध्यादिष्वर्थेषु लिङ्विधानेन लोके प्रयोगाच्च विध्यादिरेव विशेषेण लिङर्थ इति स्वीक्रियते। तत्र विधिर्नाम प्रेषणम् तच्च स्वापेक्षया निकृष्टस्य भृत्यस्य स्वाभिलषितेऽर्थे प्रवर्तनम्। इयमेवाज्ञा। एवञ्च "स्वर्गकामो यजेत्" इत्यादावप्रवृत्तप्रयोज्यस्य तदभिलषिताज्ञातोपायप्रदर्शनोपदेशोऽपि विधिरेव। निमन्त्रणम्-नियोगकरणम्। आवश्यके श्राद्धभोजनादौ स्वाभिलषिते प्रवर्तनमित्यर्थः।

तथाचोक्तं भाष्ये – "एवं तर्हि यन्नियोगतः कर्तव्यं तन्निमन्त्रणम्"[2] इति। आमन्त्रणञ्च-स्वाभिलषिते कामाचारेण प्रवर्त्य प्रवर्तनम्। कामचारश्च प्रवर्तस्यैव। एषैव कामचारानुज्ञा। अत एव निमन्त्रणामन्त्रणयोर्भेदं प्रतिपादयता–

पतञ्जलिनोक्तं- आमन्त्रणे कामाचारः[3]। व्याख्यातञ्च तत्रैव नागेशेनोद्योते – यत्र भोजनाद्यनुष्ठानेऽपि न प्रत्यवायस्तद्विषयाप्रवर्तनामन्त्रणमिति तात्पर्यम्। आमन्त्रणं कामचारानुज्ञा इति प्रतिपादितं कौण्डभट्टेनापि। अधीष्टः सत्कारपूर्वको व्यापारः। यथा माणवकमध्यापयेत्। इयमेवाभ्यर्थना। उक्तञ्च – अधीष्टन्नाम सत्कारपूर्विका व्यापारणा। सम्प्रश्नः सम्प्रधारणम्। प्रार्थना तु स्वाभिलषितदानप्रविवेकोक्तिः।

अत्रेदमवधेयम्–यद्यपि लिङ्विधायके सूत्रे षण्णामुपादानमस्ति किन्त्वाद्येषु विध्यादिषु चर्तुष्वन्यदीयप्रवृत्तिजननानुकूलव्यापारत्वरूपस्य प्रवर्तनात्वस्यानुस्यूतत्वात् प्रवर्तनात्वमेव विध्याद्य-र्थनिष्ठशक्यतावच्छेदकम् न तु प्रथक् पृथक् विधित्वादिकम् अनेकशक्यतावच्छेदके गौरवात् शक्तेर्नानात्वप्रसंगाच्च। तथा चोक्तम्–

1. पा. सू. 3/3/161
2. म.भा. – 3/3/161
3. म.भा. – 3/3/161

**अस्तिप्रवर्तनारूपमनुस्यूतं चतुर्ष्वपि**
**तत्रैव लिङ् विधातव्यः किं भेदस्य विवक्षया।**
**न्यायव्युत्पादनार्थं वा प्रपंचार्थमथापि वा**
**विध्यादीनामुपादानञ्चतुर्णामादितः कृतम्।।**

नागेशेनाप्युक्तं – तत्र विध्यादिचतुष्टयानुस्यूतप्रवर्तनात्वेन चतुर्णां वाच्यता, लाघवात्। कैयटेनापि सिद्धान्तोऽयं प्रतिपादितः प्रदीपे[1]। प्रपञ्चार्थं न्यायव्युत्पादनार्थं वार्थभेदमाश्रित्य भेदेनोपादानं विधिनिमन्त्रणादीनां कृतम्। विधिरूपता हि सर्वत्राऽन्वयिनी विद्यते इति। तत्र प्रपञ्चार्थमित्यस्याशयं प्रतिपादयता पंचोलिनोक्तं प्रपंचार्थमिति[2]। प्रवर्तनात्वस्य शक्यतावच्छेद-कत्वेन रूपेण विध्यादिष्वेव शक्तिरिति विस्तरेण ज्ञानार्थमिति भावः। एवञ्च प्रवर्तनात्वेनैव विध्यादीनां वाच्यतेति वैयाकरणसिद्धान्तः। एवञ्च प्रवर्तनारूपो व्यापार इष्टसाधनत्वरूप एव। लोके सर्वपुरुषः– "इदं क्रियमाणं मदिष्टसाधनमिति संप्रधार्यैव" प्रवर्तत इति सर्वजनीनोऽयमनुभवः। प्रयोजकवाक्यश्रवणसमनन्तरं प्रयोज्यवृद्धस्य प्रवृत्तिं दृष्ट्वा पार्श्वस्थः बालः स्वप्रवृत्तिसाधनेन इष्टसाधनताज्ञानमनुमिनोति। प्रयोज्यवृद्धस्यास्मिन् कर्मणि प्रवृत्ति इष्टसाधनताज्ञानपूर्विका प्रवृत्तित्वात् मदीयप्रवृत्तिवत्। एवमिष्टसाधनताज्ञानेऽनुमितौ तज्ज्ञानस्य कारणं किमिति जिज्ञासायां तज्ज्ञानस्य लिङ्घटितवाक्यश्रवणसमनन्तरभावित्वात् तस्मिन् ज्ञाने तद्वाक्यजन्यत्वमवधारयति। एवञ्च लिङादिशब्दादेव तस्य प्रतीयमानत्वात् इष्टसाधनत्वस्य लिङ्वाच्यत्वं तस्य प्रवर्तकत्वाच्च प्रवर्तनारूपत्वमिति निश्चिनोति। तस्मादिष्टसाधनत्वमेव प्रवर्तनात्वरूपेण विध्यर्थ इति वैयाकरणसम्मतिः।

अभिहितञ्च कौण्डभट्टेन– "प्रवर्तनात्वञ्च प्रवृत्तिजनकज्ञानविषयतावच्छेदकत्वम्,[3] तच्चेष्टसाधनत्वस्यास्तीति तदेव विध्यर्थः"। नागेशेनापि स्वीकृतोऽयं पक्षः– "प्रवर्तनात्वञ्च प्रवृत्तिजनकज्ञानविषयतावच्छेदकत्वं तच्चेष्टसाधनत्वस्यैवेति तदेव लिङर्थः"। यद्यपीष्ट-साधनेऽपि चन्द्रमण्डलाद्यानयने एवं वृत्तिरूपेष्टसाधनेऽपि कृतिसाध्यमधुविषसम्पृक्तान्नभोजने च प्रवृत्त्यभावदर्शनात् प्रवर्तकज्ञानविषयतावच्छेदेन कृतिसाध्यत्वस्य बलवदनिष्टानुबन्धित्वस्य च विध्यर्थत्वं वाच्यम्, तथापि कृतिसाध्येऽपि वस्तुनि वृथाश्रमजनतयेष्टजनकत्वाभावज्ञानेन द्वेषात् प्रतिबन्धकसत्वाद् वा प्रवृत्यभावदर्शनात् व्यभिचारः। एवञ्चास्तिककामुकस्य परस्त्रीगमने नरकादिबलवदनिष्टानुबन्धित्वेऽपि रागौत्कट्यात् प्रवृत्तिदर्शने व्यभिचारः।

एवञ्च अन्वयव्यतिरेकव्यभिचाराभ्यां कृतिसाध्यत्वबलवदनिष्टानुबन्धित्वयोः प्रवृत्ति-प्रयोजकत्वाभावेन प्रवर्तनात्वाभावात् न लिङ्वाच्यत्वम्। तथा चोक्तन्नागेशेन "न तु कृति-साध्यत्वं[4] तस्य यागादौ लोकत एव लाभादित्यन्यलभ्यत्वात्। न च बलवदनिष्टानुबन्धित्वं

---

1. महाभाष्यम् 3/3/161
2. वैयाकरणभूषणसारः प्रभा टीका पृष्ठ-154
3. परमलघुमञ्जूषा लकारार्थविचारः पृष्ठ सं-77
4. परमलघुमञ्जूषा लकारार्थविचारः पृष्ठ सं-77

द्वेषभावेनान्यथासिद्धत्वात्" इति। इमा एव पंक्तयः कौण्डभट्टेनाप्युद्धृता वैयाकरणभूषण-सारस्य लकारार्थनिर्णये 157-185 पृष्ठे अतः तेषां मतेऽपि कृतिसाध्यत्वस्य बलवदनिष्टा-नुबन्धित्वस्य वा लिङ्वाच्यत्वन्नास्ति अपितु इष्टसाधनत्वस्यैवेति। मण्डनमिश्रैरप्यस्मिन्नेवार्थे सम्मतिः प्रकटिता।

**पुंसां नेष्टाभ्युपायत्वात् क्रियास्वन्यः प्रवर्तकः।**
**प्रवृत्तिहेतुं धर्मञ्च प्रवदन्ति प्रवर्तनाम्।।**[1]

एवञ्चेष्टसाधनत्वस्यैव लिङ्वाच्यत्वमेवेति वैयाकरणानां सर्वसम्मतः सिद्धान्तः।

**नैयायिकानां मतम्-**

नैयायिकास्तु बलवदनिष्टानुबन्धित्वम् इष्टसाधनत्वं कृतिसाध्यत्वञ्च तत्तद्धात्वर्थगतं विध्यर्थमिति स्वीकुर्वन्ति। तथा चोक्तम्- "किन्तु प्रवर्तकचिकीर्षायां[2] यत्प्रकारज्ञानस्य हेतुत्वं स तथा तादृशञ्च" कृतिसाध्यत्वमिष्टसाधनत्वं बलवदनिष्टानुबन्धित्वञ्च प्रत्येकमेव यागपाकादिधर्मिकतन्निश्चयादेव यागादिधर्मिकचिकीर्षोत्पत्या तत्र प्रवृत्तेः। एवञ्च यजेत पचेतेत्यादौ यागः कृतिसाध्येष्टसाधनो बलवदनिष्टानुबन्धी च इत्याकारको बोधः।

अयम्भावः लोके सर्वत्र चेतनस्य प्रवृत्तावुपर्युक्तं त्रयमप्यपेक्ष्यते। अन्यथेष्टसाधनत्व-बलवदनिष्टाननुबन्धित्वयोस्सत्वेऽपि कृतिसाध्यत्वज्ञाने सुमेरुशृंगहारणादौ प्रवृत्तिर्न दृश्यते। विषसम्पृक्तमध्वन्नभक्षणादौ क्षुधानिवृत्तिरूपेष्टसाधनताज्ञानकृतिसाध्यताज्ञानयोस्सत्वेऽपि मरण-सम्पादकत्वेन बलवदनिष्टजनकत्वेन तत्र पुरुषाणां प्रवृत्तिर्न दृश्यते। तथा निष्प्रयोजने जलताडनादौ बलवदनिष्टाजनकत्वकृतिसाध्यत्वयोर्ज्ञानेऽपि इष्टसाधनत्वाभावेन तत्र पुंसां प्रवृत्तिर्न दृश्यते। तत्र उक्तत्रयं विदित्वैव त्रयाणामेव प्रवृत्तिजनकज्ञानविषयतावच्छेदकत्वेन विध्यर्थन्तु अस्वीकरणीयम्। प्रतिपादितञ्चैतत् सर्वशब्दशक्तिप्रकाशे पंगुः समुद्रं न तरेदित्यादौ नञादिना समुद्रतरणादेः पंगुप्रभृतिकृतिसाध्यत्वनिषेधत्वनिषेधबोधानुरोधात् अवश्यं लिङर्थः। तृप्तिकामो जलं न ताडयेदित्यादौ तृप्तिकामेष्टसाधनत्वस्य न कलञ्जं भुञ्जीतेत्यादौ च कलञ्जभक्षणादेर्बलवदनिष्टाजनकत्वस्य निषेधानुपपत्या इष्टसाधनत्वादिकमपि इति।

व्युत्पत्तिवादेऽपि गदाधरेण त्रयाणां प्रवर्तकज्ञानविषयत्वं स्वीकृतम्। तथा हि- "विधिः[3] प्रवर्तकज्ञानविषयो धर्मः स च धर्मो न्यायनये कृतिसाध्यत्वबलवदनिष्टानुबन्धित्व-सहितमिष्टसाधनत्वञ्च।" एवञ्च कृतिसाध्यत्वबलवदनिष्टाननुबन्धित्वेष्टसाधनत्वादित्रयाणामपि विध्यर्थत्वमित्यत्र नास्ति मतभेदः प्राचीननव्ययोः। किन्तु तत्र त्रिष्वर्थेषु पृथक् पृथक् शक्तिः अथवा त्रितयानुगतैकैव शक्तिरित्यत्र विवादो दृश्यते प्राचीननव्ययोः। तत्र बलवदनिष्टा-जनकत्वादीनां त्रयाणां कस्य विशेष्यत्वं कस्य विशेषणत्वमित्यत्र विनिमगनाविरहात् त्रिष्वर्थेषु

---

1. विधिविवेकः भलोकः
2. शब्दशक्तिप्रकाशिका पृष्ठ सं. 410
3. व्युत्पत्तिवादः पृष्ठ सं. 346

पृथगेव शक्तिः। एवञ्च पृथक्शक्तिस्वीकारेऽपि यथा सकृत् श्रुतस्य पुष्पवन्तपदस्य युगपदेव सूर्यचन्द्ररूपानेकार्थबोधनम् तथैव सकृत् श्रुतस्य लिङादेरर्थत्रयबोधकत्वमुपपद्यते। अतः पृथगेव शक्तिरिति नवीनाः। प्राचीनास्तु वाचकशब्दनिष्ठशक्तेर्वाच्यार्थनिरूपिताश्च यथा वाचकानेककृतं नानात्वं तथैव वाच्यानेककृतमपि नानात्वं प्रसज्येत अतः पुष्पवन्त इत्यादौ दिवाकरनिशाकरयोरिव अत्रापि त्रिष्वर्थेष्वेकशक्तिस्वीकारेऽपि न दोष इति कथयन्ति।

**नैयायिकमतखण्डनम्-**

न कलञ्जं भक्षयेत् इत्यादौ कलञ्जभक्षणम् इष्टसाधनत्वाभाववत् कृतिसाध्याभाववच्च इति अनुभवाभावात् तत्र नञ् बलवदनिष्टानुबन्धित्वमात्रस्याभावं बोधयति। एवञ्च तत्र तस्यैव लिङर्थत्वं सम्भवति अन्येषामपि लिङर्थत्वेऽन्वयानुपपत्तिः। यदि तेषामपि लिङर्थत्वम् तर्हि तेषां धात्वर्थ एवान्वयः स्वीकरणीयः। एवञ्च एकस्य नञर्थेऽन्वयः अन्ययोर्धात्वर्थ इति बलवदनिष्टानुबन्धित्वस्यापि असत्वे जिधात्वर्थे तत्सत्वे च नञर्थे इति गुरुभूतानेक-समभिव्याहारज्ञानघटितकार्यकारणभावकल्पनापत्तिः। एवं "घटो नास्ति" इत्यादौ लिङादि-समभिव्याहाराभावे नञर्थस्याभावस्य प्रथमान्तपदोपस्थाप्याश्रयेऽन्वयः लिङादिसमभिव्याहारे च धात्वर्थ एव। एवमेवाख्यातार्थस्य कृत्यादेः नञोऽसत्वे प्रथमान्तपदोपस्थाप्य एव आश्रयता-सम्बन्धेनान्वयः तत्सत्त्वे तु तदर्थे प्रतियोगिताकत्वसम्बन्धेनेत्यनेकव्युत्पत्तिकल्पनायामनेके कार्यकारणभावाः कल्पनीयाः। अतः ज्ञानगौरवादुपेक्षणीयं नैयायिकमतमिति।

**प्रभाकरमतम्**

प्रभाकरस्तु स्वविशेषणवत्ताज्ञानजन्यकार्यताज्ञानस्यैव प्रवर्तकत्वं स्वीकरोति। त्रयाणां कारणत्वकल्पनायां कार्यकारणभवत्रयकल्पनायां गौरवात्। उक्तम्- प्रभाकरमतमनुपादयता विश्वनाथपञ्चाननभट्टाचार्येण कार्यताज्ञानं प्रवर्तकमिति गुरवः। अयम्भावः तत्र कार्यताज्ञानं द्विविधम्। पदार्थनिष्ठयोग्यताज्ञानजन्यं मयेदं कर्त्तुं शक्यमित्येकम्, स्वेष्टसाधनत्वबलवद-निष्टानुबन्धित्वज्ञानजन्यं ममेदमवश्यं कार्यमिति द्वितीयम्। इदमेव विशेषणवत्ताज्ञानं प्रतिसन्धान-जन्यम्। स्वं नियोज्यः तद्विशेषणकाम्ये फलकामना। अतः स्वेष्टसाधनत्वबलवदनिष्टानुबन्धित्व-ज्ञानजन्यकार्यताज्ञानं चिकीर्षाद्वारा प्रवर्तकमिति सिध्यति। प्रवर्तकत्वेन च तस्यैव विध्यर्थत्वम्।

एवञ्च कार्यत्वमेव विध्यर्थः। तृप्तिकामः पचेत् इत्यस्य तृप्तिकामनियोज्यं पाककार्यमिति बोधः। एवं "शुचिः सन्ध्यामुपासीत्" इत्यादिवैदिकविधौ वेदाधीनकार्यताज्ञानात् योग्यता। तथा च शुचिनियोज्यकसन्ध्यावन्दनादिकं कार्यमिति बोधः।

भाट्टमते तु लिङादिशब्दनिष्ठप्रवर्तना विध्यर्थः। प्रवृत्तिश्च द्वेधा स्वेच्छाधीना पराधीना च। तत्राद्यायामिष्टसाधनत्वधीः कारणम् अन्त्यायां राजगुर्वादेराज्ञा प्रेरणाधीः। राजा अनिच्छन्तं मां प्रेरयति इत्यनुभवात्। प्रवर्तना च प्रवर्तयितुः परप्रवृत्यनुकूलो व्यापारविशेषः। स च चेतनस्य राजादेराज्ञादिः। अपौरुषेये वेदे तु वक्तुरभावादचेतनस्य वेदस्याभिधानात्मकः कश्चित् शब्दसमवेतोऽलौकिकव्यापारः। तस्य च शब्दनिष्ठत्वात् शब्दकारणत्वाच्च शाब्दी-

भावनेत्युच्यते। तस्याः प्रवर्तनात्वेन ज्ञानवद्विषयकशक्तिग्रहश्च प्रयोज्यप्रयोजकवृद्धव्यवहारादेव। तत्रापि वृद्धव्यवहारवाक्यात् तादृशे ज्ञाने जातेऽप्यावापोद्वापाभ्यां पदानां लिङंशे शक्तिः सिद्ध्यति।

### आचार्यखण्डदेवमतम्

रहस्यकृताऽऽचार्यखण्डदेवेन लिङर्थनिरूपणावसरे पक्षत्रयमुपन्यस्तं भाट्टतन्त्र-रहस्यात्मके ग्रन्थे। तत्र प्रवृत्यनुकूलो व्यापारः प्रवर्तनेति प्रथमपक्षः। अयमत्र प्रवर्ततामित्याकारक-त्वरूपविषयिताविशेषः पुरुषाभिप्रायालौकिकोभयसाधारण इति द्वितीयः पक्षः। जातिविशेष इच्छात्वमेव लिङ्शक्यमिति तृतीयः पक्षः। पक्षत्रयेऽस्मिन् इच्छाया एव लिङर्थत्वं स्वीकरोति खण्डदवः।

वस्तुतस्तु इच्छात्वं[1] जातिरेव लिङादिशक्यतावच्छेदिका लाघवात् इति। एवं लिङर्थ-मिच्छेति स्वीकृत्य तत्पक्षेऽपि यदीच्छा आत्ममात्रनिष्ठा नानाचेतननिष्ठेति विभाव्यते तदौपनिषद-मीश्वरमप्यङ्गीकृत्य तदीयेच्छैव लिङर्थ इति मतान्तरं खण्डयन् खण्डदेवः आह-- "लोके लिङादेरिच्छायां शक्तिः वैदिकस्य लिङादेः अलौकिकप्रेरणायां लक्षणा" इति।

1. भाट्टतन्त्ररहस्यम् पृष्ठ सं. 22

संस्कृत-विमर्शः 2016 (अङ्कः-11) ISSN : 0975-1769

# वैदिक यज्ञ और विज्ञान

- डॉ. सुमन शर्मा
(पी.डी.एफ.), गोहाना रोड़, सोनीपत, हरियाणा

**प्रस्तुत निबन्ध में लेखक ने वैदिक यज्ञ और विज्ञान का अन्तर्सम्बन्ध प्रस्तुत किया है।**

भारतीय परम्परा के अनुसार वेद ज्ञान-विज्ञान के अनन्त भण्डार हैं। वैदिक धर्म, दर्शन, साहित्य तथा संस्कृति के स्वरूप का यथातथ्य विश्लेषण तब तक सम्भव नहीं है जब तक 'यज्ञ' को नहीं जान लेते। यह एक व्यापक शब्द है, जो सृष्टि के कण-कण में व्याप्त हैं। ऋग्वेद में यह शब्द पाँच सौ अस्सी बार, यजुर्वेद में दो सौ तैंतालीस बार, सामवेद में तिरसठ बार तथा अथर्ववेद में दो सौ अड़सट बार अर्थात् चारों वेदों में यह एक हजार एक सौ चौरासी बार प्रयोग हुआ है। 'यज्ञ' शब्द देवपूजा, सङ्गतिकरण और दान अर्थवाली √ यज् धातु से से नङ् प्रत्यय करके निष्पन्न हुआ है जिस कर्म में परमेश्वर का पूजन, विद्वानों का सत्कार, सङ्गतिकरण अर्थात् मेल और हवि आदि का दान किया जाता है, उसे यज्ञ कहते है[1]। आचार्य सायण के मतानुसार **उद्दिश्य देवतां द्रव्यत्यागो यागोऽभिधीयते**[2] अर्थात् देवता विशेष के लिए अग्नि में हव्य पदार्थों का त्याग करना यज्ञ कहलाता है। निघण्टु (3.17) के अनुसार यज्ञ को अध्वर, मेघ, सवनम्, अग्निहोत्र, देवता, इष्टि, इन्द्र, प्रजापति, धर्मादि नामों से पुकारा जाता है। ऋग्वेद तथा यजुर्वेद में यज्ञ को प्रथम धर्म कहा गया है।[3] **यज्ञो वै श्रेष्ठतमं कर्म** के आधार पर ही सम्पूर्ण मानव जीवन यज्ञमय बतलाया गया है। अग्नि में हविद्रव्य की आहुति देना यज्ञ का स्थूल स्वरूप है। यज्ञ का व्युत्पत्तिपरक अर्थ इसके व्यापक रूप को प्रकट करता है। यज्ञ का स्वरूप 'यज्ञ विज्ञान' है इसके आधार पर ही मानव द्वारा आध्यात्मिक तथा आधिभौतिक यज्ञ की व्याख्या सम्भव है। यज्ञीय पद्धति ही मानव की वास्तविक जीवन पद्धति है। यह पद्धति ब्रह्माण्ड की प्रक्रिया के साथ-साथ पिण्डरूप मानव देह में भी निरन्तर चलती रहती है

---

1. यज देवपूजासङ्गतिकरणदानेषु, भ्वादि 'यजयाचयतविच्छप्रच्छरक्षो' नङ् प्रत्यय। अष्टाध्यायी, पाणिनी, 3.3-90
2. तै.स., 3.5.11.5, ऐ.ब्रा., 1.1.7
3. यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्।
तेह नाकं मर्हिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः।। ऋ. 1.164.50, 10.90.16, यजु. 31.16

जो भौतिक रूप में लोक व्यवहार के लिए भी नितान्त आवश्यक है। इस प्रकार यज्ञ मुख्यत: ब्रह्माण्डीय, पिण्ड तथा भौतिक तीनों स्तरों पर सम्पादित किया जाता है।

### यज्ञ और ब्रह्माण्ड

ब्रह्माण्ड का अर्थ है ब्रह्म का अण्ड। यह जो चराचर जगत् दृष्टिगोचर हो रहा है उसे ब्रह्माण्ड कहते है। वैज्ञानिक जगत् इसको अण्डाकार मानते है इसलिए विश्व की संज्ञा ब्रह्माण्ड है। संस्कृत हिन्दी कोश में ब्रह्माण्ड को एक अण्डाकार भुवनकोष कहा गया है जिसके भीतर से यह सारा जगत् उत्पन्न हुआ है।[1] यज्ञ एक ब्रह्माण्डीय व्यवस्था है। यही ब्रह्माण्ड का केन्द्र बिन्दु एवम् उद्‌भवस्थल है।[2] यज्ञ से अखिल ब्रह्माण्ड उत्पन्न हुआ है तथा सदैव यज्ञ में ही प्रतिष्ठित रहता है। यज्ञ विश्व का भरण-पोषण करता है तथा सृष्टि के अन्त तक स्थिर रहता है क्योंकि सृष्टि का कारण भी यही है।[3] पञ्च-भूतात्मक ब्रह्माण्ड के समान पञ्चावयव यज्ञ की व्याख्या की गई है।[4] सायण ने ऐतरेय ब्राह्मण के उद्धरण को स्पष्ट करते हुए यज्ञ के हविष्पङ्क्ति आदि भेदों के आधार पर पञ्चसंख्यात्मक स्वरूप में स्पष्ट किया है प्राण-आप-वाक्-अन्न-अन्नाद, स्वयंभू, परमेष्ठी, सूर्य-चन्द्र एवं पृथिवी भेदेन यज्ञ पाङ्क्त है[5] अर्थात् पञ्चावयव है। शतपथ ब्राह्मण में तृतीय काण्ड के द्वितीय खण्डानुसार सवंत्सर में भी वसन्त, ग्रीष्म वर्षा, शरद् एवं हेमन्त तथा शिशिर भेद के पाँच ऋतुएँ हैं। हेमन्त और शिशिर को एक मानकर पाँच ही ऋतुएँ संवत्सर में होती हैं। 72-72 दिनों की एक ऋतु अरत्नियों के परिमाण का ही यज्ञहेतु काटना चाहिए। जूलियस एगलिङ्ग महोदय ने अनुवाद करते हुए यज्ञ को पञ्चावयव कहा है - Fivefold is the sacrifice.[6] स्थूल दृष्टि से देखने पर तो यज्ञ बाह्य कर्मकाण्ड प्रतीत होता है परन्तु यह गुह्य रहस्य का प्रतीक है। यह कर्मकाण्ड मात्र नहीं प्रत्युत ब्रह्माण्ड में कार्यरत प्रकृति की अनन्त शक्तियों में परस्पर समन्वय एवं सामञ्जस्य स्थापित करने के लिए ऊर्जा प्रदान करता है। सभी तत्त्वों के अधिष्ठातृ देवता ब्रह्माण्डीय मुख्य तत्त्व है और यज्ञ देवताओं का वह आवास है जो असुरों द्वारा कभी भी नष्ट नहीं किया जा सकता है।[7] यज्ञ सभी भूतों एवं देवताओं की आत्मा है।[8]

---

1. संस्कृत शब्दार्थ-कौस्तुभ, पृ. 835.
2. अयं यज्ञः भुवनस्य नाभिः। ऋ. 1.63.35
   यज्ञः बभूव भुवनस्य नाभिः। तै.ब्रा., 2.4.7.5
3. यज्ञ एव अन्ततः प्रतितिष्ठतिः। तै.ब्रा., 1.8.12
   ब्रह्म नित्यं यज्ञे प्रतिष्ठितम्। गीता, 3.15
4. पाङ्क्तो वै यज्ञः। श.ब्रा., 3.6.4.17; ऐ.ब्रा., 2.3.6
5. यो वै यज्ञे हविष्पङ्क्ति वेद। ऐ.ब्रा. 2.3.6
6. Eggeling, The Satapatha-Brahmana, Part-II, p.166.
7. एतत् खलु वै देवानामपराजितमायतनम्। यद्यज्ञः। तै.ब्रा., 3.3.7.7
8. सर्वेषां वा एष भूतानां सर्वेषां देवानामात्मा यद्यज्ञः। श.ब्रा. 14.3.2.1

आदित्य निरन्तर प्रकृति से सोमरूपी अन्न की आहुति ग्रहण करता रहता है तथा आदित्य समृद्ध रहता है। यह प्रक्रिया ब्रह्माण्ड में सतत् चलती रहती है इसलिए जगत् को 'अग्नीषोमात्मक' यज्ञ कहा गया है। ऐतरेयब्राह्मण[1] के अनुसार जो अग्निस्तोम है वह साक्षात् अग्नि ही है देवों ने उस अग्नि की स्तोम से स्तुति की इसलिए इसका नाम 'अग्निस्तोम' हुआ। अग्निस्तोम होते हुए उसको परोक्ष रूप से 'अग्निष्टोम' नाम से पुकारते हैं क्योंकि देव तो परोक्षप्रिय ही होते हैं। यहाँ स्तोम शब्द से 'स्तोम श्लाघायाम्' धातु का संकेत है। वर्णसंयोग के कारण यहाँ स्तोम के दन्त्य 'स्तो' को 'ष्टो' हो गया है। ब्राह्मणकार ने इसे परोक्ष प्रयोग कहा है। यह भी संभव है कि नियमित ष्टुत्व की प्राप्ति न होने के कारण ही इसे परोक्ष कहा गया है।[2]

### पिण्ड स्तरीय यज्ञ

पिण्ड शब्द देह का वाचक है जो सर्वथा ब्रह्माण्ड की अनुकृति है। पिण्ड, ब्रह्माण्ड का ही लघुरूप है। जो ब्रह्माण्ड में है उसका अणु-अणु 'पिण्ड' में है इसलिए कहा गया है यत्पिण्डे तद्ब्रह्माण्डे। पञ्चभूतात्मक ब्रह्माण्ड तथा मानव शरीर दोनों मूलतः एक रूप है। इन दोनों में विद्यमान व्याप्त पुरुषरूप आत्मा भी एक ही है।[3] जिस प्रकार पुरुष के मन से चन्द्रमा, चक्षु से सूर्य, मुख से इन्द्र तथा अग्नि, प्राण से वायु, नाभि से अन्तरिक्ष, शिर से द्युलोक, पैरों से भूमि, श्रोत्र से दिशाएँ उत्पन्न होकर[4] ब्रह्माण्ड में व्यवस्थित हो गए इसी प्रकार देवताओं ने मानव शरीर में भी विभिन्न अवयवों में प्रवेश किया तथा सूर्य चक्षु बन गया तथा वायु प्राण।[5] शरीर में विद्यमान जठराग्नि नित्य भोज्यपदार्थ की आहुति ग्रहण करती है जिससे शक्ति सम्बर्द्धन होता रहता है[6] तथा शरीर में अधोभाग में कामग्नि रूप में विद्यमान अग्नि सृष्टि का विकास करती है।[7] तैत्तिरीय

---

1. स सवा एषोऽग्निरेव यदग्निष्टोमः, तं यदस्तुवंस्तस्मादग्निस्तोमः, तमग्निस्तोमं सन्तमग्निष्टोम इत्याचक्षते परोक्षेण, परोक्षप्रिया इव हि देवाः। ऐ.ब्रा. 14.5
2. अष्टाध्यायी, 8.3.82
3. योऽसावादित्ये पुरुषः सोऽसावहम्। शु.यजु., 40.17
   स यश्चायं पुरुषे यश्चासावादित्ये स एकः। तै.उप., 2.8
4. चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत।
   मुखादिन्द्रश्चाग्निश्च प्राणद्वापुरजायत।।
   नाभ्या आसीदन्तरिक्ष शीर्ष्णो द्यौः समंवर्तत।
   पदभ्यां भूमिर्दिशः श्रोत्रा तथां लोका अकल्पयन।। ऋ., 10.90.13-14
5. सूर्यश्चक्षुर्वाताः प्राण पुरुषस्य वि भेजिरे। ऋ., 11.8.31
6. अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः।
   प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्।। गीता, 15.14
7. नैषां शिश्नं प्रदहति जातवेदाः स्वर्गे लोके बहु स्त्रैणमेषाम्। अथर्व., 4.34.2

तथा पञ्चविंश ब्राह्मण[1] में स्पष्टतः यज्ञ की सार्वभौमिकता स्वीकारते हुए यह प्रतिपादित किया गया है कि मानव जीवन स्वयमेव एक यज्ञ है जिसकी सत्यता स्वतः अनुभव की जा सकती है। मनुष्य यजमान रूप में स्वयं यागपशु है जो आदित्य रूप यूप से नित्य बंधा रहता है। बृहदारण्यकोपनिषद् में मनुष्य के शरीर को यज्ञशाला के रूप में विवेचित करते हुए कहा गया है, मनुष्य की शरीर रूपी यज्ञशाला में चार प्रमुख ऋत्विज है – वाणी यज्ञ का होता, चक्षु अध्वर्यु है, प्राण उद्गाता तथा मन ब्रह्मा नामक ऋत्विज है।[2] वाक् ही यज्ञ है[3] जो वाक्संयमन करता है वह यज्ञ में आत्मसात् कर लेता है। ऐसी अवस्था में मनुष्य यदि भूलवश कुछ बोल देता है तो यज्ञ आत्मा से पराङ्मुख हो जाता है वह आत्मा से दूर निकल जाता हैऔर ऐसी अवस्था में प्रायश्चित का विधान है।[4] जब वह **स्वाहा यां मनसः** उच्चारण करता है तो मन से यज्ञ का आरम्भ करता है। जब वह कहता है – **स्वाहोरोरन्तरिक्षात्** तब अन्तरिक्ष से आरम्भ करता है। अब कहता है– **स्वाहा द्यावपृथिवीभ्याम्** तब द्यौ एवं पृथिवी से आरम्भ करता है जिनमें सभी शामिल हैं।[5] वाक् को अग्नि कहते हुए कहा गया है – **तस्य वा एतस्याग्नेर्वागेवोपनिषत्।** इसी अग्नि में जब सोम की आहुति दी जाती है तो यज्ञ होता है। यज्ञ से ही ब्रह्माण्ड की स्थिति रहती है। यज्ञ से ही आत्म–स्थिति रहती है। शतपथ ब्राह्मण में यज्ञ को पुरुष कहा गया है।[6] पुरुष ही यज्ञ को तानता है और जब तन जाता है तो यज्ञ इतना बड़ा हो जाता है जितना पुरुष।[7] यज्ञ की दाहिनी भुजा जुहू है तथा बाई उपभृत है। ध्रुवा धड़ है। धड़ से ही सब अंग उपजते हैं। इसलिए ध्रुवा से ही सब यज्ञ उत्पन्न होते हैं। स्रुव प्राण है। जिस प्रकार चैतन्य प्राण शरीर के समस्त अङ्गों में विचरण करता हुआ शरीर को चेतना प्रदान करता है उसी प्रकार स्रुवा नामक पात्र समस्त स्रुचों से सम्बन्धित होता हुआ यज्ञ के सफल निष्पादन का कारण बनता है। जुहू द्यौ लोक है। उपभृत अन्तरिक्ष और ध्रुवा पृथिवी। पृथिवी से ही सब लोग उत्पन्न होते है उसी प्रकार ध्रुव से ही यज्ञ उत्पन्न होता है। बौधायन धर्मसूत्रकार के मत में आधान के पश्चात् जब अग्नियाँ यजमान में स्थित होती है, तो गार्हपत्य उसके प्राणरूप में, दक्षिणा उसके अपानरूप में, आहवनीय व्यानरूप में तथा सभ्य व आवसथ्याग्नियाँ क्रमशः उदान तथा समान रूप में रहती है। शतपथ ब्राह्मण के अनुसार **पुनर्मृत्युं मुच्यते य एवमेवतामग्निहोत्रे मृत्योरतिमुक्ति**

1. तै.ब्रा., 3.12.2.3–8; पञ्च.ब्रा., 25.18.4
2. वाग्वै यज्ञस्य होता, चक्षुर्वै यज्ञस्याध्वर्युः प्राणो वै यज्ञस्योद्गाता, मनो वै यज्ञस्य ब्रह्म। बृह.उप., 3.9.24
3. वाग्वै यज्ञो। शत.ब्रा. 3.2.2.3, 3.2.2.38
4. वाग्वै यज्ञो यज्ञमेवैतदात्मन्धत्ते। अथ यद् वचं यमो व्याहरति तस्मादुहैष विसृष्टो यज्ञः परा आवर्तते। वही, 3.1.3.27
5. वही, 3.1.3.26
6. वही, 1.3.2.1–4
7. यज्ञ पुरुष की कृति है। कृति कर्त्ता के अनुरूप होती है।

**वेद** अर्थात् यज्ञ करने से ऐहिक विपत्तियों का नाश होता है तथा मानव पुनः जन्म-मरण रूपी कष्ट से मुक्त हो जाता है परन्तु कर्मकाण्ड के प्रभाव के कारण यह सूक्ष्मरूप तिरोहित हो गया और स्थूल रूप ही अवशिष्ट रहा।

## यज्ञ और भौतिक विज्ञान

अग्नि के साहचर्य से क्रिया करना और सृष्टि के तत्त्वों को उपयोग में लाना भौतिक विज्ञान है। भौतिक विज्ञान 'यज्ञ' से भलीभाँति जुड़ा हुआ है। प्रकाश, उष्मा तथा विद्युत के रूप में त्रिविध अग्नियों का अध्ययन भौतिक विज्ञान करता है। ऋग्वेद में ये तीनों अग्नियाँ पार्थिव-अन्तरिक्ष तथा द्युलोकाग्नि पर अवलम्बित है। यज्ञ का सम्बन्ध मुख्य रूप से पार्थिवाग्नि तथा गौणरूप से अन्तरिक्ष तथा द्युलोक अग्नि सूर्य से है। विज्ञान में मुख्यतः ठोस (काष्ठ, बर्फादि), तरल (जल, दुग्धादि), गैस (हवा, वाष्पादि) तीनों पदार्थों से जगत् की संरचना हुई हैं।[1] इन तीनों पदार्थों का यज्ञ से घनिष्ठ सम्बन्ध है। द्रव्यों के बिना यज्ञ सम्पादित नहीं होता इसलिए अग्निहोत्र यज्ञ को 'द्रव्य यज्ञ' भी कहते है।[2] यज्ञ में प्रयुक्त होने वाली समिधा, यज्ञपात्र, कलश, यज्ञवेदी इत्यादि ठोस पदार्थ है, द्रव्यद्रव्य के रूप में प्रयुक्त, घृत, जल, दुग्धादि तरल पदार्थ है तथा हव्यद्रव्यों की आहुति पश्चात् समुत्पन्न नानाविध सुगन्धित वाष्प ही गैसीय पदार्थ है। शतपथ ब्राह्मण में यज्ञ की वैज्ञानिकता का इस प्रकार वर्णन किया गया है - **अग्नेर्वै धूमो जायते धूमादभ्रम-भ्राद् वृष्टि** अर्थात् अग्नि से धूम उत्पन्न होता है धूम से अभ्र (मेघ) और मेघ से वृष्टि होती है। यज्ञाग्नि में डाली गई घृताहुति आदित्य (सूर्य) के पास पहुँचती है। आदित्य से वृष्टि उत्पन्न होती है और वृष्टि से प्रजा उत्पन्न होती है[3] इसलिए यज्ञ को प्रजापति भी कहा गया है। जिस प्रकार नाभि शरीर का आधार है[4] उसी प्रकार यज्ञ समस्त विश्व का आधार है। यह निर्विवाद तथ्य है कि यज्ञ से व्यक्ति का शरीर, मन, बुद्धि, प्राण तथा आत्मा क्रमशः स्वस्थ, शुद्ध, निर्मल, बलवान तथा निष्पाप बनते हैं। अमेरिका के एक मनोवैज्ञानिक श्री बैरी राथनेट ने पूना विश्वविद्यालय में **'अग्निहोत्र का मानसिक तनाव पर प्रभाव'** नामक विषय पर शोध किया है। उन्होंने बताया मानसिक रूप से घरेलू चिकित्सा एवं यज्ञीय धूम के प्रभाव से बच्चों का मिर्गी रोग ठीक हो जाता है और मानसिक रूप से अविकसित बच्चों की बुद्धि विकसित हो जाती है।[5] यज्ञ से पृथ्वी तथा

---

1. वेद और उसकी वैज्ञानिकता, आचार्य प्रियव्रत वेदवाचस्पति।
2. ऐ.ब्रा., 1.1.7, तै.स., 3.5.11.5
3. अग्नौ प्रास्ताहुति : सम्यक् आदित्यमुपतिष्ठते।
   आदित्याज्जायते वृष्टिस्ततोऽन्नं तत् प्रजाः।। मनु., 3.76
4. अयं यज्ञो भुवनस्य नाभिः। यजु., 23.62
5. पर्यावरण प्रदूषण की समस्या के संदर्भ में अथर्ववेद का अध्ययन, पीएच.डी. थीसिस, सुधा गुप्ता, 1993, मेरठ विश्वविद्यालय, मेरठ।

अन्य ग्रहों की गति द्वारा उठने वाली प्राकृतिक तरंगों का वातावरण पर विशेष प्रभाव पड़ता है तथा ये तरंगें मानव के शरीर व मस्तिष्क पर विशेष प्रभाव डालती हैं। यज्ञीय धूम का शरीर के सूक्ष्म तन्तुओं पर सकारात्मक प्रभाव पड़ता है। यज्ञ के धूम के सामने रहने से रक्त में निहित **'शुगर प्लेट्स'** की साम्यावस्था रहती है।[1] सृष्टि की साम्यावस्था में सभी पदार्थ एकरूप होते है किसी का पृथक् अस्तित्व नहीं रहता, सर्वत्र एकरूपता और एकरसता होती है इस स्थिति को आधुनिक वैज्ञानिक नाभिक (Nucleus) कहते है, यज्ञीय मन्त्रों में उसे 'हिरण्यगर्भ'[2] कहा गया है। ऋग्वेद में **'यज्ञेन यज्ञमयजन्त देवाः'** इस रहस्यात्मक मन्त्रांश का आदि दैविक तथा आदि भौतिक दृष्टि से यह अर्थ सम्पादित होता है कि सृष्टि के आरम्भ में सब प्राकृतिक शक्तियों ने परमदेव की पूजा, विभिन्न पदार्थों के संगतिकरण द्वारा उन पदार्थों में उन्हें समर्पित कर सृष्टि निर्माण रूपी यज्ञ में सहयोग किया तथा यही तीन कार्य प्राकृतिक धर्म अथवा धारक तत्त्व माने गये।[3] अथर्ववेद में उल्लेख मिलता है कि परमेश्वर ने महान् व्यापक मूल तत्त्व अर्थात् प्रकृति से तैंतीस लोकों का निर्माण किया और उन लोकों के ज्ञानार्थ उन्होंने यज्ञ की सृष्टि की।[4] इस प्रकार हम कह सकते है कि यज्ञ न केवल सृष्टि का प्रतीक है बल्कि उसकी व्याख्या भी है जिसका सम्बन्ध भौतिक विज्ञान से है। इसके अतिरिक्त मन्त्रों के अनेक शब्द यथा वायु, तपस, चक्र, अग्न्यादि भौतिक विज्ञान में समान अर्थों में पाये जाते हैं। यज्ञ जिन-जिन तत्त्वों अथवा पदार्थों से सम्बन्ध रखता है उन्हीं तत्त्वों तथा पदार्थों का सम्बन्ध किसी न किसी रूप में ब्रह्माण्ड, पिण्डरूपी मानव देह तथा भौतिक विज्ञान से भी है। भौतिक विज्ञान जिन-जिन सुख सुविधाओं का जनक है उन-उन सुविधाओं को देने में वैदिक यज्ञ सक्षम है। नि:सन्देह यज्ञ तथा विज्ञान का घनिष्ठ सम्बन्ध है यज्ञ की प्रक्रिया विज्ञानाश्रित क्रिया है।

वैदिक काल में यज्ञ के वास्तविक तत्त्व को मानव भलीभाँति समझते थे उनके हृदयों में यज्ञ के प्रति श्रद्धा भक्ति का भाव था जिससे समय-समय पर यज्ञ-यागादि कर्मकाण्ड करते रहते थे। समग्र संसार एवं उनका कल्याण होता था अतिवृष्टि, भूकम्प, महामारी, अकाल, रोग, अल्पमृत्यु इत्यादि का सर्वथा अभाव था। वर्तमान समय में स्वार्थवश एवं चकाचौंध में संलिप्त होकर मानव ने यज्ञ के महत्त्व तथा शास्त्र की मर्यादा को भुलाकर मनमाना आचरण प्रारम्भ कर दिया है जिसके परिणामस्वरूप वह विपत्ति

---

1. यज्ञ और विज्ञान, डॉ. जगदीश प्रसाद, वैदिक प्रकाशन, मेरठ।
2. हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत्।
   स दाधारं पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम।। ऋ., 10.121.1, यजु., 13.4, अथर्व., 4.2.7
3. ऋ. 10.10.16
4. एतस्माद्वा ओदनात् त्रयस्त्रिंशतं लोकान्निरमिमीत प्रज्ञापतिः। तेषां प्रज्ञानाय यज्ञमसृजत। अथर्व., 11.3.52-53

एवं नाना प्रकार की आपदाओं से ग्रस्त जीवन व्यतीत कर रहा है। सर्वत्र अविश्वास, आतंकवाद, भय, हिंसा, ईर्ष्या, द्वेषादि का आर्तनाद सुनाई पड़ता है। जिस यज्ञ को अत्यन्त पवित्र मानकर निष्काम भाव से सम्पादित करके मनुष्य अपना एवं विश्व का कल्याण एवं इहलौकिक-पारलौकिक सुख सरलता से प्राप्त कर लेता था। आज उसके अभाव या विधिहीन यज्ञ को अपना कर उसने स्वयं पैरों पर कुल्हाड़ी मारने का कार्य किया है। वैदिक यज्ञ शास्त्रीय विधि से सम्पन्न कर अपना, समाज, राष्ट्र एवं समग्रविश्व का कल्याण किया जाना श्रेयस्कर है। वैज्ञानिक अन्वेषक यदि वेदोक्त यज्ञ की ओर दृष्टि डालें और तत्परता से अनुसंधान करें तो इससे जगदुपकारक अनेक अद्भुत तत्त्व प्रकाशित हो सकते हैं।

# संस्कृत भाषा का ललित निबंध

- डॉ. अजय कुमार मिश्र
असि. प्रोफेसर, राष्ट्रिय संस्कृत संस्थान

**प्रस्तुत निबन्ध में लेखक ने संस्कृत भाषा में निबन्ध की परम्परा एवं उसके लालित्य का वर्णन किया गया है।**

प्रस्तुत पुनर्पाठ सरोज कौशल के निबंध आलेख "कल्पना और लालित्य का चारू मिश्रण" से जुड़ी है जो समकालीन भारतीय साहित्य, अंक 175, सितंबर-अक्टूबर 2014 में प्रकाशित हुआ है। वाकई में यह निबंध संस्कृत भाषा के एक ओझल विधा का बड़ा ही मानीरवेज तहक़ीक़ात प्रस्तुत करता है। साथ ही साथ हिन्दी भाषा के नदीष्ण समीक्षक-संपादक रणजीत साहा ने अपने संपादकीय (समकालीन भारतीय साहित्य, अंक जुलाई-अगस्त 2013, दिल्ली) में किसी साहित्य की विधा के भाग्य का फैसला करने वाले प्रकाशक के शिकंजे को लेकर जो चिंता जताया है उस लिहाज से भी इस आलेख का साया होना बड़ा मायने रखता है। इससे यह भी तस्दीक होता है कि संस्कृत भाषा का आधुनिक साहित्य का ललित निबंध नाम की विधा भी हिन्दुस्तान के अन्य अदबों की तरह ही जीवंत है। लेकिन इसके बावजूद प्रस्तुत आलेख से कुछ सवाल जरूर जुड़े हैं जिनका मकसद इस निबंध से जुड़ी सामग्री में इजाफा भी करना है।

आलेख में संस्कृत तथा हिन्दी के ललित निबंध लेखन परंपरा अमूमन समकालीन ही माना गया है। लेकिन इस तथ्य का भी मुआयना ज़रूरी जान पड़ता है कि जिन विद्वानों ने इसके हिंदी लेखन के सिलसिला का तार भारतेन्दु युग (1850-1883 ई.) से भी जोड़ते हैं। साथ ही साथ भारतीय साहित्य में ललित निबंध के आविर्भाव अंग्रेज़ी भाषा से मानते हैं। लेकिन कवि-समीक्षक अज्ञेय ने जो 'आज का भारतीय साहित्य' (1959 ई.) में साफ़ किया है कि संस्कृत क्लासिक्स के तर्जुमा के सबब से भारतीय प्रभाव अंग्रेजी, फ्रांसीसी तथा यूरोपीय साहित्य में प्रकट हुए और वहाँ से लौट कर फिर भारतीय काव्य रचना पर रोपे गये। इसलिए यह भी ज़रूरी जान पड़ता है कि इस विधा के बीज को उपनिषद् विशेष कर पौराणिक आख्यानों से भी जोड़ा जा सकता है। इसी भारतीय संदर्भ को अंग्रेज़ी के 'स्टोरी' तथा संस्कृत के कथा तथा आख्यायिका के परिप्रेक्ष्य में भी समझने की आवश्यकता है। यह तथ्य अलग है कि वी. राघवल अज्ञेय से हट कर अपना विचार रखते हैं और कहते हैं कि संस्कृत साहित्य में आधुनिक धाराएँ विशेषकर

पश्चिमी साहित्य के संपर्क का परिणाम है। विदुषी लेखिका कौशल ने हृषीकेश भट्टाचार्य (1850-1913 ई.) को संस्कृत ललित निबंध का पहला आगाज करने वाला माना है। लेकिन ग़ौरतलब है कि आचार्य राघवन ने संस्कृत से जुड़े अपने खोज भरे शोध पत्र ('आज का भारतीय साहित्य' 1959 ई.) में सीधे तौर पर संस्कृत के ललित निबंध का कहीं कोई जिक्र नहीं करते हैं। लेकिन इसका भी ध्यान रहे कि रेखाचित्र, संस्मरण रिपोर्ताज तथा ललित निबंध के साहित्यिक सिद्धांतों के कोई साफ़ मापदंडों की लकीरें नहीं खींची जा सकती हैं। इसका कारण यह भी है कि ललित निबंध अपनी शैली तथा प्रकृति के नजरिये से इन विधाओं से काफ़ी करीब लगता है। इस प्रकार श्रुतिकांत शर्मा का लघु निबंध मणिमाला (लुधियाना, 1955 ई.) में हुक्का, घोड़े तथा साइकिल के बीच बातचीत, तीसरे दर्जे में रेलयात्रा, धर्मनिरपेक्ष राज्य, वाक्पटु, निष्प्रयोजन घूमने का आनंद, पिकनिक, शौक, क्रीड़ावृत्ति के अलावा चुनाव और मित्रता, फुटबॉल मैच जैसे आम जन मन को भाने वाले तथा धारदार रचनाओं के अतिरिक्त संयुक्तराष्ट्र से जुड़े निबंधों का भी अच्छा बिम्ब उभारता है। उस तरह नये-पुराने स्फूट लेखकों के निबंध संग्रह 'प्रबंध -पारिजात' का तबसरा भी प्रस्तुत समालोच्य आलेख में अपेक्षित लगता है। इसमें पंचशील, महात्मा गांधी, लोकमान्य तिलक, लक्ष्मी बाई सरीखे राष्ट्रीय मुद्दों के साथ-साथ संतति-निरोध विषयक निबंध भी ग़ौरतलब हैं। लेखिका ने देवर्षि कलानाथ शास्त्री की एक अच्छी रचना 'मा च याचिष्म कंचन' को एक अलग क़िस्म का ललित निबंध या ललित गल्प माना है। लेकिन इस नजरिये से 'गल्पकुसुमांजलि' की भी जिक्र होनी चाहिए। इसमें ऐतिहासिक विषयों को ताना-बाना बनाकर साहित्य तथा इतिहास के बीच एक बड़ा ही मनोरम तस्वीर खींचने की कोशिश की गई है। उसी प्रकार सांस्कृतिक इतिहासविद् भगवतशरण उपाध्याय ने वैदिक काल से लेकर मध्य युग तक के हिन्दुस्तानी समाज का खाक़ा जो खींचा है उसे भी मानीखेज गल्पमाला के रूप में माना जाना चाहिए।

संस्कृत तथा हिंदी के ललित निबंधों के समकालीन रिश्तों को महिमा मंडित तो किया गया है। लेकिन यहाँ एक बड़ा ही माक़ूल सवाल उठता है कि जिस प्रकार हिंदी भाषा में छायावाद, प्रगतिवाद या प्रयोगवाद जैसी नयी विधाओं से इनकी भाषा के साहित्य की श्रीवृद्धि हुई, तो क्या संस्कृत भाषा के रचनाकारों ने भी परंपरागत रूपान्तरों और शिल्प से मुँह मोड़े बिना, नये विचारों और संवेदनाओं से समझौता किया? यहाँ इसका भी ध्यान रहे कि भारतीय काव्य परंपरा में तो कवि के लिए चरित्र-चित्रण के खाक़ा खींचन के वनिस्पत उसके मोडल (टाइप) की अहमीयत होती है। और इस कठोर हक़ीक़त को ज़रूर स्वीकार किया जाना चाहिए कि संस्कृत के अधिसंख्य ललित निबंधकार अपने शास्त्रीय नॉस्टोल्जिया से उबरे नहीं है। हृषीकेश भट्टाचार्य (1850-1913 ई.) के 'प्रबंध मञ्जरी' (पद्मसिंह द्वारा 1929 ई. में बिजनौर से प्रकाशित) के 'उद्‌मिज्जपरिषद्' तथा 'महारण्यपर्यवेक्षणम् में पेड़-पौधों तथा पशु-पक्षियों के जरिए

आदमी के स्वार्थी तथा ओछे मिजाज की निंदा की गई, उस अन्योक्ति शैली वाले ललित निबंध को कोई आह्लादक नहीं माना जा सकता है। लेखक अपने समकालीन देशकाल के प्रभावों से नहीं बच पाता है। भट्टाचार्य जी ने भी महात्मा गांधी के नेतृत्व में औपनिवेशिक सत्ता के खिलाफ़ भारतीय जनमानस के हुंकार को देखा या सुना होगा। क्या यह अन्योक्ति शैली की भर्त्सना अंग्रेज़ी सरकार के शोषण की छाया में भी थी, तो संकेतात्मक भाषा में क्यों? या क्या संस्कृत भाषा के पास ऐसे बिम्बों को ही आधार बनाकर ललित निबंध लिखने की सामग्री बची थी? वाकई में यह कितना सुखद होता, जब कोई ऐसा भी ललित निबंध पढ़ने को मिलता जिसका ताना बाना गौरी हुकूमत से जुड़ा होता जिससे संस्कृत के ललित निबंध के बिम्ब में नयेपन का एहसास होता। संस्कृत निबंधकारों के लिए भी अब समय आ गया है कि वे असमिया गद्यकार लक्ष्मीनाथ बेजबरूआ जैसा भी सृजन करे जिसने चेस्टरटन की तरह निबन्ध तथा कहानी के बीच वाले साँचे का इजाद कर असमिया के ललित निबंध को एक नया आयाम दिया। साथ ही साथ उन भारतीय अंग्रेज़ी रचनाकारों से भी नसीहत लेने की जरूरत है जिनके हास्यप्रद निबंधों तथा रेखाचित्रों में जान्सन के मानसिक मुक्तता तथा मानटेन के पुष्कल और प्रभावी प्रभा की छटा भी झलकती है। इस मायने में आर. वंगरू स्वामी, एन.जी. जोग तथा एस.वी.वी.के क्रमशः 'माई लार्ड कुकुडूँ कूँ', 'ओनियन्स ऐंड ओपीनियन्स' तथा 'चैफ़ ऐंड ग्रेन' 'सोप बबुल्स' (अंतिम दोनों) ग़ौरतलब हैं। रचना के बिम्ब को ग्लोबल बनाना आज समय की माँग है। इससे संस्कृत भाषा के ललित निबंध में भी लालित्य की ताजगी आएगी। यहाँ यह भी साफ़ कर देना उचित होगा कि जो भाषा किसी राज्याश्रय में फलती फूलती है, उसके लालित्य के समाजशास्त्र में आम जन-जीवन तथा बिम्बों के खुलेपन और वैविध्य में स्वभावतः थोड़ी कमी आ जाती है। संस्कृत तथा फारसी। उर्दू के साथ अमूमन यही हुआ है। लेकिन अब ऐसी स्थिति नहीं रही। फलतः इन भाषाओं के ललित निबंधों से भी अधिक उम्मीद की जाती है। लेकिन हिंदी भाषा तो जनमानस के जमीनी हक़ीक़त में लोट-पोट कर इतनी बड़ी हुई है जिसके पीछे भक्ति आन्दोलन की लोक भूमि ने जबरदस्त की भूमिका निभायी है। यही कारण है कि हिंदी भाषा के लोकप्रियता के टीआरपी को देखते हुए मुंशी प्रेमचंद जहाँ उर्दू की जगह हिंदी उपन्यास लेखन में एक महत्त्वपूर्ण दस्तक देते हैं वहीं संस्कृत-हिंदी भाषा परंपरा के विद्वान् आचार्य हजारीप्रसाद द्विवेदी 'अशोक के फूल' ललित निबंध से भी नाम कमाते हैं। उसी प्रकार संस्कृतविद् तथा भाषा वैज्ञानिक आचार्य विद्यानिवास मिश्र भी हिंदी में ही कई महत्त्वपूर्ण ललित निबंध लिखते हैं। और हिंदी साहित्य में इस विधा के लेखन में अंबार सा लग जाता है। यहाँ तक कि रहस्यात्मक शैली के गंभीर उपन्यासकार तथा कवि अज्ञेय भी 'ताली तो छूट गई' लिखते हैं। इसी प्रसंग में महावीर प्रसाद द्विवेदी का 'महाकवि माघ का प्रभात वर्णन' भी संस्कृत से मुँह मोड़ने की दास्ताँ का बयाँ करता है। और समीक्षक कौशल ने इन दोनों विधाओं के उद्‌भव की

समकालिकता की जो बात उठायी है उसमें संस्कृत ललित निबंध लेखन के फिसलन को भी सच्चे अर्थ में अहसास किया जा सकता है। इस टीस को भट्टमथुरानाथ शास्त्री के ललित निबंध 'किन्तो कुटिलता' में भी अनुभूत किया जा सकता है जिसमें वे लिखते हैं कि 'किन्तु' मेरी सम्मति यह है कि यदि यह पुस्तक हिंदी में लिखी गई होती तो अधिक श्रेष्ठ होता। इसी निबंध में 'मगर' शब्द के द्व्यर्थक शब्द के जरिए प्रकाशक को मगरमच्छ बताकर लेखक-प्रकाशक के बिगड़ते रिश्तों में समकालीनता उजागर होती है क्योंकि इनके मुख से किताबों को महफूज रख पाना बड़ी टेढ़ी खीर है। ध्यातव्य है कि कई सौ साल पहले भी नीलकंठ दीक्षित ने अपनी किताब 'कलिविडम्बनम् में प्लेगेरिज़्म' को लेकर घोर चिंता जताया है। उसी प्रकार ललित निबंध में 'वट' जैसे अंग्रेज़ी शब्द में अंग्रेज़ी भाषा तथा कुशासन के मेटाफोर का अंदाज़ लगाया जा सकता है-पर 'किन्तु' ना 'बट' रूपं धारयित्वा सर्वं विनाशितम्। अधुना 'बट' जटासु निबद्धा वयं गृहं प्रति परावर्तनमन्तरा किं पाडन्यत्कर्तुं शक्नुयाम्? (पृ.159)। इस प्रतिरोध का अंदाज़ 1884 ई. के फ़िरंगी आदेश के मायने में भी लगाया जा सकता है जिसमें सरकारी नौकरी पाने के लिए अंग्रेज़ी को अनिवार्य कर दिया गया। 'बालकभृत्यः' को बाल ललित संस्कृत साहित्य के अन्तर्गत रखा जा सकता है जिसके हास्य अंकन में बाल समस्या को भी उठाने का भरसक प्रयास किया गया है। निबंध के अंत में ईश्वरीय भक्ति भावना भी मुखर हो उठती है। प्रस्तुत आलेख में 'मकारमहामेलनम्' को भाषिकी वैशिष्ट्य की वजह से "एक अपूर्व का सर्जना" माना गया है। यह तथ्य सही है कि संस्कृत के पाण्डित्यपूर्ण संधि तथा समास के बल पर ही ऐसी रचना लिखी जा सकती है। लेकिन इसका भी ख़याल रहे कि सिर्फ़ संस्कृत भाषा में लिख देने से वह रचना उम्दा नहीं हो जाती है। ललित निबंध लेखन की शर्तों में सरलता, मुक्तचिंतन, रागमयता, लीलापरकता तथा आत्म प्रकाशन का जो मुखरित सहज संवेद्य भाव होता है, उनकी इसमें कमी दिखती है। इस रचना की रोचकता से तो कोई संस्कृत पंडित ही आह्लादित हो सकता है। और संस्कृत शब्द संपदा की श्रीवृद्धि तथा संस्कृत भाषा के पारंपरिक ज्ञान के लिए इस निबंध का ज़रूर महत्त्व दिखता है। ललित निबंध का विशेष लक्ष्य अपने भाषा-भाषियों को मनभावन शैली वैचित्र्य से अपने आप में बाँध कर पाठकीय ज्ञान के आयामों को उन्मीलित करना भी होता है। लेकिन आचार्य राधावल्लभ त्रिपाठी अपने काव्य-शास्त्र ग्रंथ 'अभिनवकाव्यालङ्कारसूत्रम्' में काव्य लक्षण, लोक अनुकीर्तन को माना है, वह अदबी फलसफा भी इस निबंध में लागू होता नहीं दिखता है, क्योंकि इसका तानाबाना संस्कृत के व्याकरण विधा के सहृदय समाज को थोड़ा अधिक रोचक लगेगा। यद्यपि 'रूप्यकरामस्यात्मकथा' एक बड़ा ही जीवंत तथा रचनाकार के उन्मुक्त चिंतन के वैशाल्य के कारण ललित निबंध का बड़ा ही अच्छा साँचा तैयार करता है जिसकी पुष्टि इस निबंध के शीर्षक में रूपये के 'मेनिफेस्टेशन' के सरोकार से भी हो जाती है। लेकिन निबंधकार ने औरंगजेब को हिन्दू संस्कृति का परम विरोधी ('यवनसम्राडोरेङ्गजेबो

हिन्दुसंस्कृतेः परमो विरोधी' वही, पृ.177) मानते हुए रूपये को औरंगजेब से भी अधिक कंजूस कहा है। लेखक द्वारा जजिया टैक्स (1679 ई.) की निंदा की गई है। लेकिन इतिहासकार रामशरण शर्मा के हवाले यह तथ्य भी उभरकर सामने आया है कि औरंगजेब ने दक्षिण भारत के कई मंदिरों का पुनरोद्धार भी करवाया तथा अपने शासनकाल में गीत-संगीत को भी प्रश्रय दिया। (प्राचीन भारत, एन.सी.ई.आर.टी., दिल्ली)। कुछ इतिहासविद यह भी मातने हैं कि इस जजिया कर से मुसलमानों को भी नहीं बख्शा गया। भट्ट मथुरानाथ शास्त्री का यही आरो उनके अन्य ललित निबंध 'अपि नाम सेयमव्य-वहारिकी?' में भी पढ़ने को मिलता है। साथ ही साथ यह भी साफ़ किया गया है कि औरंगजेब आदि के समय विद्वेष के कारण कई किताबों को जलाकर राख में तब्दील कर दिया गया। किताबों से जुड़ा यह घातक सच मुहम्मद गौरी तथा विश्वप्रसिद्ध नालंदा विश्वविद्यालय के पुस्तकालय के आगजनी की घटना औरंगजेब से कोई वास्ता नहीं रखता है—"हिन्दुधर्मद्वेषिणामवरङ्गजेबादीनां समये भूयांसो ग्रन्था वह्निसादक्रियन्त इत्यैतिहासिका जल्पन्ति।" (पृ.216)। मुगलकाल के सुदृढ़ीकरण के साथ हिन्दुस्तानी स्थापत्य, कला तथा साहित्य की छवि में भी बड़े अच्छे उभार को देखा जा सकता है। अतः लब्धप्रतिष्ठ समीक्षक तथा साहित्यिक इतिहास के ज्ञाता शिशिर कुमार दाश ने अपनी किताब ('हिस्ट्री ऑफ़ इंडियन लिटरेचर 1911-1956 स्ट्रगल फॉर फ्रीडम ट्रंफ एंड ट्रेजडी' साहित्य अकादमी, दिल्ली, 1995 ई.) में आधुनिक संस्कृत को लेकर शिवाजी विषयक जो मुद्दा को उठाया है उसे भी संस्कृत समाज के लिए बहुरेखीय नजरिये से जाँच पड़ताल की आवश्यकता लगती है।

यह तथ्य अलग है कि प्रस्तुत आलेख में 'हंसवाहना सरस्वती मयूरवाहना कथं जाता' की जगह संस्कृत-हिंदी मिश्रित शब्दावली के संयोजन से इसका शीर्षक 'हसंवाहना सरस्वती मयूरवाहना कैसे हो गई' के रूप में छप गया है। लेकिन प्रस्तुत निबंध इतिहास तथा संस्कृति के बीच खोजते रिश्तों के साथ यह भी तलाशता है कि जैन कालीन मूर्तिकला के प्रभाव के कारण सरस्वती की सवारी हंस की जगह पर मयूर बन गया। वाकई में इसे भी एक श्रेष्ठ कोटि का ललित निबंध माना जाना चाहिए क्योंकि इसमें इतिहास के शुष्क पन्नों में सांस्कृतिक चेतना की गर्माहट लायी गयी है। 'मृत्यो! त्वमागतोऽसि' जैसे भयावह तथा नीरस विषय में उपनिषद् तथा चूर्णक जैसे समन्वित शैली से जीवन यात्रा के नाना उत्तरदायित्वों तथा मानवोचित सुकर्म-कुकर्म भावनाओं को जीवंत रूप में अंकित कर निबंध के ताना-बाना में बड़ा जान ला दिया गया है। और रचना आस्तिकतावाद के माहौल में समाप्त होती है। लेकिन आलेख में पं. विष्णुकांत शुक्ल के 'कालमहिमा' में प्रेमी युगल द्वारा समंदर की लहरों से खेलना तथा प्रेमी का एकाएक उस लहर में विलीन हो जाना ललित निबंध के लालित्य योजना की दृष्टि से कितना प्रभावी तथा रागात्मक भाव के सौन्दर्य को बिखेरेगा नहीं कहा जा सकता है। हाँ, इतना जरूर है कि मौत के खतरनाक मंजर के मेटाफोर की छाया में नागासाकी तथा

"उपसर्गविभक्तिस्वरप्रतिरूपकाश्च निपाताः" इति गणसूत्रं पठ्यते। उपसर्गप्रतिरूपकाः–

**अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि।**
**सुदत्तमनुदत्तं च निदत्तमिति चेष्यते[1]॥**

विभक्तिप्रतिरूपकाः अहम् इत्यतः अहंयुः। स्वरप्रतिरूपकाः अ अपेहि इ इन्द्रं पश्य इत्यादिषु अ इ प्रभृतयः। एतेषां निपातत्वेन "निपात एकाजनाङ्[2]" इति सूत्रेण प्रगृह्यसञ्ज्ञा तथा च "प्लुतप्रगृह्या अचि नित्यम्[3]" इति नित्यं प्रकृतिभावो भवति, तथा च सर्वविध- सन्ध्यभावो भवति।

**ख. उपसर्गाः-**

उपसृज्यन्ते इति उपसर्गाः। "उपसर्गाः क्रियायोगे[4]" इत्यत्र गणे पठिताः द्वाविंशत्युप-सर्गाः। उपसर्गाणां विषये द्विविधो विचारो विचारप्रसङ्गे समायाति "उपसर्गाणां वाचकत्वम्, उपसर्गाणां द्योतकत्वं वा"। भाष्येऽपि "धातूपसर्गयोः कार्यमन्तरङ्गं" इति पक्षद्वयमुद्भाव्य पूर्वं धातुः साधनेन प्रत्ययेन इत्यनेन सह युज्यते, पश्चादुपसर्गेण इति[5]"। उपसर्गमहिम्ना धात्वर्थोऽपि परिवर्तते–

**उपसर्गेण धात्वर्थो बलाद् अन्यत्र नीयते।**
**प्रहाराहारसंहारविहारपरिहारवत्॥[6]**

**ग. गतयः-**

प्रादयः इत्येषां "गतिश्च" इत्यनेन सूत्रेण गतिसंज्ञा भवति। अन्येऽपि विधयः गतिसंज्ञां कुर्वन्ति - तथा हि - "ऊर्यादिच्विडाचश्च", "अनुकरणं चानितिपरम्", "आदरानादरयोः सदसती", "भूषणेऽलम्" "अन्तरपरिग्रहे", "कणेमनसी श्रद्धाप्रतीघाते", "पुरोऽव्ययम्", "अस्तं च", "अच्छ गत्यर्थवदेषु", "तिरोऽन्तर्धौ", "विभाषा कृञि", "उपजेऽन्वाजे", "साक्षात्प्रभृतीनि च", "अनत्याधान उरसिमनसी", "मध्यपदे निवचने च", "नित्यं हस्ते पाणावुपयमने", "प्राध्वं बन्धने", "जीविकोपनिषदावौपम्ये[7]" इति।

---

1. अ. 7.4.47
2. अ. 1.1.14
3. अ. 6.1.125
4. अ. 1.4.59
5. अ. 6.1.135
6. सि.कौ. पृ.सं. 405
7. अ. 1.4.61 तः 1.4.79 सूत्राणि

**घ. कर्मप्रवचनीयाः-**

कर्म प्रोक्तवन्तः सम्प्रति क्रियानिरूपितसम्बन्धम् आहुः इति कर्मप्रवचनीयाः। अत्र "कृत्यल्युटो बहुलम्" इत्यनेन बाहुलकात् कर्तरि अनीयर्प्रत्ययः। ते च अनु, उप, अप, परि, आङ्, प्रति, अभि, अधि, सु, अति, अपि, इति, एकादश सन्ति। कर्मप्रवचनीयविषये हरिणोक्तम्–

**क्रियायाः द्योतको नायं सम्बन्धस्य न वाचकः।**
**नापि क्रियापदाक्षेपी सम्बन्धस्य तु भेदकः[1]॥**

उपसर्गेभ्यः कर्मप्रवचनीयायाः व्यापारभेदः पृथक् विद्यते। यथा "वृक्षम् अभिद्योतते विद्युत्" इत्यत्र विद्युद्वृक्षयोः लक्ष्यलक्षणभावरूपः सम्बन्धः "अभि" इति पदेन द्योत्यते। उपसर्गेण तु क्रियाविशेषार्थाभिव्यक्तिरेव क्रियते। उपसर्गाः षत्वणत्वादिनिमित्तभूताः, परन्तु कर्मप्रवचनीयाः द्वितीयादिप्रवृत्तेः निमित्तभूताः इति कार्यभेदोऽपि पृथक् विद्यते। उपसर्गास्तु "ते प्राग्धातोः[2]" इति शास्त्रात् धातोः पूर्वमेव प्रयोगाऽर्हाः इति प्रयोगनियमस्तेषां परन्तु नैव कर्मप्रवचनीयानामिति उभयोर्मध्ये भेद इति।

**3. असर्वविभक्तितद्धितान्ताः-**

अत्र "तद्धितश्चासर्वविभक्तिः" इति भाष्ये परिगणिताः तद्धितप्रत्ययाः अव्यय-प्रयोजकाः। एते च "संख्यायाः क्रियाभ्या-वृत्तिगणने कृत्वसुच्", द्वित्रिचतुर्भ्यः सुच्", "एकस्य सकृच्च[3]" इति इति त्रयः प्रत्ययाः। बह्वल्पार्थात्शस्कारकाद् अन्यतरस्याम् "इत्यतः मद्रात् परिवापणे इति पर्यन्तम्[4] विधीयमानाः प्रत्ययाः तसिश्च[5], उरसो यच्च[6] इति विहितः शैषिकस्तसिः, "तेन तुल्यं क्रिया चेद्वतिः[7]" "तत्र तस्येव[8]", "तदर्हम्[9]" इति सूत्रेषु विहितो वतिः। विनञ्भ्यां नानाञौ न सह[10]" इति सूत्रे विहितौ ना-नाञ्प्रत्ययौ "अमु च च्छन्दसि[11]" इति विहितश्छान्दसः "अमु" इति प्रत्ययः। किमेत्तिङव्ययघाद् इति आमु अद्रव्यप्रकर्षे" इति विहितः आमु प्रत्ययः इति। एतेषां विवरणं विस्तरभिया नोच्यते।

---

1. वा. 2.206
2. अ. 1.4.80
3. अ. 5.4.17 तः 5.4.19
4. अ. 5.4.42 तः 5.4.67
5. अ. 4.3.113
6. अ. 4.3.114
7. अ. 5.1.115
8. अ. 5.1.116
9 अ. 5.1.117
10. अ. 5.2.27
11. अ. 5.4.12

**4. कृदव्ययानि-**

सम्प्रति अव्ययविषये चर्चयामः। "कृन्मेजन्तः[1]" इत्यत्रोपात्ताः मान्ताः एजन्ताश्च कृत्प्रत्ययाः अव्ययसञ्ज्ञकाः भवन्ति। मान्तप्रत्ययाः - तुमुन्, णमुल्, कमुल्, खमुञ्प्रभृतयः। एजन्तप्रत्ययाः-से-सेन्-असे-असेन्-क्से-कसेन-अध्यै-अध्यैन्-कध्यै-कध्यन्-शध्यैन्-तवै-तवेङ-केन इत्यादयः प्रत्ययाः। प्रयै-रोहिष्यै-अव्यथिष्यै[2] इत्यत्र निपातनात् सिद्धौ कैइष्यै-प्रत्ययौ, "दृशे विख्ये च[3]" इत्यत्र निपात्यमानः के प्रत्यया इति। तथा च "क्त्वातोसुन्कसुनः[4]" इत्येतेषां त्रयाणामपि कृतामव्ययत्वम् अस्ति।

**5. अव्ययीभावसमासान्तानि-**

अव्ययीभावसमासविधायकानि सूत्राणि अव्ययसञ्ज्ञकानि भवन्ति। तथा हि - "अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथाऽऽनुपूर्व्ययौग-पद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु", यथाऽसादृश्ये, यावदवधारणे, सुप्प्रतिना मात्रार्थे, अक्षशलाकासंख्याः परिणा, विभाषा, अपपरिबहिरञ्चवः पञ्चम्या, आङ् मर्यादाऽभिविध्योः, लक्षणेनाऽभिप्रति आभिमुख्ये, अनुर्यत्समया, यस्य चायामः, तिष्ठगुप्रभृतीनि च, पारे मध्ये षष्ठ्या वा, संख्या वंश्येन, नदीभिश्च, अन्यपदार्थे च सञ्ज्ञायाम्[5] एतैः सूत्रैः ये समासाः विहिताः तेऽव्ययीभावसमासाः भवन्ति। एतेषां सूत्रविहितसामासिकपदानाम् "अव्ययीभावश्च[6]" इत्यनेनाव्ययत्वम्। "अव्ययीभावः[7]" इति लिङ्गानुशासनसूत्रेषु मध्ये नपुंसकलिङ्गत्वमपि शास्त्रसम्मतं वर्तते इत्यवगन्तव्यम्। अनव्ययं सत् अव्ययं सम्पद्यते-कार्यविशेषार्थमङ्गीकृत्य भाष्येऽव्ययीभावस्याऽव्ययत्वे त्रीणि प्रयोजनानि "लुक्मुखस्वरोपचाररूपाणि परिगणितानि। तथा हि-लुगिति-"अव्ययादाप्सुपः" इति "प्रत्यग्नि शलभाः पतन्ति" इत्यादिषु सुपो लुक् भवति। द्वितीयः मुखस्वरः - श्रुतौ उपाग्निमुखः इत्यत्र "मुखं स्वाङ्गम्[8]" इति प्राप्तः उत्तरपदान्तोदात्तस्वरः "नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः[9]" इति निषिध्यते। तृतीयं प्रयोजनम् उपचार इति। विसर्गस्थानिकस्य सकारस्य "उपचारः" इति पूर्वाचार्यसञ्ज्ञा।

---

1. अ. 1.1.39
2. अ. 3.4.10
3. अ. 3.4.11
4. अ. 1.1.40
5. अ. 2.1.5 तः 2-1.21
6. अ. 1.1.41
7. अ. 2.4.18
8. अ. 6.2.167
9. अ. 6.2.168

यथाश्वःकारः, पुनः कारः इत्यादिषु अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य[1] इति सकारादेशो न इति त्रीणि प्रयोजनानि शास्त्रकारैरुक्तानि।

"तिष्ठ्गुप्रभृतीनि च[2]" सूत्रेऽस्मिन् तिष्ठ्गुगणे "इच् कर्मव्यतिहारे[3]" इति पठ्यते। अस्यार्थः "इच् कर्मव्यतिहारे[4]" "द्विदण्ड्यादिभ्यश्च" इति सूत्राभ्यां यः कर्मव्यतिहारेऽर्थे इच् प्रत्ययः बहुव्रीहिसमासान्तो विहितः सोऽव्ययीभावसञ्ज्ञको भवति, इति फलति। अत एव कर्मव्यतिहारार्थकानां इच्प्रत्ययान्तानां द्विदण्ड्यादिशब्दानां च अव्ययत्वमिति समवगन्तव्यम्। तिष्ठ्दगुगणोऽपि आकृतिगणः तथा च द्विदण्ड्यादिराकृतिगण इति गणरत्नमहोदधिकारः। परन्तु द्विगण्दड्यादिरागणस्याकृतिगणत्वम् अनङ्गीकुर्वन्ति पाणिनीयाः, तस्य नियतगणत्वं आहुः।

सिद्धान्तकौमद्यादिग्रन्थेषु अस्मिन् संदर्भे एका लोकविश्रुता कारिकेयं वर्तते–

**"वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः**
**टापं चैव हलन्तानां यथा वाचा निशा दिशा।।[5]"**

**अयमाशयः–**

वैयाकरणपरम्परायां सुप्रसिद्धः मुनिः भागुरिः "अव्–अपि" इत्यनयोः उपसर्गयोः अकारलोपमिच्छति यथा – अव इत्यत्र पाक्षिके अकारलोपे वगाहः। अवगाहः, वकोटः। अवकोटः इति उभयविधस्वरूपं सिद्धयति, तथैव इत्यत्राकारलोपेन पिनद्धम्। अपिद्धनम् इत्युभयं सिद्धयति। तथा च ऋषिः हलन्तशब्देभ्योऽपि आप् इति स्त्रीत्वबोधकप्रत्ययमिच्छति, यथा वाक्। वाचा, दिक्। दिशा इत्यादि। इति शम्।

1. अ. 8.3.46
2. अ. 2.1.17
3. ग.सू.
4. अ. 5.4.127
5. ल.सि. पृ.सं.76

ISSN : 0975-1769

# संस्कृतव्याकरणस्य प्रयोजनम्

- **गजाननधरेन्द्रः**
शोधच्छात्रः, राष्ट्रिय-संस्कृत-संस्थानम्

**अस्मिन् शोधपत्रे अनुसन्धात्रा व्याकरणस्य कानि प्रयोजनानि भवन्ति इति विषयमाधीरा कृत्य भाष्यादेशा अनुसन्धानं कृतम्।**

संस्कृतभाषायामेव भारतीयज्ञानपरम्परा विद्यमाना वर्तते। भाषेयं विश्वस्य प्राचीनतमा भाषा। भारतदेशः विश्वगुरु इति। अतः भारतीयज्ञानपरम्परासंरक्षणार्थे संस्कृतभाषायाः व्याकरणस्य परमावश्यकता वर्तते, यतोहि वेदानां रक्षकत्वात् वेदार्थावबोधने सहायकत्वाच्च **"मुखं व्याकरणं स्मृतम्"** इति वचनं सङ्गच्छते। संस्कृतव्याकरणं तच्छास्त्रमुच्यते, यस्य स्वस्य स्वतन्त्रमस्तित्वमस्ति तथा च स्वयमेव सर्वाङ्गपूर्णमस्ति। व्याकरणं नाम शब्दशास्त्र-मुच्यते। अथ शब्दानुशासनमिति।

**"व्याक्रियन्ते व्युत्पाद्यन्ते शब्दाः अनेनेति व्याकरणम्।"** संस्कृतव्याकरणपरम्परायां ब्रह्मादितः पाणिनिकात्यायनपतञ्जल्यादिपर्यन्तं महाकृतिषु निबद्धम्। आचार्यवररुचिः व्याकरण-शास्त्रस्य वैशिष्ट्यं प्रतिपादयन् तस्य पञ्चप्रयोजनानि प्रतिपादयति। पतञ्जलेः त्रयोदश प्रयोजनानि सन्ति। तेन हि व्याकरणशास्त्रस्य नितरां वैशिष्ट्यमागतम्। पतञ्जलिनोक्तम्-

**शब्दप्रमाणकाः वयम्। यच्छब्दमाह तदस्माकं प्रमाणम्।**[1]

**भर्तृहरिणोक्तम्-**

**न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।**
**अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥**[2]

**अन्यच्च-**

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।**
**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥**[3]

---

1. महाभाष्यम् पशपशाह्निकम्
2. वा.प.ब्र.का.123 पृ.सं.182
3. वा.प.ब्र.का.1, पृ.सं.1

**वाक्यपदीये-**

**शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः।**
**छन्दोभ्य एव प्रथममेतद् विश्वं व्यवर्तत॥[1]**

अतः व्याकरणशास्त्रस्य प्रयोजनावसरे अनेके विचाराः दृष्टिपथमवतरन्ति, '**प्रयोजन-मनुद्दिश्य न मन्दोऽपि प्रवर्तते**' इति सूक्त्या अस्य शास्त्रस्य महत्त्वानि प्रयोजनानि पुरतः आयान्ति, तेषां प्रयोजनानां सङ्कलनं चतुर्षु भागेषु भवति।

1) परमपरमप्रयोजनम् – मोक्षः।

2) परमप्रयोजनम् – अथ शब्दानुशासनम्।

3) प्रयोजनानि – रक्षोहागमलघ्वसंदेहाः प्रयोजनम्।

4) गौणप्रयोजनानि – 'तेऽसुराः'। दुष्टःशब्दः। यदधीतम्। यस्तु प्रयुङ्क्ते। अविद्वांसः। विभक्तिं कुर्वन्ति। यो वा इमाम्। चत्वारि। उत त्वः। सक्तुमिव। सारस्वतीम्। दशम्यां पुत्रस्य। सुदेवोऽसि वरुणेति॥

अथ च सर्वेषां प्रयोजनानां क्रमेणैव व्याख्यां प्रस्तौमि–

1) **मोक्षः** – सर्वशास्त्रवद् व्याकरणशास्त्रस्यापि 'मोक्ष' एव प्रामुख्येन प्रयोजनं वर्तते, शब्दरूपात्मकं ब्रह्मेवेति परिज्ञाय मानवाः मुक्तिपथम् अधिगच्छन्ति, अत आह "**शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति**"। भर्तृहरिणा तु ऋजुमार्गरूपेण व्याकरणशास्त्रं मोक्षाय भवति इति प्रतिपादितम्। तथा चोक्तम्–

**इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम्।**
**इयं मोक्षमाणानामजिह्मा राजपद्धतिः॥**

अर्थात् इदं शब्दशास्त्रं मोक्षाय अजिह्मराजपद्धतिः अस्ति, तस्मादध्येयं व्याकरणम्।

2) **परमप्रयोजनम् – अथ शब्दानुशासनम्–**

भाष्यकारो विवरणकारत्वाद् व्याकरणस्य द्वितीयं साक्षात् प्रयोजनं वदति "अथ शब्दानुशासनम्" इति, यद्यपि अपरे आचार्याः यत् शास्त्रारम्भप्रयोजनसूचकं भगवतः कात्यायनस्य वार्त्तिकमेतत् इति। भाष्यकारस्यैतद्व्याकरणप्रयोजनप्रदर्शनवाक्यमिति वदन्तौ कैयटनागेशौ तु भ्रान्तौ एवेति आहुः। भाष्यकारेण वार्त्तिकं विव्रियते यत् अथेत्ययं शब्दोऽधिकारार्थः प्रयुज्यते। शब्दानुशासनं नाम शास्त्रमधिकृतं वेदितव्यम्॥

**अधिकारः**=प्रस्तावः, अर्थात् प्रारम्भस्य द्योतकः अयमथशब्दः, निपातानाञ्च द्योतकत्वं वाक्यपदीये निर्णीतं वर्तते। व्याकरणस्य चेदमन्वर्थं नाम शब्दानुशासनमिति, अत्र षष्ठीतत्पुरुषसमासः, अत्र कर्तुरनुपादानात् 'उभयप्राप्तौ कर्मणि' इत्यनेन षष्ठी न, अपितु 'कर्तृकर्मणोः कृति' इत्यनेनैव षष्ठी भवति तथा च समासः शब्दानुशासनमिति।

---

1. वा.प.ब्र.का.120 पृ.सं.177

अत्र 'कर्मणि च' इत्यनेन निषेधो न उभयप्राप्तौ कर्मणि इत्यस्यैव निषेधकम् सूत्रमिदमस्ति, सूत्रानुपूर्विघटितत्वात्।

यद्यपि पाणिनिना "ब्राह्मणेन निष्कारणो धर्मः" इत्यादिश्रुतेः सन्ध्योपासनादिवत् उत्तमाधिकारिप्रवृत्तिसंभवात्प्रयोजनं नोक्तम्। कात्यायनेनापि "शास्त्रपूर्वके प्रयोगे धर्मः" इत्यनेन मध्यमाधिकारिणः परमप्रयोजनं दर्शितम्। भाष्यकारस्तु विवरणकार-त्वान्मन्दाधिकारिणां प्रवृत्तये व्याकरणस्य साक्षात् प्रयोजनं वदति-अथ शब्दानुशासनम्। "केषां शब्दानाम्" लौकिकानां वैदिकानाञ्च। तत्र लौकिकाः तावद् गौरश्वः पुरुषो हस्ती शकुनिर्मृगो ब्राह्मण इति।। वैदिकाः खल्वपि-शन्नो देवीरभिष्टये। इत्यादि। ततः भाष्यकारेण उपात्तेषु शब्दसमुदायेषु मध्ये स्थालीपुलाकन्यायेन गौशब्दे आशङ्क्तं यत् अथ-गौरित्यत्र कः शब्दः? सिद्धान्तरूपेण उत्तरितं यत् सास्नालाङ्गूलक-कुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्द इति।

अथवा- प्रतीतपदार्थको लोके ध्वनिः शब्द इत्युच्यते इति समाधानान्तरमपि दत्तं वर्तते। प्रतीतश्चासौ पदार्थश्च प्रतीतपदार्थः स एव प्रतीतपदार्थकः स्वार्थे 'कन्' पदार्थपदस्य तद्बोधके लक्षणा तदेवं प्रसिद्धो गवादिपदार्थबोधक इत्यर्थो लभ्यते। अत्र ध्वनिशब्देन ककारादिवर्णात्मको ध्वनिः गृह्यते लोके पदेन अत्र व्यवहारकर्तृषु मध्ये इत्यर्थः। तद्यथा-'शब्दं कुरु' मा शब्दं कार्षीः, 'शब्दकार्ययं माणवकः इति ध्वनिं कुर्वन्नेवमुच्यते तस्माद्ध्वनिः शब्दः। अत्र 'इत्युच्यते' इत्यनेनाऽस्मिन् पक्षे भाष्यकृता - अनास्था सूच्यते। अतः शब्दानाम् अनुशासनमेव व्याकरणस्य साक्षात् प्रयोजनं वर्तते तस्मादेव व्याकरणस्य अपरन्नाम शब्दशास्त्रमिति।

3) **प्रयोजनानि**-रक्षोहागमलघ्वसंदेहाः प्रयोजनम्- भगवान् भाष्यकारः प्रयोजनरूपेण रक्षा ऊह आगम लघु असंदेहाः इति पञ्च प्रयोजनानि प्रोक्तवान्।

**रक्षा**- रक्षार्थं वेदानामध्येयं व्याकरणम्। लोपाऽऽगमवर्णविकारज्ञो हि सम्यग्वेदान् परिपालयिष्यतीति।।

**ऊहः**-ऊहः खल्वपि न सर्वैः लिङ्गैः स च सर्वाभिर्विभक्तिर्भिवेदे मन्त्राः निगदिताः। ते चाऽवश्यं यज्ञगतेन पुरुषेण यथायथं विपरिणमयितव्याः तान्नावैयाकरणः शक्नोति यथायथं विपरिणमयितुम्। तस्मादध्येयं व्याकरणम्।।

**आगमः**-आगमः खल्वपि-ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येतव्यः ज्ञेयश्चेति। प्रधानं षडङ्गेषु व्याकरणम्। प्रधाने च कृतो यत्नः फलवान् भवति।

**लघुः**-लघ्वर्थं चाध्येयं व्याकरणम्। ब्राह्मणेनाऽवश्यं शब्दा ज्ञेयाः इति। न चाऽन्तरेण व्याकरणं लघुनोपायेन शब्दाः शक्याः ज्ञातुम्।

**असन्देहः**-असन्देहार्थं चाध्येयं व्याकरणम्। याज्ञिकाः पठन्ति-स्थूलपृषतीमाग्नि-वारूणीमनड्वाहीमालभेतेति। तस्यां सन्देहः-स्थूला चासौ पृषती च स्थूलपृषती स्थूलानि वा पृषन्ती यस्या सेयं स्थूलपृषतीति? तां नाऽवैयाकरणः स्वरतोऽध्यवस्यति

यदि पूर्वपदप्रकृतिस्वरत्वं ततो बहुव्रीहिः। अथ समासान्तोदात्तत्वं ततस्तत्पुरुष इति।

एवं प्रकारेण पञ्चप्रयोजनानि भाष्यकारेण प्रत्यपादि। मम सङ्गृहीत-प्रयोजनेषु तृतीयक्रमे एतानि वर्तन्ते। तदनन्तरमत्र शीर्षके अन्तिमो बिन्दुः गौणप्रयोजनानि इति वर्तते, व्याकरणशास्त्रस्य त्रयोदश-आनुषङ्गिकप्रयोजनानि विद्यन्ते, क्रमेणात्र निर्वच्मि-

1) **तेऽसुराः**-तेऽसुराः इति प्रथमं गौणप्रयोजनम्- तेऽसुरा हेलयो हेलय इति कुर्वन्तः पराबभूवुस्तस्माद् ब्राह्मणेन न म्लेच्छितवै नापभाषितवै, म्लेच्छो ह वा एष यदपशब्दः। अतः अध्येतव्यं व्याकरणम्।

2) **दुष्टः शब्दः**- इदं द्वितीयं गौणप्रयोजनम्-

**दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह।**
**स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥**[1]

एवं रूपेण भाष्यकारः दृष्टान्तं प्रस्तुतवान् अत्र इन्द्रशत्रुः दुष्टशब्दप्रयोगाद् स्वयमेव नष्टः। दुष्टान् शब्दान् मा प्रयुक्ष्महि इति अध्येयं व्याकरणम्।

3) **यदधीतम्**-

**यदधीतम् अविज्ञातं निगदनेनैव शब्द्यते।**
**अनग्नाविव शुष्कैधो। न तज्ज्वलति कर्हिचित्॥**

तस्मात् अनर्थकं माधिगीष्महीत्यध्येयं व्याकरणम्॥

4) **यस्तु प्रयुङ्क्ते**-

यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान्यथावद्व्यवहारकाले। सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद्दुष्यति चापशब्दैः। (दुष्यति चापशब्दैः) कः। वाग्योगविदेव। कुत एतत्?। यो हि शब्दाञ्जानात्यपशब्दानप्यसौ जानाति। यथैव हि शब्दज्ञाने धर्मः, एवमपशब्दज्ञानेऽप्यधर्मः॥ अथ वा भूयानधर्मः प्राप्नोति। भूयांसोऽपशब्दाः अल्पीयांसः शब्दा इति। एकैकस्य हि शब्दस्य बहवोऽपभ्रंशाः। तद्यथा-'गो' रित्यस्य शब्दस्य-गावी गोणी गोता गोपोतलिकेत्यादयो बहवोऽपभ्रंशाः। अथ योऽवाग्योगविद् ज्ञानं तस्य शरणम्॥ अतः सम्यग् प्रयोगाः भवेयुरिति तदर्थमध्येयं व्याकरणम्।

5) **अविद्वांसः**-इदमपि गौणप्रयोजनं विद्यते। अभिवादनादिषु वैपरीत्यं न स्यात् इत्येतदर्थ-मध्येयं व्याकरणं तथा च भाष्यकारोप्याह-

**अविद्वांसः प्रत्यभिवादे नाम्नो ये न प्लुतिं विदुः।**
**कामं तेषु तु विप्रोष्य स्त्रीष्विवायमहं वदेत्॥**[2]

अभिवादे स्त्रीवत् माभूत् इत्येतदर्थमध्येयं व्याकरणम्।

---

1. महाभाष्य-प्रदीप-प्रकाशः प्रथमो भागः पृ.सं.21
2. महाभाष्य-प्रदीप-प्रकाशः प्रथमो भागः पृ.सं.31

6) **विभक्तिं कुर्वन्ति**-इदं षष्ठं प्रयोजनम्। कुत्र कीदृशी विभक्तिः प्रयोक्तव्या इति ज्ञानाय अध्येयं व्याकरणम् अत्र भाष्यकारः ब्रवीति-याज्ञिकाः पठन्ति-'प्रयाजाः सविभक्तिकाः कार्याः' इति। न चान्तरेण व्याकरणं प्रयाजाः सविभक्तिकाः शक्याः कर्तुम्। अतः अध्येयं व्याकरणम्।

7) **यो वा इमाम्**-यो वा इमां पदशः स्वरशोऽक्षरशश्च वाचं विदधाति स आर्त्विजीनो भवति। आर्त्विजीनाः स्याम इत्यध्येयं व्याकरणम्।

8) **चत्वारि**-

**चत्वारि शृङ्गा त्रयो अस्य पादा**
**द्वे शीर्षे सप्त हस्ता सो अस्य।**
**त्रिधा बद्धो वृषभो रोरवीति।**
**महो देवो मर्त्यां आविवेश।।**[1]

इत्यनेन माध्यमेन व्याकरणद्वारा मोक्षत्वं स्पष्टीकृतमिति।

9) **उतत्वः**-इदं नवमं प्रयोजनं व्याकरणस्य, अत्र वदति भाष्यकारः-'उत त्वः पश्यन्न ददर्श वाचमुत त्व शृण्वन्न शृणोत्येनाम्।'

**उतो त्वस्मै तन्वं विसस्रे।**
**जायेव पत्य उशती सुवासाः।।**

अर्थात् जाया यथा पत्ये कामयमाना सुवासाः स्वमात्मानं विवृणुते, एवं वाग्विदे स्वात्मानं विवृणुते, एवं वाग्वाग्विदे। वाङ्नो विवृणुयात् आत्मानमित्यध्येयं व्याकरणम्।

10) **सक्तुमिव**-भाष्यकारः आह-

**'सक्तुमिव तितउना पुनन्तो**
**यत्र धीरा मनसा वाचमक्रत।**
**अत्रा सखायः सख्यानि जानते**
**भद्रैषां लक्ष्मीर्निहिताधिवाचि।।**[2]'

'सक्तु'-सचतेर्दुर्धावो भवति, कसतेर्वा विपरीताद्विकसितो भवति। 'तितउ'-परिपवनं भवति-ततवद्वा तुन्नवद्वा तुन्नवद्वा। 'धीरा'-ध्यानवन्तः। 'मनसा'-प्रज्ञानेन। 'वाचमक्रत'-वाचमकृषत। 'अत्रा सखायः सख्यानि जानते'।

11) **सारस्वतीम्**-

याज्ञिकाः पठन्ति-'आहिताग्निरपशब्दं प्रयुज्य प्रायश्चित्तीयां सारस्वतीमिष्टिं निर्वपेदिति।। 'प्रायश्चित्तीया मा भूमे' त्यध्येयं व्याकरणम्। सारस्वतीम्।

---

1. महाभाष्य-प्रदीप-प्रकाशः प्रथमो भागः पृ.सं.35
2. महाभाष्य-प्रदीप-प्रकाशः पृ.सं.41

12) **दशम्यां पुत्रस्य-द्वादशं प्रयोजनम्**

याज्ञिकाः पठन्ति-'दशम्युत्तरकालं पुत्रस्य जातस्य नाम विदध्याद्धोषवदाद्यन्तरन्तः स्थमवृद्धं त्रिपुरूषानूकमनरिप्रतिष्ठितं, तद्धि प्रतिष्ठिततमं भवति, द्वयक्षरं चतुरक्षरं वा नाम कृतं कुर्यान्न तद्धितम् इति न चान्तरेण व्याकरणं कृतस्तद्धिता वा शक्या विज्ञातुम्। दशम्यां पुत्रस्या।

13) **सुदेवो असि-**

> **सुदेवो असि वरुण! यस्य ते सप्त सिन्धवः।**
> **अनुरक्षन्ति काकुदं सूर्म्यं सुषिरामिव॥**

सुदेवो असि वरुण!-सत्यदेवोऽसि। यस्य ते सप्त सिन्धवः'। सप्त विभक्तयः। अनुक्षरन्ति काकुदम्'। काकुदं-तालु। काकुर्जिह्वा साऽस्मिन्नुद्यत इति काकुदम्'। 'सूर्म्यं सुषिरामिव'। तद्यथा-शोभनामूर्तिं सुषिरामग्निरन्तः प्रविश्य दहत्येवं ते सप्त सिन्धवः सप्तविभक्तयस्ताल्वनुक्षरन्ति। तेनाऽसि सत्यदेवः। 'सत्यदेवाः स्यामे' त्यध्येयं व्याकरणम्। सुदेवो असि।

एवं प्रकारेण निबंधेऽस्मिन् महाभाष्यमाधारीकृत्य अथ गुरूपरम्पराम् अधिकृत्य प्रयोजनानां वर्गीकरणं विहितम्, शब्दानुशासनस्य महद्वैशिष्ट्यं वर्तते, अतो निष्कर्षरूपेण कथयितुं शक्नुमो यत् संस्कृतभाषायाः व्याकरणमेव पूर्णं यत्र यल्लिख्यते तदेवोच्चार्यते, एको नियमः सर्वत्र। इत्यादिकमपि संस्कृतभाषायाः वैशिष्ट्यं वर्तते। अतः उक्तञ्च-

> **यद्यपि बहुनाधीषे तथापि पठ पुत्र व्याकरणम्।**
> **स्वजनः श्वजनो मा भूत सकलं शकलं सकृच्छकृत्॥**

॥ इति शम् ॥

ISSN : 0975-1769

# व्यञ्जनावृत्तिविमर्शः

- डॉ. राजकुमारमिश्रः
संविदा अध्यापक, मु.स्वा.पी.,
राष्ट्रिय संस्कृत संस्थान

**शोधपत्रेऽस्मिन् ध्वन्यालोकदिशा व्यञ्जनावृत्ति विषये अनुसन्धात्रा विवेचनं कृतम्।**

व्यञ्जनावृत्तिः काव्यस्य प्रमुखो व्यापारो वर्तते। इयं वृत्तिः काव्यालोचकैः साहित्य-शास्त्रविद्भिराविष्कृता। अयमेव महाकवेः मुख्यो व्यापारः। कविः लौकिकालौकिकान् वा पदार्थान् काव्ये वर्णयति परन्त्वत्रापि यदि कविना यथादृष्टः श्रुतो वा अर्थः काव्ये तथैव वर्ण्यते तर्हि न कोऽपि चमत्कारः आयाति। अतोऽत्र कविः स्वकीयया प्रतिभया चमत्कार-मादधाति। चमत्कृतिरत्र आनन्दस्य वाचिका।। यथाहुः अभिनवगुप्तपादाचार्याः लोचने **आनन्दो निर्वृत्यात्मा चमत्कारापरपर्यायः**[1]**।** कालिदासादिप्रभृतीनां महाकाव्यं काव्या-लोचकेभ्यः आनन्दं ददाति, स आनन्दः न वाच्यवाचकभावेन, न लक्ष्यलक्षकभावेन अपितु प्रतीयमानार्थमहिम्नैव आयाति। प्रतीयमानार्थोऽसौ नाभिधावृत्त्या, न चापि लक्षणया बोध्यते यतोहि अभिधा साक्षात् संकेतितमर्थं बोधयति। यस्य शब्दस्य यस्मिन्नर्थे साक्षात् संकेतोऽ-सावभिधायाः विषयः। यद्यपि लक्षणा वाच्यार्थातिरिक्तमर्थं बोधयति तथाप्येषा वाच्यार्थ-सम्बद्धमेवार्थं प्रत्यायति नासम्बद्धमर्थम्। अत **एवाभिधापुच्छभूता लक्षणा उक्ता श्रीमद्भिर-भिनवगुप्दपादैः**[2]**।**

ध्वन्यालोकस्य प्रथमकारिकायां काव्यस्यात्मा ध्वनिरिति ग्रन्थकाराः आहुः, अस्याः कारिकायाः व्याख्या कुर्वता अभिनवगुप्तेन निगदितम्। **आत्मशब्दस्य तत्त्वशब्देनार्थं विवृण्वानः सारत्वमपरशाब्दवैक्षण्यकारित्वं च दर्शयति**[3]**।** अर्थाद् अयं प्रतीयमानार्थः काव्यस्य प्रमुखं तत्त्वमस्ति, अस्मात् कारणादेव काव्यं लौकिकवाक्येभ्यः, एवमेव वैदिक-वाक्येभ्यः विलक्षणं वर्तते। अत्र काव्ये वैलक्षण्यसम्पादिका वृत्तिः व्यञ्जना अस्ति। अभिधालक्षणाभ्यां निश्चितस्यैवार्थस्य बोधानात् मीमांसादिषट्शास्त्रेषु एतयोः द्वयोरूपयोगः।

---

1. लोचने पृष्ठ 37
2. लोचने पृष्ठ 159
3. लोचने पृष्ठ 9

परन्तु सहृदयहृदयाह्लादके काव्ये प्रतीयमानार्थस्य परमाह्लादकत्वेन स्वीकृतत्वादभिधालक्षणाभ्यां न निर्वाहः। अयं व्यङ्ग्यार्थः येन केनापि शब्देन न बुध्यते अपितु अस्य व्यङ्ग्यार्स्थस्य प्रकाशकः कश्चन एव शब्दो वर्तते। यथाह आनन्दवर्धनः ध्वन्यालोके–

**सोऽर्थस्तद्व्यक्तिसामर्थ्ययोगी शब्दश्च कश्चन**
**यत्नतः प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवेः।**[1]

अतएव अस्य विशिष्टार्थस्य प्रकाशनाय कश्चन विशिष्टः काव्यव्यापारः आलङ्कारिकैः स्वीकृतः। स च व्यापारः व्यञ्जनाव्यापारो वर्तते। एतस्याः व्यञ्जनायाः लक्षणमित्थं विहितं गुप्तपादैः। **तच्छक्तित्रयोपजनितार्थावगममूलजाततत्प्रतिभासपवित्रितप्रतिपत्तृप्रतिभा–सहायार्थद्योतनशक्तिर्ध्वननव्यापारः**[2] अर्थात् उक्तशक्तित्रयोपजनितोऽर्थावगम एव मूलं तस्माज्जाता, तस्यैवार्थस्य प्रतिभासेन निरन्तरप्रतिपत्त्या पवित्रितो यः औचित्योद्बोधेनसंस्कृतः प्रतिपत्ता, तस्य या प्रतिभा, तत्सहाया अर्थस्य प्रयोजनादिलक्षणस्य द्योतनशक्तिः ध्वननव्यापारः।

यथा ध्वन्यालोके–

**उक्त्यन्तरेणाशक्यं यत्तच्चारूत्वं प्रकाशयन्**
**शब्दो व्यञ्जकतां बिभ्रद्ध्वन्युक्तेर्विषयी भवेत्।**[3]

अन्या उक्तिः उक्त्यन्तरं तेन उक्त्यन्तरेण प्रकाशयितुम् अशक्यं यच्चारूत्वं प्रकाशयन् शब्दो व्यञ्जकतां बिभ्रद् ध्वनिव्यपदेशभाग् भवति। साहित्यदर्पणकारस्य विश्वनाथस्य लक्षणमित्थमस्ति–

**विरतास्वभिधाद्यासु ययाऽर्थो बोध्यते परः।**
**सा वृत्तिर्व्यंजना नाम शब्दस्यार्थादिकस्य च**[4]**॥**

अभिधाद्यासु अभिधालक्षणातात्पर्यात्मिकासु तिसृष्वेव वृत्तिषु विरतासु, स्वं स्वमर्थं बोधयित्वा निवृत्तव्यापारासु सतीषु यया वृत्त्या अपरोऽभिधेयादिव्यतिरिक्तः वस्त्वलंकाररस–लक्षणोऽर्थो बुध्यते सा शब्दस्य अर्थस्य च वृत्तिः व्यञ्जना नामिका उच्यते। इत्थं च **अभिधेयादिभिन्नार्थोपस्थापकवृत्तित्वं व्यञ्जनात्वमिति।** काव्ये वाच्यार्थस्तु केवलमुपाय–मात्रमेव वर्तते औपयिकोऽर्थस्तु प्रतीयमान एव। काव्यज्ञः तावन्तं वाच्यार्थं ग्रहणाति यावनसौ वाच्यार्थः प्रतीयमानार्थप्रकाशने सहकारितामवलम्बेत। अयं प्रतीयमानार्थः महाकवीनाम् वाणीषु विशिष्टं स्थानं धारयति। यतः व्यङ्ग्यव्यञ्जकाभ्यामेव सुप्रयुक्ताभ्यां महाकवित्वलाभो महाकविनाम्। यथा ध्वन्यालोके–

---

1. ध्वन्यालोके 97
2. पृष्ठ लोचने 60
3. ध्वन्यालोके पृष्ठ 155
4. साहित्यदर्पणे पृष्ठ 53

**प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।**
**यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु[1]॥**

अर्थात् यथा रमणीषु यत् लावण्यं भवति तत् नालङ्कारेषु नापि निर्दुष्टेष्वावयवेषु भवति अपितु केयूरावतंसादिलौकिकालङ्कारव्यतिरिक्ते, एवमेव मुखाधरकपोलाद्यावयवेभ्योऽ-प्यतिरिक्ते लावण्ये एव हृदयावर्जकता भवति, तथैव काव्येऽपि सहृदयहृदयसमास्वद्यः प्रतीयमानार्थः अलंकारवत् वाच्यार्थाद् व्यतिरिक्तः स्वशब्देनानभिहितो ललनालावण्यवत् प्रतिभाति। यथा कदाचित् काणत्वादिदोषरहितायाः विविधकटककेयूरादिविभूषणविभूषितायाः कामिन्याः शरीरावयवे लावण्यस्य प्रतीति र्न जायते तथैव अनेकानुप्रासोपमाद्यलङ्कारविभूषितस्य वाच्यार्थचारूत्वहेतुभूतस्य विद्यमानत्वेऽपि, प्रतीयमानार्थस्याभावाल्लावण्यरहिता कामिनिवत् काव्यं सहृदयहृदयं नावर्जयति। यथा च शरीरावयवोपस्कारकलङ्काररहिताया अपि कामिन्याः लावण्यमेव परमं भूषणम् तथैव स्वशब्देनानभिधीयमानः प्रतीयमानाऽर्थ एव काव्याङ्गनायाः लावण्यवत् परमं तत्वमिति।

यथा लोचने

**लावण्यं हि नामावयवसंस्थानाभिव्यङ्ग्यमवयवव्यतिरिक्तं धर्मान्तरमेव। न चावयवानामेव निर्दोषता वा भूषणयोगो वा लावण्यम्, पृथकनिर्वर्ण्यमानकाणादि-दोषशून्यशरीरावयवयोगिन्यामप्यलंकृतायामपि लावण्यशून्येयमिति अतथाभूतायामपि कस्याञ्चिल्लावण्यामृचन्द्रिकेयमिति सहृदयानां व्यवहारात्।[2]**

अयं व्यञ्जनया बोधितोऽर्थः साक्षादनभिहितोऽर्थो वर्तते, यतः साक्षादभिहितोऽर्थो यथा घटपदस्य घटत्वरूपोऽर्थः, पटपदस्य पटत्वरूपोऽर्थः, अयमभिधया बोध्यः, परं साक्षादनभिधेयोऽर्थस्तु व्यङ्ग्यः, व्यङ्ग्यो नाम यथा ध्वन्यालोके-

**वस्तुचारूत्वप्रतीतये स्वशब्दानभिधेयत्वेन**
**यत्प्रतिपादयितुमिष्यते तद् व्यङ्ग्यम्।[3]**

ध्वनिकारो वदति यत् यः विशिष्टोऽर्थो भवति तन्न स्पष्टतया वाच्यवत् प्रतिपादनीयो भवति, विद्वत्गोष्ठीषु यत् रमणीयं वस्तु भवति तेषां प्रकाशनं नहि साक्षात् शब्दतो भवति। यथा-

**अत्यन्तसारभुतत्वाच्चायमर्थो व्यङ्ग्यत्वेनैव दर्शितो न तु वाच्यत्वेन। सारभुतो ह्यर्थः स्वशब्दानभिधेयत्वेन प्रकाशितः सुतरामेव शोभामावहति। प्रसिद्धिश्चेयमस्त्येव विदग्धपरिषत्सु यदभिमततरं वस्तु व्यङ्ग्यत्वेन प्रकाश्यते न साक्षाच्छब्दवाच्यत्वेन[4]।**

---

1. ध्वन्यालोके पृष्ठ 47
2. ध्वन्यालोक पृष्ठ 49
3. ध्वन्यालोक पृष्ठ 466
4. ध्वन्यालोक पृष्ठ 576

साक्षाच्छब्देनोपस्थापितो वाच्यार्थः न कांचित चमत्कृतिमुदपादयति, स त्वेकस्मिन्नेव बोद्धव्यविषये भवति। यथा ध्वन्यालोके उदाहृते एकस्मिन् पद्ये गुप्तपादो वदति।

पद्यं च

**कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम्।**
**सभ्रमरपद्मघ्राणशीले वारितवामे सहस्वेदानीम्॥**

अत्र वाच्यप्रतीयमानौ द्वावप्यर्थौ बुद्धिपथमवतरतः। तत्र वाच्योऽर्थो नायिकानिष्ठा। प्रतीयमानार्थस्त्वनेकविषयः। वाच्यार्थो यथा उपपतिमुपभुज्य गृहं प्रत्यागतां काञ्चित् खण्डिता-धारां रमणीं दृष्ट्वा तस्याः रतिं गोपायितुं नायिकायाः प्रियसखी भर्तृसन्निधौ तामित्थं वदति- स्वप्रियतमायाः व्रणयुक्तमधरमवलोक्य ईर्ष्यारहितस्यापि जनस्य मनसि परपुरूषरतिशंका समुपजायते अतः सभ्रमरपद्मघ्राणस्वभाववत्या त्वया महत्कष्टमामन्त्रितम्, खण्डिताधरां भवतीं दृष्ट्वा भवत्याः पतिः अवश्यमेव त्वां पीडयिष्यतीति। यद्यपि भवत्याः अधरे व्रणं भ्रमरदंशजन्यम्, तथापि जनाः ईदृशमधरं विलोक्य किञ्चित अन्यमेव चिन्तयन्ति, मया त्वं एतस्मात् कार्यात् निवारिता तथापि सभ्रमरपद्मघ्राणरूपस्वकीयशीलो न त्वं परित्यक्तः। अतः स्वकार्यस्य फलं इदानीमवश्यमेव भोक्तव्यम।

एष नायिकाविषयो अभिधेयार्थः साक्षाच्छब्देनागतः। अयं साक्षात्संकेतितोऽर्थो असहृदया-नामपि प्रतीयते। सहृदया अत्र काव्यवासनया परिपक्वधियो वर्तन्ते। यथाहुः ध्वन्यालोकलोचने गुप्तपादाः।

**येषां काव्यानुशीलनाभ्यासवशाद्विशदीभूते मनोमुकरे वर्णनीयतन्मयीभवनयोग्यता ते स्वहृदयसंवादभाजः सहृदयाः।**[1]

उदाहरणमिदमार्थीव्यञ्जनायाः वर्तते। अस्यां आस्वादयितुः प्रतिभा सहकारिकारणं भवति। अतएव लोचने वदति अभिनवगुप्तः **प्रतिपत्तृप्रतिभासहकारित्वं ह्यस्माभिद्योतनस्य प्राणत्वेनोक्तम्**[2]**।**

अस्मात् श्लोकात् प्रतिभागुणविशिष्टैः सहृदयैरपरोऽर्थोऽप्यास्वाद्यते। अयमेवार्थः प्रतिपत्तृप्रतिभानुप्राणितः प्रतीयमानः। असौ प्रतीयमानार्थः वक्तृबोद्धव्यादीनामुपाधीनां साहाय्येन अनवधिरनेकविषयको भवति। तद्यथा अतिविदग्धा सखि स्वसख्युः समीपे तस्याः पतिमवलोक्य सव्रणस्याधरस्य दर्शनेन इयमस्माकं सखी भर्तुः कोपभाजनं भविष्यतीति विचिन्त्य सभ्रमर-पद्मघ्राणकारणात् अस्याः मत्सख्याः अधरे व्रणं जातं न तु परपुरूषसहवासवशादतो अस्याः अपराधः नास्तीति व्यङ्ग्यस्य विषयः तस्याः भर्ता वर्तते। अथ च अस्याः अधरे भ्रमरकृतं क्षतं नेयं मत्सखी दुश्चरित्रेति प्रतिवेशिकजनानामयं व्यङ्ग्यार्थो वर्तते। प्रियायाः इति शब्दबलात् पत्युः प्रियाः वर्तते इति सपत्नीविषयः व्यङ्ग्यार्थो भवति। अद्येयं तव प्रियतमा

---

1. लोचने पृष्ठ 40
2. लोचने पृष्ठ 68

मया स्वकीयेन वाक्चातुर्येण रक्षिता पुनरेवं त्वया नोपभोग्या, येन दन्तदंशनादिनि उपभोग-चिह्नानि प्रकटितानि भवेयुरिति व्यङ्ग्यं प्रच्छन्नकामुकविषयकमिति।

असौ प्रतीयमानार्थः रसवस्त्वलंकारभेदात् त्रिविधो भवति। वस्तुरूपो यो व्यग्योऽर्थः सः कदाचित् स्वशब्देनाभिहितेऽपि चमत्कारि भवति, एवमेव अलंकारोऽपि। परन्तु रस-रूपोऽर्थः कदाचिदपि स्वशब्देनाभिहितो न भवति। अर्थात् रसः रसः श्रृंगारः श्रृंगारः इति कथनेन न कोऽपि चमत्करो जायते। अत्र शंका जायते, यत् वत्स्वलंकारयोरपि वस्त्वलंकार-पदाभ्यामभिधाने न कोऽपि चमत्कार आयाति, अतः अनयोरपि कथं वाच्यतासहत्वमिति। अत्र वाच्यतासहत्वं नाम वाक्यार्थबोधविषयत्वे चमत्कारित्वमेव। तच्च वस्त्वलंकारयोरेव न तु रसस्य। रसोऽयं साक्षादसंकेतितो वर्तते। ननु रसादि रूपो योऽर्थो वर्तते सोऽपि संकेतित एव स्यात्, संकेते कश्चन विशिष्टो नियमो नास्ति। परन्तु रसोऽपि संकेतित एव स्वीक्रियते चेत् यथा शून्यं वासगृहं विलोक्य इत्यादेः श्लोकात् यो श्रृगाररसो प्रतीयते। तत्र शून्यादिपदानां श्रृगाररूपेऽर्थे संकेतः नास्ति। यदि अत्रापि उच्यते श्रृगाररूपो योऽर्थ सोऽपि संकेतित एव, तदा शून्यं मण्डलं इत्यत्रापि श्रृगाररसस्य प्रतीतेः आपत्तिः स्यात्।

असौ प्रतीयमानार्थः रसवस्त्वलंकारभेदात् त्रिविधो भवति। अयं पिहितोऽर्थः व्यञ्जनया प्रतीयते। शब्दानां यो पिहितोऽर्थो भवति तमेव पिहितमर्थं व्यञ्जना प्रकाशयति। असहृदयाः काव्ये परिस्फुरन्तं परममनभिहितमर्थमवगन्तुं न प्रभवन्ति, परन्तु सहृदयाः निरन्तरकाव्याभ्यास-वशात् विशदीभूतया प्रतिभया गूढमप्यर्थमास्वादयन्ति, अत एव केवलं वाच्यवाचककृतश्रमाः मीमांसकतार्किकप्रभृतयः काव्यमास्वादयितुं न प्रभवन्ति। यतः नहि शब्दार्थशासनेन व्याकरण-ज्ञानमात्रेणैव अयं प्रतीयमानार्थः वेद्यते, न च व्याकरणशास्त्रे प्रतिपादितानां वाक्यार्थानामत्र काव्ये उपयोगिता वर्तते, काव्ये रसस्यैव प्राधन्यं भवति यथाहुः-

**अयमेव हि महाकवेर्मुख्यो व्यापारो यद्रसादीनेव मुख्यतया काव्यार्थीकृत्य तद्व्यक्त्यनुगुणत्वेन शब्दानामर्थानां चोपनिबन्धनम्[1]।**

इति शम्

**सन्दर्भग्रन्थसूची**

1. चौखम्भासंस्कृतप्रतिष्ठानम् पो.बा.नं. 1139 के. 37/116, गोपालमन्दिरम् वाराणसी-221001
2. चौखम्भासंस्कृतप्रतिष्ठानम् पो.बा.नं. 1139 के. 37/116, गोपालमन्दिरम् वाराणसी-221001
3. चौखम्भाविद्याभवनचौक, बनारस स्टेट बैंक भवन के पीछे पो.बा.नं. 1069 वाराणसी-221001

1. ध्वन्यालोक पृष्ठ 442

4. चौखम्भासुरभारतीप्रकाशनम् के, 37/117, गोपालमन्दिरम् पो.बा.नं. 1129, वाराणसी 221001
5. चौखम्भासंस्कृतप्रतिष्ठानम् पो.बा.नं. 1139 के. 37/116, गोपालमन्दिरम् वाराणसी–221001
6. चौखम्भाविद्याभवनचौक, बनारस स्टेट बैंक भवन के पीछे पो.बा.नं. 1069 वाराणसी–221001
7. चौखम्भासुरभारतीप्रकाशनम् के, 37/117, गोपालमन्दिरम् पो.बा.नं. 1129, वाराणसी 221001
8. चौखम्भासंस्कृतप्रतिष्ठानम् पो.बा.नं. 1139 के. 37/116, गोपालमन्दिरम् वाराणसी–221001
9. चौखम्भाविद्याभवनचौक, बनारस स्टेट बैंक भवन के पीछे पो.बा.नं. 1069 वाराणसी–221001
10. चौखम्भासुरभारतीप्रकाशनम् के, 37/117, गोपालमन्दिरम् पो.बा.नं. 1129, वाराणसी 221001
11. चौखम्भासंस्कृतप्रतिष्ठानम् पो.बा.नं. 1139 के. 37/116, गोपालमन्दिरम् वाराणसी–221001
12. चौखम्भाविद्याभवनचौक, बनारस स्टेट बैंक भवन के पीछे पो.बा.नं. 1069 वाराणसी–221001
13. चौखम्भासुरभारतीप्रकाशनम् के, 37/117, गोपालमन्दिरम् पो.बा.नं. 1129, वाराणसी 221001
14. चौखम्भाविद्याभवनचौक, बनारस स्टेट बैंक भवन के पीछे पो.बा.नं. 1069 वाराणसी–221001

संस्कृत-विमर्शः 2016 ( अङ्कः-11 )　　　　ISSN : 0975-1769

# तिङर्थविचारः

- डॉ. रामनारायणद्विवेदी

सहाचार्यः, श्रीला.ब.रा.सं.विद्यापीठम्, नवदेहली

**अस्मिन् शोधपत्रे अनुसन्धात्रा तिङ्र्थानां विषये व्याकरणदिशद् उपस्थापनं कृतम्।**

अत तिङर्थो विचार्यते तथा हि "**उच्चरितः शब्दः प्रत्यायको नानुच्चरितः**" इति भाष्याल्लोके तदनुभवाच्च लाघवेन शास्त्रप्रक्रियामात्रनिर्वाहाय स्थानित्वेन कल्पिते लकारे तिबादिगतां बोधजनकतां प्रकल्प्य लकारस्य विधानेऽपि "यो यदर्थाभिधानसमर्थः स तस्यादेश" इति न्यायेन लकारस्य प्रयोगघटकतयाऽनुच्चारितत्वेन च तिबादिशक्तिबोधन एव "वर्तमाने लट्"[1] इत्यादिविधायक-"लः कर्मणि"[2] इत्यादिशक्तिग्राहकसूत्राणां तात्पर्यमिति वैयाकरणसिद्धान्तः। सम्प्रति वैयाकरणदृष्ट्या लकाराणामर्थो निरूप्यते।

तत्र संख्याविशेष-कालविशेष-कारकविशेषभावाः लादेशमात्रस्याऽर्थाः। तथा हि लडादेशस्य वर्तमानकालः, शबादिसमभिव्याहारे कर्ता, यक्चिण्समभिव्याहारे भावकर्म्मणी, उभयसमभिव्याहारे एकत्वसंख्या चाऽर्थः। समभिव्याहृतत्वं च पदविशिष्टत्वम्, वैशिष्ट्यं च स्वपूर्वत्वस्वोत्तरत्वसम्बन्धेनेति। तदुक्तम्-

**फलव्यापारयोस्तत्र[3] फले तङ्यक्चिणादयः।**
**व्यापारे शप्श्नमाद्यास्तु द्योतयन्ति क्रियान्वयम्॥**

फलव्यापारौ च धात्वर्थावित्युक्तमेव। तत्र तिङ्समभिव्याहारे तदर्थसंख्या तदर्थकारके विशेषणम्। कालस्तु व्यापारे। तदाह-

**फलव्यापारयोर्धातुराश्रये[4] तु तिङः स्मृताः।**
**फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम्॥**

तिङर्थः कर्ता व्यापारे कर्म च फले विशेषणम्। तिङर्थसंख्या कर्तृप्रत्ययसमभिव्याहारे कर्तरि कर्मप्रत्ययसमभिव्याहारे च कर्मणि विशेषणम्। "भावप्रधानमाख्यातम्"[5] इति यास्क-

---

1. पाणिनि-अष्टाध्यायी, 3।2।123
2. तदेव, 3।4।69
3. नागेशभट्ट-परमलघुमंजूषा/लकारार्थविचारः
4. कौण्डभट्ट-वैयाकरणभूषणसारः/धात्वर्थनिर्णयः/कारिका-2
5. यास्क-निरुक्तम् 1।1 पा.1 खण्ड

वचनात् क्रियाप्राधान्यबोधक–"भूवादयो धातवः"[1] इति सूत्रस्थभाष्ये च क्रियापदं करण-व्युत्पत्त्या व्यापारपरं, कर्मव्युत्पत्त्या फलपरं तथा च कर्त्राख्याते कर्माख्याते वा सर्वत्र व्यापारमुख्यविशेष्यक एव शाब्दबोधो भवति। अत एव–"फले प्रधानं[2] व्यापारः तिङर्थस्तु विशेषणम्" इति वैयाकरणभूषणसारोक्तिः संगच्छते। तथा च 'ग्रामं गच्छति चैत्र' इत्यत्र ग्रामाभिन्नकर्मनिष्ठसंयोगानुकूलः समवायसम्बन्धावच्छिन्नैकत्व वच्छिन्नचैत्राभिन्नाश्रयको वर्तमान-कालिको व्यापारः। ग्रामो गम्यते मैत्रेणेत्यादौ तु मैत्राश्रयको वर्तमानकालिकः समवायसम्बन्धा-वच्छिन्नैकत्वावच्छिन्नग्रामरूपनिष्ठसंयोगानुकूलो व्यापार इति प्राचीनाः वैयाकरणाः। नवीनास्तु कर्तृप्रत्ययसमभिव्याहारे व्यापारमुख्यविशेष्यकं, कर्मप्रत्ययसमभिव्याहारे च फलमुख्यविशेष्यकं शाब्दबोधं स्वीकुर्वन्ति।

लकारार्थास्तावत्–

**वर्तमाने परोक्षे श्वो भाविन्यर्थे भविष्यति।**
**विध्यादौ प्रार्थनादौ च क्रमाज्ज्ञेयाः लडादयः॥**[3]

क्रमेण लट्–लिट्–लुट्–लृट्–लेट्–लोडेते षट् टितो लकारास्तत्र सर्वप्रथमं लट् विचार्यते। वर्तमानेऽर्थे लट् भवति, "वर्तमाने लट्"[4] इति सूत्रात्।

किन्नाम वर्तमानत्वमिति जिज्ञासायां कौण्डभट्टेनोक्तम्–"प्रारब्धापरिसमाप्तत्वं [5]भूतभविष्यद्भिन्नत्वं वा वर्तमानत्वम्" इति। नागेशेन तु–"वर्तमानकालत्वं [6]प्रारब्धापरि-समाप्तक्रियोपलक्षिततत्वम्" इति स्वीक्रियते। पचतीत्यादौ अधिश्रयणात्–चुल्युपरिस्थापनात् अधःश्रयणस्य–ततोऽवतारणस्य मध्ये वर्तमानानां फूत्कारत्वादीनामुपक्रियाणां द्योतनाय वर्तमान-काले विधीयमानस्य लडादेशस्य प्रयोगः। "आत्माऽस्ति" "पर्वताः सन्ति" इत्यादौ तत्तत्कालि-कानां क्रियाया अनित्यत्वात्तद्विशिष्टस्योत्पत्त्यादिकमादाय तेषां वर्तमानकालत्वं संगच्छते "इह भूतभविष्यद्"[7] वर्तमानानां क्रियास्तिष्ठतेरधिकरणम्" इति भाष्योक्तेः। लडादिप्रत्यय-माध्यमेन वर्तमानत्वादि द्योत्यते, क्रियासामान्यवाचकस्य वर्तमानत्वादिविशिष्टक्रियायां लक्षणायां लडादेरतात्पर्यग्राहकत्वेनोपयोगात्।

परोक्षेऽर्थे लिट् भवति, "परोक्षे लिट्"[8] इति सूत्रात्। कालस्तावद् द्विविधः–अद्यतना-ऽनद्यतनभेदात्। द्विविधोऽपि भूतभविष्यद्रूपः। तत्राऽनद्यतने भूते परोक्षे लिडित्यर्थः संगच्छते।

---

1. पाणिनि–अष्टाध्यायी, 1।3।1
2. कौण्डभट्ट–वैयाकरणभूषणसारः/धात्वर्थनिर्णयः/कारिका–2
3. तदेव, लकारार्थनिर्णयः/कारिका–22
4. पाणिनि–अष्टाध्यायी, 3।2।123
5. कौण्डभट्ट–वैयाकरणभूषणसारः/लकारार्थनिर्णयः
6. नागेशभट्ट–परमलघुमंजूषा/लकारार्थविचारः
7. पतंजलि–व्याकरणमहाभाष्यम्, 3।2।123
8. पाणिनि–अष्टाध्यायी, 3।2।115

तेनाऽनद्यतने भूते, अनद्यतने भविष्यति, भूतेऽप्यपरोक्षे च न लिट् प्रयोगः। परोक्षत्वं च "साक्षात् करोमि" इत्येतादृशविषयताशालिज्ञानाविषयत्वम्।

परोक्षत्वं च कारके विशेषणम्, न तु क्रियायां, तस्या अतीन्द्रियत्वेन "परोक्षे लिट्"[1] इति सूत्रे भाष्ये प्रतिपादनाद् व्यभिचाराभावात्, पिण्डीभूताया निदर्शयितुमशक्यत्वेऽप्यवकाशः, "साक्षात् करोमि" इति प्रतीतिविषयत्वसम्भवात्। अन्यथा 'पश्य मृगो धावति' इत्यत्र तस्याः दर्शनकर्मता न स्यात्। कृभ्वाद्यनुप्रयोगस्थले कृभ्वसां क्रियासामान्यमर्थः, आम्प्रकृतेस्तु तत्तत्क्रियाविशेषः। सामान्यविशेषयोरभेदान्वयः, अकर्मकप्रकृतिकाऽऽमन्तानुप्रयुक्तकृभ्वसामकर्मिकैव क्रिया।

वस्तुतस्तु–अनुप्रयुक्तानां कृभ्वसां फलशून्यक्रियासामान्यवाचकत्वमेव। सकर्मकाकर्मत्वव्यवहारस्तु आम्प्रकृतिभूधातोरेवेति निष्कर्षः एवं च "एधांचक्रे चैत्र" इत्यत्र एकत्वावच्छिन्नपरोक्षत्वावच्छिन्नचैत्रकर्तृका भूतानद्यतनकालाधिकरणिका वृद्ध्यभिन्ना क्रियेति बोधः।

लुडर्थमाह-श्वो भाविनि-अनद्यतने भाविन्यर्थे लुङ् भवति, "अनद्यतने लुट्"[2] इति सूत्रात्। यथा-श्वो भविता इत्यादयः।

लृडर्थमाह-भविष्यति-भविष्यत् सामान्येऽर्थे लृङ् भवति, "लृट् शेषे च"[3] इति सूत्रात्। यथा-घटो भविष्यतीत्यादयः। सामान्यभविष्यत्वञ्च वर्तमानप्रागभावप्रतियोगिसमयोत्पत्तिमत्त्वमिति कौण्डभट्टमतम्।[4] तत्र वर्तमानप्रागभावप्रतियोगिक्रियोपलक्षितत्वमिति नागेशमतम्।[5]

लेडर्थमाह-विध्यादौ छन्दसि वेदविषये लेङ् भवति, "लिङर्थे लेट्"[6] इति सूत्रात्। लेट्लकारे धातोः "लेटोऽडाटौ"[7], "सिब्बहुलं लेटि"[8], "सिब्बहुलं णिद् वक्तव्यं"[9], "इतश्च लोप[10] परस्मैपदेषु" इत्यादिसूत्रेभ्यो विशिष्टं कार्यं भवति। यथा-भाविषति, भाविषाति इत्यादयः। व्याकरणस्य वेदरक्षणे प्रयोजनत्वाद् वेदप्रयुक्तलेट्लकारस्य ज्ञानं वैयाकरणानां परमावश्यकमिति वेद्यम्।

लोडर्थमाह-विध्यादौ-विधि (प्रेरणम्)-निमन्त्रण-आमन्त्रण (कामचारानुज्ञा) अधीष्ट (सत्कारपूर्वको व्यापारः)-सम्पन्न (सम्प्रधारण, प्रार्थना) इत्येतेष्वर्थेषु आशिषि चार्थे लोङ्

---

1. पाणिनि-अष्टाध्यायी, 3।2।115
2. पाणिनि-अष्टाध्यायी, 3।3।15
3. पाणिनि-अष्टाध्यायी, 3।3।13
4. कौण्डभट्ट-वैयाकरणभूषणसारः/लकारार्थनिर्णयः।
5. नागेशभट्ट-परमलघुमंजूषा/लकारार्थविचारः
6. पाणिनि-अष्टाध्यायी, 3।4।7
7. पाणिनि-अष्टाध्यायी, 3।4।94
8. पाणिनि-अष्टाध्यायी, 3।2।34
9. कात्यायन-वार्तिकम्, 3।1।34
10. पाणिनि-अष्टाध्यायी, 3।4।97

भवति, "लोट् च"[1], "आशिषि लिङ्लोटौ"[2] इति सूत्राभ्यां तथाऽवगमात्। यथा-भवतु ते शिवप्रसाद इत्यादयः।

लडादिक्रमेण ङितामर्थो निरूप्यते। तत्र लङ्-लिङ्-लुङ्-लृङ् एते चत्वारो ङितो लकाराः भवन्ति। तदुक्तं भूषणे-

**ह्यो भूते प्रेरणादौ च[3] भूतमात्रे लङादयः।**
**सत्यां क्रियातिपत्तौ च भूते भाविनि लृङ्स्मृतः॥**

लङर्थमाह-ह्यो भूते-अनद्यतने भूतेऽर्थे लङ् भवति, "अनद्यतने लङ्"[4] इति सूत्रात्। यथा-अस्य पुत्रोऽभवत्।

लिङर्थमाह-प्रेरणादावर्थे लिङ् भवति। "विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्"[5] इति सूत्रात्। तत्र विधिः-प्रेरणम्, भृत्यादेर्निकृष्टस्य प्रवर्त्तनम्। निमन्त्रणम्-नियोगकरणम्, आवश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्त्तनम् प्रेरणेत्यर्थः। आमन्त्रणम्-कामचारानुज्ञा, अधीष्टम्-सत्कारपूर्वको व्यापारः, सम्प्रश्नः-सम्प्रधारणम्, अनुमतिर्वा। यथा-आगच्छतु भवान् जलं गृह्णातु, गच्छति चेत् भवान् गच्छत्वित्यादयः।

एतच्चतुष्टयानुगतप्रवर्त्तनात्वेन वाच्यता, लाघवात्। तदुक्तम्-

**अस्ति प्रवर्तनारूपमनुस्यूतं चतुर्ष्वपि।**
**तत्रैव लिङ्विधातव्यः किं भेदस्य विवक्षया॥**

**न्यायव्युत्पादनार्थं वा प्रपञ्चार्थमथापि वा।**
**विद्ध्यादीनामुपादानं चतुर्णामादितः कृतम्॥[6]**

प्रवर्तनात्वं च-प्रवृत्तिजनकज्ञानविषयतावच्छेदकत्वम्। तच्चेष्टसाधनत्वस्याऽस्तीति तदेव विध्यर्थः। न तु कृतिसाध्यत्वं तस्य यागादौ एव लाभादित्यन्यलभ्यत्वात्। न च बलवदनिष्टाननुबन्धित्वं, द्वेषाभावेनान्यथासिद्धत्वात्।[7]

आस्तिककामुकस्य नरकसाधनताज्ञानदशायामप्युत्कटेच्छया द्वेषाभावदशायां प्रवृत्तेर्व्य-भिचाराच्च। तस्मादिष्टसाधनत्वमेव प्रवर्तना।[8]

---

1. पाणिनि-अष्टाध्यायी, 3।3।162
2. पाणिनि-अष्टाध्यायी, 3।3।17
3. कौण्डभट्ट-वैयाकरणभूषणसारः/लकारार्थनिर्णयः।
4. पाणिनि-अष्टाध्यायी, 3।2।111
5. पाणिनि-अष्टाध्यायी, 3।3।1161
6. कौण्डभट्ट-वैयाकरणभूषणसारः/लकारार्थनिर्णयः।
7. पाणिनि-अष्टाध्यायी, 3।3।173
8. पाणिनि-अष्टाध्यायी, 3।3।156

प्रेरणादावित्यत्र आदिना आशिष्यर्थे हेतुहेतुमद्भावे चाऽर्थे लिङ् भवतीत्यर्थः।

लुङर्थमाह-भूते-भूतसामान्येऽर्थे लुङ् भवति, "भूते"[1] इत्यधिकृत्य "लुङ्"[2] इति सूत्रात्। अत्र विद्यमानध्वंसप्रतियोगित्वं भूतत्वम्। तच्च क्रियायां निर्बाधमिति विद्यमानेऽपि घटे, घटोऽभूदिति प्रयोगः। विद्यमानध्वंसप्रतियोगी घटाभिन्नाश्रयकः उत्पत्त्याद्यनुकूलो व्यापार इति बोधः।

कालो द्विविधः-अद्यतनोऽनद्यतनश्च। आद्यस्त्रिविधः-भूतभविष्यद्वर्तमानभेदात्। अन्त्यो द्विविधः-भूतो भविष्यच्च। तत्र वर्तमाने लट्। भूतत्वमात्रे लुङ्। भविष्यत्तामात्रे लृट्। हेतुहेतुमद्भावाद्यधिकार्थविवक्षायामनयोर्लृङ्। अनद्यतने भूतत्वेन विवक्षिते लङ्, तत्रैव परोक्षत्व-विवक्षायां लिट्। तादृशे भविष्यति लुट्।

लृङर्थमाह-सत्त्यामिति। क्रिया अतिपत्तिः-अनिष्पत्तिस्तस्यां गम्यमानायां, भूते, भाविनि हेतुहेतुमद्भावे सति लृङित्यर्थः, "लिङ्निमित्ते लृङ्क्रियातिपत्तौ"[3] इति सूत्रात्। लिङो निमित्तं हेतुमद्भावादि। यथा-सुवृष्टिश्चेदभविष्यत् सुभिक्षमभविष्यत्। वह्निश्चेत् प्राज्वलिष्य-दोदनमपक्ष्यदित्यादयः। अत्र वह्न्यभिन्नाश्रयकप्रज्वलनानुकूलव्यापाराभाव प्रयोज्यौदनाभिन्ना-श्रयकविक्लित्त्यनुकूलव्यापाराभाव इति शाब्दबोधः।

1. तदेव, 3।2।110
2. तदेव, 3।2।110
3. तदेव, 3।3।139

संस्कृत-विमर्शः 2016 (अङ्कः-11) ISSN : 0975-1769

# तिथि-निर्देश : यजुर्वेदीय ब्राह्मणों के सन्दर्भ में

- डॉ. अपर्णा धीर
असिस्टेन्ट प्रोफेसर, इन्स्टिट्यूट ऑफ
ऐड्वान्स्ट साइन्सीस, डार्टमोथ, यू.एस.ए.

**इस शोधपत्र में अनुसन्धाता ने अनेक स्थलों से लेकर तिथि के विषय में विचार किया, विशेषकर ब्राह्मण ग्रन्थों से।**

मानव जीवन जन्मकाल से मृत्युपर्यन्त 'काल' अर्थात् समय द्वारा नियन्त्रित रहता है। कर्मकाण्ड प्रधान वैदिक संस्कृति में यज्ञ की सफलता के लिए ऋषि ने काल के सूक्ष्मातिसूक्ष्म विभाजन को भी अपने चिन्तन में लिया है। इस विचारधारा के प्रत्यक्ष दर्शन कर्मकाण्ड के सर्वोत्तम प्रतिपादक यजुर्वेदीय ब्राह्मण ग्रन्थों में होते हैं। शुक्लयजुर्वेदीय शतपथ ब्राह्मण और कृष्णयजुर्वेदीय तैत्तिरीय ब्राह्मण में आकाशीय पिण्डों द्वारा प्रभावित काल के अवयवों अर्थात् संवत्सर, ऋतु, मास, तिथि, अहोरात्र आदि से सम्बद्ध गहन चिन्तन है। यजुर्वेदीय ब्राह्मणों में कथित इन सभी अवयवों में से प्रस्तुत शोध-पत्र में केवल तिथि-विश्लेषण पर ही प्रकाश डाला गया है।

**तिथि** के विषय में आरम्भ करने से पूर्व उल्लेखनीय है कि यजुर्वेदीय ब्राह्मण ग्रन्थों में 'तिथि' शब्द का सर्वथा अभाव है। मैकडॉनल और कीथ ने भी इस मत का समर्थन किया है।[1] केवल ऐतरेय ब्राह्मण ही ऐसा ब्राह्मणकालीन ग्रन्थ है, जिसमें तिथि का लक्षण दिया गया है। यहाँ चन्द्रमा के अस्त एवं उदय होने के काल को 'तिथि' कहा है।[2] साधारण शब्दों में कह सकते है कि चन्द्रमा की गति से प्रभावित काल की इकाई 'तिथि' कहलाती है। वर्तमान समय में चान्द्र-मास का तीसवाँ भाग अथवा चन्द्रमा की एक कला 'तिथि' कही जाती है।[3]

---

1. (अनु.) रामकुमार राय, *वैदिक इण्डेक्स*, चौखम्बा विद्याभवन, वाराणसी, 1962, भाग-1, पृ. 345
2. यां पर्यस्तमियादभ्युदियादिति स तिथिः। ऐतरेय ब्राह्मण 23.10
3. "A lunar day (30$^{th}$ part of a whole lunation of rather more than 27 solar days).", Monier Williams, *A Sanskrit-English Dictionary*, Bharatiya Granth Niketan, Delhi, 2004, p.446; "चन्द्रकलामेकां यः कालविशेषः सा तिथिः।", *वाचस्पत्यम्*, चौखम्बा संस्कृत सीरीज़, वाराणसी, 1990, चतुर्थ भाग, पृ. 3291

$360^0 \div 30 = 12^0$ (चन्द्रमा की एक कला)

$12^0$ = एक तिथि

माधवाचार्य ने 'तिथि' शब्द तनु धातु से निष्पन्न माना है। उनके अनुसार चन्द्रमा की पूर्ण और क्षय होने वाली कला का विस्तार करने वाला काल 'तिथि' कहलाता है।[1] ऐसा माना गया है कि सूर्य से संगम के अनन्तर जब चन्द्रमा बारह अंश के अन्तर में होता है, तब प्रति बारह अंश की एक-एक तिथि होती है[2] अर्थात् प्रत्येक बारह अंश आगे ही जाने पर एक तिथि बढ़ती जाती है। तिथि-चक्र को इस प्रकार जाना जा सकता है[3]–

$0^0$---$12^0$---$24^0$---$36^0$--->$180^0$---$192^0$---$204^0$--->$360^0$

(पूर्णमासी) (अमावस्या)

शतपथ और तैत्तिरीय ब्राह्मण केवल चन्द्रमा की खगोलीय गतिविधियों अर्थात् उसके उदय-अस्त, चन्द्र-कलाओं, उसके सूर्य से संयोग, उस संयोग से उत्पन्न अमावस्या-पूर्णमासी के कारणों से ही परिचित है। कह सकते है कि वर्तमान काल में प्राप्त तिथि का स्वरूप इन ब्राह्मणों से पूर्णतः भिन्न है। परवर्ती-काल में ज्योतिष ग्रन्थों में तिथियों की नंदा, भद्रा आदि संज्ञाएँ देखने को मिलती हैं। साथ ही प्रत्येक तिथि के स्वामी तथा उनके फल-कथन का वर्णन भी प्राप्त है (द्रष्टव्य-आथर्वण ज्योतिष प्रकारण-6; नारद-संहिता चतुर्थोऽध्याय; मुहूर्तचिन्तामणि शुभाशुभप्रकरण इत्यादि।) परन्तु यजुर्वेदीय ब्राह्मण ग्रन्थों में इस प्रकार तिथियों की संज्ञाओं एवं उनके स्वामियों का कथन कदापि नहीं है। परवर्ती-काल के समान प्रस्तुत ब्राह्मणों में 'क्षय' तिथि की चर्चा भी नहीं है। यद्यपि इन ब्राह्मणों में वर्तमान-काल के समान प्रतिपदा, द्वितीया आदि तिथियों का प्रचलन नहीं था तथापि उस काल में ऋषि ने अपने प्रयोजन हेतु कुछ-कुछ तिथियों का नामकरण अवश्य प्रारम्भ किया। तत्कालीन प्रचलित तिथिवाचक शब्दों का उल्लेख ही इस अध्ययन में प्रस्तुत किया गया है।

---

1. तिथिशब्दस्तनोते...वर्धमानां क्षीयमाणां वा, चन्द्रकलामेकां यः कालविशेषः सा तिथिः। कालमाधव, तृतीय प्रकार, चौखम्बा संस्कृत संस्थान, वाराणसी, 2005, पृ. 92
2. हरिदत्त शर्मा, *ज्योतिष विश्व-कोश*, सुबोध पब्लिकेशन्स, दिल्ली, 2000, पृ.244
3. "A *tithi* is the daily phase of the moon. For example, at new moon (*amavasya*) the sun and the moon are separated by zero degress. We can say they overlap. As they begin to separate the first *tithi* begins when the sun and the moon have separated by 12 degrees. The moon is now a tiny almost inperceptible sliver. The secone *tithi* begins when they are separated by 36 degrees. The digit of the moon is now clearly visible. And so it goes until the sun and moon have separated by 180 degress. This *tithi* is called full moon, *purnima*.",
*http://www.sanskrit.org/www/astronomy/hinducalender.html*

तैत्तिरीय ब्राह्मण में कृष्णपक्ष की अन्तिम रात्रि अर्थात् **अमावस्या** के लिए 'कामदुघा' शब्द का प्रयोग किया है।[1] निर्वचन की दृष्टि से शतपथ ब्राह्मण में 'अमा वसति' द्वारा 'अमावस्या' शब्द की व्युत्पत्ति दी गई है। कथन है कि अमावस्या की रात को चन्द्रमा न पूर्व में दिखाई देता है और न पश्चिम में परन्तु वह इस लोक में आकर जलों और ओषधियों मे प्रविष्ट कर जाता है। अतः ऐसा मानना चाहिए कि देवताओं का अन्न होने के कारण अमावस्या की रात चन्द्रमा यहाँ देवताओं के साथ रहता है इसीलिए अमा वसति से 'अमावस्या' नाम पड़ा।[2] शतपथ में प्रतिपादित अमावस्या के इस अर्थ की व्युत्पत्ति माधवाचार्य ने 'अमा' और 'वसु' द्वारा मानी है। उन्होंने अमा को 'सहभाव' अर्थ में तथा वसु को 'इन्द्र' एवं 'चन्द्र' अर्थ में ग्रहण किया है।[3] इससे दो अर्थों को ज्ञात किया जा सकता है। प्रथमतः जिस रात जलों और ओषधियों के साथ (अमा) चन्द्र (वसु) रहता है, उसे 'अमावस्या' कहते है। द्वितीयतः वृत्र के वध के बाद जब इन्द्र (वसु) देवताओं के पास आ गया, तब देवताओं ने कहा "हमारा (अमा) वसु (इन्द्र) जो चला गया था, आज साथ रहता है"[4] इसीलिए चन्द्रमा को देवताओं का 'वसु'[5] कहा है। इस प्रकार शतपथ में अमावस्या की उक्त दो व्युत्पत्तियों को कालमाधव द्वारा सरलता से ज्ञात किया जा सकता है। एक अन्य मत के अनुसार 'अमावस्या' शब्द का प्रतिपादन मिलता है-अ>मा>वस्या अर्थात् यहाँ 'अ' नकरात्मक है, 'मा' चन्द्रमा का द्योतक और 'वस्या' का अर्थ (√वस) निवास जानना चाहिए।[6] आप्टे में अमा + वस् + यत् से अमावस्या की व्युत्पत्ति कही है।[7]

व्युत्पत्ति के अतिरिक्त अमावस्या के स्वरूप के विषय में कई मत इन ब्राह्मण-ग्रन्थों में कहे गये हैं। शतपथ में अमावस्या का अर्थ दूर होना माना गया है। कथित है कि जब इन्द्र ने वृत्र को मारकर पाप को दूर किया, तब देवताओं ने इन्द्र को रस अर्थात्

1. तै.ब्रा. 3.10.1.1 (तैत्तिरीय ब्राह्मण)
2. ...ह्येषां तद्यदेष एतां रात्रिमिहामा वसति तस्मादमावास्या नाम। श.ब्रा. 1.6.4.5 (शतपथ ब्राह्मण - माध्यन्दिनी)
3. अमा वसुरस्यामित्यमावास्येति। कालमाधव, चतुर्थ प्रकरण, पृ. 408
4. ते देवा अब्रुवन्। अमा वै नोऽद्य वसुर्वसति यो नः प्रावत्सीदिति....। श.ब्रा. 1.6.4.3
5. ...से वै देवानां वस्वन्नम्....। श.ब्रा. 1.6.4.5
6. "The etymology of the word is clear from the combination of अमा and वस्या : अ in the sense of 'negation' and मा – a condensed form of चन्द्रमा and वस्या > the root वस (निवासे) 'to dwell' i.e. that night in which the moon is not visible.", Nargis Verma, *The Etymologies In the Satapatha Brahmana,* Nag Publishers, Delhi, 1991, p. 127
7. वामन शिवराम आप्टे, *संस्कृत-हिन्दी कोश,* चौखम्बा विद्याभवन, वाराणसी, 2007, पृ. 74

सान्नाय्य द्वारा प्रसन्न किया। वास्तव में यह सान्नाय्य पूर्णमासी को बनाया जाता है और अमावस्या को हवि रूप में प्रयुक्त होता है। इसी प्रकार जब चन्द्र क्षीण होने लगता है, तब मानना चाहिए कि देव इस चाँद को खाने वाले हैं।[1] चूँकि यह चन्द्रमा देवताओं का अन्न है इसीलिए अमावस्या के दिन यह चन्द्रमा न पूर्व में दिखाई देता है और न ही पश्चिम में।[2] मित्र और वरुण को पक्ष मानकर वर्णन है कि अमावस्या के दिन यह मित्र और वरुण दोनों मिल जाते हैं अर्थात् अमावस्या की रात को मित्र वरुण में वीर्य को सिंचता, जिससे चन्द्रमा पुनः उत्पन्न होता है। पुनः उत्पन्न होकर चन्द्रमा पश्चिम में चमकता है।[3] शतपथ के एक अन्य वाक्य में और अधिक स्पष्टता से बताया गया है कि अमावस्या के दिन चन्द्रमा आकाश में नहीं रहता परन्तु पृथिवीलोक में आकर वनस्पति और जलों में प्रविष्ट हो जाता है। वनस्पति और जलों के दूध से बनी आहुति द्वारा पुनः चन्द्रमा उत्पन्न होकर दूसरे दिन पश्चिम में चमकता है।[4] इस प्रकार शतपथ में मित्र-वरुण, इन्द्र-वृत्र आदि कथाओं द्वारा अमावस्या-तिथि को स्पष्ट किया गया है।

वास्तव में अमावस्या-तिथि के पीछे जो वैज्ञानिक दृष्टिकोण है, वह अभी-तक उपुर्यक्त चर्चा में स्पष्ट नहीं कहा गया है। ऐसा माना जाता है कि जिस समय सूर्य और चन्द्रमा एक सीध में आते हैं अर्थात् जिस समय दोनों के भोग्यांश समान होते हैं, उस समय अमावस्या-तिथि होती है।[5] इसी कारण अमावस्या-तिथि को सूर्य की रोशनी में चन्द्रमा छिप जाता है। इस वैज्ञानिक तथ्य का उल्लेख शतपथ में भी है। यहाँ वर्णित है कि यह जो तपता है अर्थात् सूर्य वह इन्द्र है और चन्द्रमा को वृत्र जानना चाहिए। ये दोनों परस्पर शत्रु हैं। पहले दूर उत्पन्न होने वाला यह चन्द्रमा इस अमावस्या की रात को तैरता हुए सूर्य के मुँह में घुस जाता है। तत्पश्चात् यह सूर्य उस चन्द्रमा को ग्रस कर उदय होता है और उस रात को यह चन्द्रमा न पूर्व में दिखाई देता है और न पश्चिम में। अगले दिन सूर्य उस चन्द्रमा को चूसकर बाहर फेंक देता है और चूसा हुआ वह चन्द्रमा पश्चिम में दिखता है। यह चन्द्रमा पुनः सूर्य के भोजन के लिए बढ़ता है।[6] शतपथ का यह प्रसंग दो-तीन विचारों को समेटे हुए है-प्रथमतः यह सूर्य और चन्द्रमा की गतियों की ओर संकेत करता है। चन्द्रमा के तैरने से अभिप्राय उसके भ्रमण से है अर्थात् अमावस्या की रात चन्द्रमा घूमता हुआ सूर्य के नज़दीक आ जाता है। दूसरा उपर्युक्त वर्णन में चन्द्रमा

---

1. ....पाप्मानं द्विषन्तं भ्रातृव्यं हन्ति तथोऽएव विजयतेऽथ यत्संनयत्यामावास्यं वै सांनाय्यम्. ..। श.ब्रा. 2.4.4.15
2. ....देवानामन्नं यच्चन्द्रमाः स एतां रात्रिं क्षीयते तस्मिन्क्षीणे ददाति...। श.ब्रा. 2.4.2.7
3. श.ब्रा. 2.4.4.18-20
4. ...एतां रात्रिं न पुरस्तान्न पश्चाद्ददृशे तदिमं लोकमागछति स इहापश्चौषधीश्च प्रविशति. ..। श.ब्रा. 1.6.4.15
5. हरिदत्त शर्मा, *ज्योतिष विश्व-कोश*, पृ. 244
6. श.ब्रा. 1.6.4.18-20

को देवताओं का अन्न कहा है, यहाँ देवता का अर्थ सूर्य जाना जा सकता है। तीसरा अमावस्या-चक्र भी ज्ञात हुआ क्योंकि वर्णित है कि यह चन्द्रमा बढ़ता हुआ पुनः भोजन बनता है। वास्तव में चन्द्रमा सोलह कला वाला है। चन्द्रमा पन्द्रह दिन घटता है परन्तु सोलहवीं कला में वह स्थिर रहता है। चन्द्रमा की यह सोलहवीं कला ही अमावस्या के नाम से जानी जाती है।[1]

तैत्तिरीय ब्राह्मण में चन्द्रमा के पूर्ण होने के सन्दर्भ में 'पूर्णमास'[2] एवं 'पौर्ण-मासी'[3] दोनों शब्द मिलते हैं। **पूर्णमासी** की व्युत्पत्ति 'पूर्ण' शब्द द्वारा देते हुए तैत्तिरीय ब्राह्मण में वर्णन है कि पूर्णमासी के दिन पृथिवी सुन्दर युवती के समान दीप्तियुक्त हो जाती है तथा इस दिन पूर्ण-चन्द्रमा में रहने वाले देवताओं की प्रसन्नता के लिए प्रार्थना की जाती है।[4] चूँकि चन्द्रमा पूर्णमासी की रात को पूरा होता है इसीलिए पूर्वपक्ष की अन्तिम रात्रि 'पौर्णमासी' कहलाती है।[5] प्रायः पूर्णि + मास + ङीप् से 'पूर्णमासी' शब्द की व्युत्पत्ति प्राप्त है।[6] पूर्णमासी-तिथि के कारण के विषय में वैज्ञानिक कहते हैं कि अमावस्या-तिथि को सूर्य और चन्द्रमा एक-साथ होते हैं और चूँकि चन्द्रमा की गति तीव्र होती है इसीलिए अमावस्या के उपरान्त यह आगे बढ़ जाता है, जिससे पूर्णमासी-तिथि के दिन वे दोनों एक दूसरे के आमने-सामने आ जाते हैं। इस प्रकार उनमें 180 ($12^0 \times 15$) अंश की दूरी होने के कारण चन्द्रमा (पूर्णमासी की रात) पूरा नज़र आता है क्योंकि चन्द्रमा पर सूर्य का पूर्ण प्रकाश पड़ता है। बृहत्संहिता में भी वर्णित है कि प्रतिदिन सूर्य से स्थान विशेष अर्थात् दूर-दूर गमन करने के कारण चन्द्रमा की शुक्लत्व बढ़ता है।[7]

यजुर्वेदीय ब्राह्मणों में अमावस्या एवं पूर्णमासी की स्थिति को अनेक वाक्यों द्वारा स्पष्ट करने का प्रयास किया गया है। वास्तव में चन्द्रमा ही अमावस्या एवं पूर्णमासी का मुख्य आधार है। पूर्णमासी और अमावस्या में अन्य रात्रियों का समवाय हो जाता है अर्थात् पूर्णमासी में चाँद के बढ़ने की (पूर्वपक्ष) और अमावस्या में चाँद के घटने की (अपरपक्ष) की रात्रियों का समन्वय होता है।[8] दोनों ब्राह्मणग्रन्थ अमावस्या एवं पूर्णमासी

---

1. पञ्चदश कला ध्रुवैवास्य षोडशी कला स रात्रिभिरेवा च पूर्यतेऽप च क्षीयते सोऽमा-वास्याम्...। श.ब्रा. 14.4.3.22
2. पूर्णमासं यजामहे। तै.ब्रा. 3.7.5.13
3. पूर्णा पश्चादुत पूर्णा पुरस्तात्। उन्मध्यतः पौर्णमासी जिगाय। तै.ब्रा. 3.1.1.12
4. पृथ्वी सुवर्चा युवतिः सजोषाः। पौर्णमास्युदगाच्छोभमाना। वही
5. तै.ब्रा. 3.10.1.1
6. वामन शिवराम आप्टे, *संस्कृत-हिन्दी कोश*, पृ. 630
7. प्रतिदिवसमेवमर्कात्स्थानविशेषेण शौक्ल्यपरिवृद्धिः...।। बृहत्संहिता 4.4
8. एते ह वै रात्री। सर्वा रात्रयः समवयन्ति या आपूर्यमाणपक्षस्य रात्रयस्ताः सर्वाः पौर्णमासीं समवयन्ति या अपक्षीयमाणपक्षस्य रात्रयस्ताः सर्वा अमावस्यां समवयन्ति...। श.ब्रा. 11. 1.7.4

**राष्ट्रस्वातन्त्र्यनिष्ठानां देशभक्तिमयात्मनाम्।**
**दुर्दास्यहतसत्त्वानां संजीवनरसायनम्।।** –(शिवराज्योदयम् भूमिका)

शिवराज्योदयं महाकाव्यम् अनुपमकृति: वर्तते यत्र मध्यमकाव्यस्य व्यापकत्वं दृश्यते।

क्षत्रपतिचरितं महाकाव्यम् डॉ. उमाशंकरत्रिपाठिमहोदयेन विरचितम्। इदं राष्ट्रीय-महाकाव्यम् अस्ति। अलंकारप्रयोगे कवि: निष्णात:। उपमालंकारस्य अधिकतमप्रयोग: दृश्यते। येन काव्यश्रीवृद्धि: परिलक्ष्यते। उदाहरणार्थम्–

**पिपीलिका यथाऽनुविद्धभोगिभोगमण्डले**
**बलाधिपे तथा प्रतीपगा वितेनुरुद्यमम्।**
**स एक एव वासुकिः सुमेरुबन्धनक्षमो**
**हृतापदापदन्यपक्षलक्ष्यमात्मविक्रमै:।।** –(क्षत्रपतिचरितम् 9/61)

रूपकालंकारस्य उदाहरणं द्रष्टव्यम्–

**सन्ध्योषधप्रयोगेण बलोग्रज्वरनिर्गमे।**
**क्षीणोऽप्येषो महाराष्ट्रो दिष्ट्या स्वास्थ्येन वर्धताम्।।**
–(क्षत्रपतिचरितम् 12/143)

समासोक्ति: अलंकार सुष्ठुरूपेण प्रयुक्त:–

**विच्छिन्नताराभरणा श्लथार्ता व्यस्ताम्बरा मृष्टपयोधरश्री:।**
**विभातमीता गगनाभिसारं रात्रिर्जहौ म्लानमुखेन्दुरागा।।**
–(क्षत्रपतिचरितम् 18/83)

अन्यानि उदाहरणानि सन्ति अलङ्कारविभूषितानि यत्र मध्यमकाव्यत्वं प्राप्यते। आधुनिकनेतारं प्रति एका उक्ति: अवलोकनीया–

**स्वाध्वस्थिर: समुदयन्तमुपासतेऽर्कमंगी-**
**करोति विजहाति जनं स्वसिद्धयै।**
**प्राचींप्रगे नमति रात्रिमुखे प्रतीचीं**
**नायं हिताहितपथे व्यथते मनस्वी।।** –(क्षत्रपतिचरितम् 13/114)

श्रीतिलकयशोर्णव: श्रीमाधवश्रीहरिमहोदयेन प्रणीतम् महाकाव्यम् प्रसिद्धम्। अस्य विषये सम्पादकानां धारणा अवलोकनीया–

**नेतृत्वगौरवं गायत् तिलकस्य महात्मन:।**
**प्रथयत् भुवि सर्वत्र संस्कृतस्यार्थगौरवम्।।**

**कवित्वगौरवं गाढं स्थापयत् माधवस्य च।**
**महाकाव्यमिदं लोके भजताद् गौरवं स्वयम्।।**
–(तिलकयशोऽर्णव तृतीयखंड की भूमिका पृष्ठ 9)

कविः भारतहृदयतिलकम् अलंकृतकाव्यभाषाप्रयोगेण नमति–

**धैर्येण भूधर इवाम्बुधिवद् गभीरो।**
**यस्तेजसार्क इव शीतकरः शशीव॥**
**ज्ञानेन गीष्पतिरिवोत्तम-कर्मयोगी।**
**तं भारतस्य हृदयं तिलकं नमामि॥** –(श्रीतिलकयशोऽर्णवः 1/9)

समाचारपत्रस्य समाचाराणां प्रतिक्रियायाः गम्भीरव्यञ्जना आलंकारिकभाषाप्रयोगेण कृता–

**सौदामिनीप्रपातेन दग्धःस्यात् पादपो यथा।**
**पठनेनोक्तपत्रस्य दग्धा सा सूचना तथा॥**
–(श्रीतिलकयशोऽर्णवः 45/52)

अन्यदेकम् उदाहरणं द्रष्टव्यम्–

**संचारपूतानि दिगन्तराणि कृत्वागतः पश्चिमपुण्यदेशम्।**
**भानुर्यथा सर्ववर्णानुरक्तो बालस्तथासज्जनगीतकीर्तिः॥**
–(श्रीतिलकयशोऽर्णनवः 56/163)

मध्यमकाव्यस्य अन्यदेकम् उदाहारणं द्रष्टव्यम्–

**पुष्पाणां स्तवको भाति तारकाणां समूहवत्।**
**प्रफुल्लं कमलं तत्र चन्द्रमा इव शोभते॥** –(श्रीतिलकयशोऽर्णवः 2/9)

समाचारपत्राणां महत्त्वं वर्णयन् कविः कथयति–

**वृत्तपत्रं प्रजाहस्ते प्रतोद इव वर्तते।**
**कर्तुं दिग्दर्शनं सम्यग् वाजिनां मन्त्रिरूपिणाम्।**
**सिंहे गर्जति कानने मृगगणो भीत्याकुलो धावति।**
**विद्युद्गर्जनमम्बुदेषु कुरुते भूत्यां जनान् कातरान्॥**
**राज्ये मन्त्रिजने स्वकर्मविमुखे सत्पत्रिकागर्जितम्।**
**लोकक्षोभविवर्धनं च कुरुते भीतिं प्रजाकोपजाम्॥**
–(श्रीतिलकयशोऽर्णवः 7/68, 69)

कविः देशस्वातंत्र्यम् अमृततुल्यं मन्यते–

**विनामृतं न तिष्ठन्ति स्वर्गेऽपि सुखिनोऽमराः।**
**न सन्ति सुखिनो भूम्यां लोकाः स्वातन्त्र्यवंचिताः॥**
–(श्रीतिलकयशोऽर्णवः 56/14)

सुभाषचरितं महाकाव्यं श्री विश्वनाथकेशवछत्रमहोदयेन विरचितम्। सुभाषचरिते महाकाव्ये अलंकाराणां सहजप्रयोगः दर्शनीयः–

**स्वराज्यपक्षाभ्युदयेन भूत्वा त्वस्वस्थ एवाग्रजसर्वकारः।**
**कटिं तमुन्मूलयितुं बबन्ध कंसो यथा गोवुलवासिकृष्णम्॥**

–(सुभाषचरितम् 5/23)

अत्र पौराणिकोपमानस्य कलात्मकरीत्या प्रयोगः कृतः। अन्यदेकम् उदाहरणं द्रष्टव्यम्–

**ततोऽन्वधावन् निजगुप्तचारैर्विद्धेग्रजः क्रुद्ध इतस्ततश्च।**
**स्वाभिः पुनर्वन्यहरिं ग्रहीतुं पलायितं व्याघ्र इव स्वजालात्॥**

–(सुभाषचरितम् 7/44)

अन्यदेकम् उदाहरणम् द्रष्टव्यम्–

**तस्मिन् विमानेऽक्षिपदादतीते शोकाकुला भारतभूसुपुत्राः।**
**यद्भ्यां जडाभ्यां वसतिं निवृत्ताः रामे वनं यात इवार्तपौराः॥**

–(सुभाषचरितम् 10/46)

अमूर्तेन मूर्तस्य उपमायाः उदाहरणम् द्रष्टव्यम्–

**वस्तुजातमभवत् सुदुर्लभमत्यवश्यमिह जीवनाय यत्।**
**प्रत्यहं प्रववृधे महार्घता प्रावृषीव सरिदम्बुविग्रहः॥**

–(सुभाषचरितम् 10/11)

अस्मिन् महाकाव्येऽपि मध्यमकाव्यस्य विद्यमानता वर्तते इति स्पष्टम्। गान्धिचरितं महाकाव्यं साधुशरणमिश्रमहोदयेन प्रणीतम्। गान्धिविषये चम्पारणजनपदजनतायाः उद्गारः दर्शनीयः–

**यथा रविः संतमसं करैः**
**निरस्य विद्योतयतेऽखिलं जगत्।**
**तथा भवान् स्वीयतपःप्रभावतो विनाश्य**
**तान् नः सुखितान् चिरं क्रियात्॥** –(गान्धिचरितम् 8/194)

गान्धिमहोदयः रामनाममहत्त्वं मुक्तकंठेन स्वीकरोति–

**न लोके विद्यते तावत् पातकं तत् क्षणान्न यत्।**
**सीतारामस्मृतेर्नश्येत् सौरेरिव करैस्तमः॥** –(गान्धिचरितम् 10/30)

अस्मिन् महाकाव्ये अलंकाराणां प्रयोगः कृतः कवेः उपमालङ्कारः प्रियो वर्तते। एकम् उदाहरणम् द्रष्टव्यम्–

**आर्यवेशवतां तत्र नराणां भारतौकसाम्।**
**दर्शनं वर्जयन्त्येते भास्करस्येव कौशिकः॥** –(गान्धिचरितम् 6/45)

अत्र कवि स्वपक्षं सूर्यवत् विपक्षं उलूकवत् कथयति। अलंकारेण वस्तुध्वनेः उत्तमम् उदाहरणम् इदम्।

श्री नेहरूचरितं महाकाव्यं श्रीब्रह्मानन्दशुक्लमहोदयेन विरचितम्। अस्मिन् महाकाव्ये-ऽपि मध्यमकाव्यस्य व्यापकत्वं दृश्यते। उदहारणमेकं द्रष्टव्यम्-

**तस्माद् विवाहविधिनापि मदीयकार्यरोधो भवेद्यदि तन्न युक्तम्।**
**पत्नी विचाररुचिरा, पतिकार्यदक्षा संसार-सागर-समुत्तरणाय पोतः॥**

-(श्रीनेहरूचरितम् 10/22)

स्वरूपरानीं वर्णयन् कविः कथयति-

**न भवति स्म कदापि च कोपना न चपला न च लोभपरायणा।**
**अनुबभूव समेषु निजात्मतां समरसा सरसा कवितेव सा॥**

-(श्रीनेहरूचरितम् 4/13)

अस्मिन् महाकाव्ये अलंकाराणां समुचितसन्निवेशः कृतः। अलंकारयोजना न सायासकृता। उदाहरणमेकं द्रष्टव्यम्-

**कमला वसति स्मास्य हृदये स्थलपद्मिनी।**
**मन्ये तस्माद् दधाराऽसौ तत्स्मृती स्थलपद्मकम्॥**

-(श्रीनेहरूचरितम् 18/40)

श्लेषानुप्राणितार्थीपरिसंख्यायाः चित्रणं द्रष्टव्यम्-

**वृद्धिर्नितम्बेषु गुणश्च हारे यत्रांगनानां पररूपतास्ते।**
**सवर्णदीर्घो जनतासु यत्र संयोगयोगश्च कटाक्षमोक्षे॥**

-(श्रीनेहरूचरितम् 7/5)

अर्थान्तरन्यासालंकारस्य एकं मोहकम् उदाहरणं द्रष्टव्यम्-

**दिव्यात्मनां पुण्यचयैस्तपोभिः स्वातन्त्र्यलाभस्त्वभवज्जनानाम्।**
**वित्तं विना किन्तु न सौख्यलब्धी रिक्तो घटो नापहरेत् पिपासाम्॥**

-(श्रीनेहरूचरितम् 17/17)

मूर्तेन अमूर्तस्य, अमूर्तेन मूर्तस्य तथा मूर्तेन मूर्तस्य उपमा विद्यते अस्मिन् महाकाव्ये। यथा-

**समरसा सरसा कवितेव सा।** -(श्रीनेहरूचरितम् 4/13)

तथा

**विततसस्यफला धरिणीव सा।**
**तदनुकामपि नूतनतां गता॥** -(श्रीनेहरूचरितम् 4/11)

एवम् स्पष्टमिद् यत् मध्यमकाव्यस्य अनेकानि उदाहरणानि सन्ति अस्मिन् महाकाव्ये। भगवद्गीतां प्रति श्रीनेहरूमहोदयस्य अनुरागः सुष्ठुरूपेण कविना अभिव्यंजितः-

**श्रीकृष्णचन्द्र-मुख-निर्गत-दिव्यतत्त्वं**
**गीतोक्तमेव मम जीवनसाधकं स्यात्।**
**गीतासुधां परिनिपीय भवाम्यजस्त्रं**
**संसार-सागर-समुत्तरणाय सज्जः।।** -(श्रीनेहरूचरितम् 14/4)

अन्येषु महाकाव्येषु अपि मध्यमकाव्यस्य एव व्यापकत्वं भवितुं संभाव्यते यतः कालिदाससदृशाः कवयः दुर्लभा एव आधुनिके संस्कृतजगति येषां कृतिषु उत्तमकाव्यस्य प्राचुर्यं भवितुं संभाव्यते परन्तु आधुनिकसंस्कृतसाहित्यम् अनेकदृष्ट्या समृद्धम् अस्ति। अभिनवसंस्कृतसाहित्येऽपि शाश्वततत्त्वानां मानवमूल्यानां च निरूपणं विद्यते येषां परिपालनेन व्यक्तिसमाजराष्ट्रविश्वानां कल्याणं सुनिश्चितमास्ति। यथा गङ्गायाः पूर्वसंचितजलं चिरकालपर्यन्तं विकृतं न भवति तथैव कालिदासादीनां पूर्वसंचितं परमश्रद्धार्हं रससिक्तं साहित्यम् अद्यापि पुण्यानां अखण्डफलमिव स्वादु एव वर्तते। अलंकाराणां सौन्दर्यं विद्यते एव। गुणीभूतव्यङ्ग्यस्य निरूपणमपि प्राप्यते। अतः मध्यमकाव्यस्य व्यापकत्वं विद्यते आधुनिकसंस्कृतकाव्यजगति। प्राचीनोपमानानां नवीनीकरणम् आधुनिकोपमानानां समावेशः प्राप्यते। चारुत्वयुक्तवाच्यार्थः चारुत्वयुक्त व्यंग्यार्थः रसभावादयः च वर्तन्ते अतः रमणीयता प्राप्यते।

इत्थं स्पष्टमिदं यत् संस्कृतसाहित्ये प्राचीनकालादारभ्य अद्यावधि निर्मिते काव्ये मध्यमकाव्यस्य प्राधान्यं प्राप्यते यतः गुणीभूतव्यङ्ग्यस्य विभिन्नरूपाणां दर्शनं बाहुल्येन प्राप्यते। कालिदासादिरससिद्धकविषु अलंकृतशैलीपक्षपातिषु माघश्रीहर्षादिषु तथा आधुनिक कविषु अपि मध्यमकाव्यस्य चारुत्वं व्यापकत्वं च विद्यते। ध्वनिप्रतिष्ठापकः आनन्द-वर्धनोऽपि आकृष्टः दृश्यते मध्यमकाव्यं प्रति येन सः इत्थम् उपदेष्टुं प्रेरितः अभवत्-

**प्रसन्नगम्भीरपदाः काव्यबन्धाः सुखावहाः।**
**ये च तेषु प्रकारोऽयमेव योज्यः सुमेधसा।।** -(ध्वन्यालोकः 3/35)

ये काव्यप्रबन्धाः प्रसन्नगम्भीरपदाः आह्लादकाश्च भवन्ति तेषु गुणीभूताख्यं मध्यम-काव्यं सुबुद्धिना कविना सम्पादनीयम्। ध्वनेरिव मध्यमकाव्यस्य योजनायै रचनायै अति वैदग्ध्यम् अपेक्षितम्। गुणीभूतव्यङ्ग्यस्य ध्वनेश्च पथा काव्यकाराणां प्रतिभा अनन्ततां प्राप्नोति नवत्वमायाति।

**ध्वनेर्यः सगुणीभूव्यङ्ग्यस्याध्वा प्रदर्शितः।**
**अनेनानन्त्यमायाति कवीनां प्रतिभागुणः।।** -(ध्वन्यालोकः 4/1)

अलंकारचारुत्वसमन्वितव्यङ्ग्यार्थेन परिपूर्णं मध्यमकाव्यं विभिन्नालङ्कारविभूषिता नवयुवती इव सहृदयान् आकर्षति। मध्यमकाव्यस्य रचनाकाराः आधुनिककवयः महाकवयः एव सन्ति इति असन्दिग्धम्।

✦✦✦

# संस्कृत साहित्य के गवाक्ष से झाँकता पर्यावरण तथा वर्तमान सन्दर्भ

- **अमित कुमार मिश्र**
शोध छात्र, राष्ट्रिय संस्कृत संस्थान,
गंगानाथ झा परिसर, इलाहाबाद (उ.प्र.)

**इस शोधपत्र में अनुसन्धाता ने पर्यावरण के महत्त्व को संस्कृत साहित्य में किस प्रकार वर्णित किया इस विषय को दिखाया है।**

संस्कृत साहित्य के अगाध पारावार में पर्यावरण की शिक्षा के रत्न अपरम्पार रूप में उच्छलित हो रहे हैं। संस्कृत साहित्य के अखिल ब्रह्माण्ड-भाण्ड के गवाक्ष से अवलोकन करने पर यह लोचन-गोचर होता है कि समस्त जीवों और पर्यावरण का सम्बन्ध अन्योन्याश्रित अथवा अविनाभाव है। यह मधुर सम्बन्ध आजन्म या गर्भकाल से ही नहीं अपितु सृष्ट्यारम्भ से ही रहा है।

सम्पूर्ण जैवमण्डल के चतुर्विध जीव (जरायुज, अण्डज, स्वेदज एवं उद्भिज्ज) प्रकृति के क्रोड में ही विकसित, सम्वर्द्धित एवं विलसित हो रहे हैं क्योंकि मानवीय चेतना ब्रह्माण्डीय चेतना से तादात्म्य रखती है। ब्रह्म से निर्मित विचित्र चित्र-चित्रित इस संसार में चतुर्विध जीवात्मायें भूमण्डल मंच पर मंचन कर **"कर्म का भोग, भोग का कर्म, यही जड़ चेतन का आनन्द"** पथानुगामी होते हुए नयन पथ पिनद्ध से हो रहे हैं।

साम्प्रतिक भूमण्डलीयकरण के युग में आधुनिक ज्ञान विज्ञान-परिज्ञान दक्षता की पराकाष्ठा पर कदम रखता हुआ सा मानव इस बृहत् संसार रूपी यन्त्र का एक अंगभूत होते हुए भी स्वयं में एक सम्पूर्ण यन्त्र स्वरूप होकर यान्त्रिक युग में यन्त्रवत् जीवन व्यतीत कर रहा है। मानव अपनी प्रज्ञा का लोहा मनवाता हुआ, समस्त जीवों पर शासन करता हुआ, प्रकृति रूपी नटी के साथ भी छेड़-छाड़ कर रहा है। विश्व के सभी देशों के परिप्रेक्ष्य में सिंहावलोकन करने पर ऐसा प्रतीत होता है। आर्यावर्त में भारत देश के (भा=ज्ञान में, रत=तल्लीन, निमज्जित) मनीषिजन, ऋषिगण, ब्रह्मर्षिगण अपनी-अपनी

परिणत प्रज्ञा के अनुसार मानव जीव का परम लक्ष्य "**आत्मनो मोक्षार्थं जगद्धिताय च**" अर्थात् अपने मोक्ष के साथ संसार का हित करने के आदर्श को भी रखा।

इस लोकहितकारिणी भावना में आदर्शभूत प्रकृति-नटी, जगन्नायिका, सेविका, सहधर्मचारिणी, मायाविनी आदिशक्ति-स्वरूपा विविध भावाभिव्यंजित थी। भारतीय दर्शन शास्त्र के कुलमूल आदि दर्शन-सांख्यदर्शन के प्रणेता कपिल मुनि (कर्दम-देवहूति के पुत्र) ने तो प्रकृति के तेईस विकृतियों सहित पुरूष के संयोग से पंचविंशति तत्त्व जन्य संसार का परिचय देकर प्रकृति पुरूष के सम्यक् ज्ञान से ही त्रिविध दुःखों (आधिदैविक, आधिभौतिक, आध्यात्मिक) से ऐकान्तिक एवं आत्यन्तिक निवृत्ति अर्थात् मोक्ष का मार्ग दिखलाया। इस मंगल भाव में पर्यावरण संचेतना परिपुष्ट एवं परिपोषित है।

समस्त दर्शन रूपी नदियाँ जिस श्रीमद्भगवद्गीता रूपी परिवार में आकर विलीन हो जाती हैं। इस पवित्र दार्शनिक ग्रन्थ में जीव, परमात्मा, जगत्, प्रकृति, विकृति आदि का सूक्ष्मातिसूक्ष्म विवेचन किया गया है। इसको केवल भारतीय मनीषियों ने ही नहीं अपितु विश्व के महान् दार्शनिकों ने अपनी-अपनी प्रज्ञा-निकष पर रखकर विशद् विवेचना किया।

नार्वे के प्रसिद्ध दार्शनिक "**अर्नेनीस**" कहते है कि-"**श्रीमद्भगवद्गीता में वर्णित जो अष्टधा प्रकृति** (पृथ्वी, जल, तेज, वायु आकाश, बाह्य एवं मन, बुद्धि, अहंकार आन्तरिक) है, इसमें बाहरी प्रकृति की हलचलें इंसान की आभ्यन्तरिक प्रकृति को हिलाए-डुलाए बिना नहीं रहती।" इस सत्य को अर्नेनीस ने अपने तत्त्वचिन्तन में पूर्णतया स्वीकार किया कि मानव जीवन के समस्त क्रिया-कलाप किसी न किसी रूप में पर्यावरण से सम्बद्ध है। इस "सप्तशती संहिता" में योगेश्वर श्री कृष्ण स्वयं को समस्त वृक्षों में अनन्य वृक्ष अश्वत्थ (पीपल) की संज्ञा देते हुए कहते है कि-

**"मैं सब वृक्षों में पीपल का वृक्ष हूँ, देवर्षियों में नारद मुनि हूँ, गन्धर्वो में चित्ररथ हूँ और सिद्धों में कपिल मुनि हूँ।[1]"**

भारतीय वैदिक ज्ञान सम्पदा का अवलोकन करने से दृष्टिगोचर होता है कि प्राकृतिक पर्यावरण और मानव जीवन के सम्बन्ध बहुत ही भावपूर्ण एवं मधुर थे। ऋग्वेद के हिरण्यगर्भ सूक्त में हिरण्यगर्भ से पञ्चमहाभूतों की उत्पत्ति मानी गयी है।

**"हिरण्यगर्भः समवर्तताग्रे भूतस्य जातःपतिरेक आसीत्।"[2]**

---

1. अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः।
   गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः।। (श्रीमद्भगवद्गीता-10/20)
2. ऋग्वेद-10.121.1

सामवेद में महर्षिगण शुद्ध जल को अपनी मनीषा-प्रज्ञा से अवलोकन कर प्रार्थना करते हैं।

**"शन्नो देवीरभीष्टये आपो भवन्तु पीतये। शं योरभिस्त्रवन्तु नः।"**[1]

यजुर्वेद के ईशावास्योपनिषद् में दध्यङ् अथर्वा ऋषि भी पर्यावरण के संसाधनों के निष्काम सदुपयोग की शिक्षा देते हुए कहते हैं कि-

**"ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्।**
**तेन त्यक्तेन भुञ्जीथाः मा गृधः कस्यस्विद्धनम्॥"**[2]

अथर्ववेद के अनुसार पर्यावरण के पांच घटक तत्त्व सन्तुलित रहकर ही सन्तुलित वातावरण का निर्माण करते हैं। अतः मानव को इनमें असन्तुलन नहीं करना चाहिए। वैदिक ऋषियों ने स्वयं को प्रकृति का अविभाज्य अंग माना है और पर्यावरण के रक्षार्थ सदैव समर्पण भाव व्यक्त किया है जैसे कि-

**"सूर्यो मे चक्षुर्वातः प्राणोऽन्तरिक्षमात्मा पृथिवी शरीरम्।**
**अस्तृतो नामाहमयमस्मि स आत्मानं निदधे द्यावा-पृथिवीभ्यां गोपीथाय।"**[3]

इस अरण्य संस्कृति में वृक्षों की पूजा को गौरव समझा जाता था। जैसे कि वृक्षराज पीपल (अहर्निश प्राणवायु प्रदाता) को देव वृक्ष की संज्ञा देना और उसमें सर्वदेवमयत्व का विधान उपनिषदों तथा पुराणों के आलोक में दिखता है जैसे कि स्कन्दपुराण में कहा गया है कि-

**'मूलब्रह्मा त्वचाविष्णुः शाखारूद्रो महेश्वरः।**
**पत्रे-पत्रे च देवानां वृक्षराजः नमोस्तुते॥'**

ऋग्वेद में सोमलता एवं अथर्ववेद में पलाश (ढाक) वृक्ष को पूज्य माना गया है। माँ शीतला का वास पलाश वृक्ष में माना गया। शमीवृक्ष को सर्वपापनाशनकारी एवं विशेषतः शनिग्रह की तुष्टि एवं कृपा प्राप्ति का हेतु माना गया है जैसे-

**'शमी शमयते पापं शमी लोहितकण्टकम्।**
**धारयेऽर्जुन बाणानां शमी वृक्षनमोस्तुते॥'**

इसी प्रकार नवग्रहों की तुष्टि हेतु अलग-अलग वृक्षों की प्रधानता बतलायी गयी है। अग्निपुराण में तो पदे-पदे वृक्षों औषधियों और पर्यावरण के अन्य घटकों का सुविस्तृत वर्णन प्राप्त होता है।

---

1. सामवेद प्र. 3.13
2. यजुर्वेद-40.1
3. अथर्ववेद-5, 9, 7

मत्स्यपुराण में तो मातृ-पितृऋण से मुक्त होने के हेतुभूत पुत्रोत्पत्ति से भी शताधिक गुना महिमा वृक्षारोपण की बतलायी गयी है-

**"दशकूपसमा वापी दशवापी समो ह्रदः।[1]**
**दशह्रदः समो पुत्रः दशपुत्रात् समो द्रुमः।।"**

अर्थात् 'दश कुओं के बराबर एक बावड़ी, दस बावड़ी के समान एक तालाब और दश तालाबों के बराबर एक पुत्र और दस पुत्रों के बराबर एक वृक्ष है।'

आदिकवि वाल्मीकि प्रणीत आर्षकाव्य रामायण महाकाव्य तो पशु, पक्षी, जन्तु, पादप, वृक्षों के संरक्षण की महागाथा ही है। पर्यावरण की संचेतना से परमपूत इस आदिकाव्य की उत्पत्ति ही क्रौंच पक्षी के जोड़े में से एक के व्याध के द्वारा वध करने की प्रतिक्रिया के रूप में हुई। जो जीव-जन्तुओं के संवेदना की पराकाष्ठा को व्यक्त करता है यथा-

**'मा निषाद प्रतिष्ठां त्वमगमः शाश्वती समाः।[2]**
**यत्क्रौञ्चमिथुनादेकमवधीः काम मोहितम्।।'**

यह महर्षि वाल्मीकि का औदार्य सर्वजनानुकरणीय है। प्रथित ज्योतिर्विद वराहमिहिर प्रणीत "बृहत्संहिता" में कुआँ कहाँ खोदा जाय? बगीचे कहाँ लगाये जाय? इस पर विस्तृत वर्णन किया गया है और इस अध्याय का नाम ही "कूपाराम अध्याय" रख दिया गया है। इसके अलावा मनु ने भी वनस्पतियों की उपयोगिता का वैशद्य-भाव से विवेचन किया है। इन्होंने रात्रि-बेला में वृक्षों के नीचे जाने का निषेध किया है-

**"रात्रौ च वृक्षमूलानि दूरतः परिवर्जयेत्।"[3]**

क्योंकि वृक्ष रात्रि में $CO_2$ (कार्बनडाई-आक्साइड) का उत्सर्जन करते हैं, जो कि स्वास्थ्य के लिए हानिप्रद है।

महर्षि वात्स्यायन कृत 'कामसूत्र' की जयमंगला टीका में पुष्प के विषय में रमणीय श्लोक लिखे गये हैं जैसे कि-

**पुष्पस्य धारणं कान्तिवर्धनं कामकारकम्।**
**ओजः श्रीवर्धकञ्चैव पापग्रहविनाशनम्।।**

कामदेव के पाँचों बाण पुष्पों से ही उपलक्षित हैं-

---

1. वेदों में पर्यावरण-दया दवे पृष्ठ-7
2. वाल्मीकि रामायण-बालकाण्ड
3. मनुस्मृति-4, 73

**अरविन्दमशोकं च चूतं च नवमालिका।**
**नीलोत्पलं पञ्चैते पञ्चबाणस्तु सायकाः॥**

इन्ही मधुर भावों को व्यक्त करती लोक संस्कृति पर दृष्टिपात् करे तो यह साक्षेप प्रचलन है कि 'जो व्यक्ति हरे वृक्षों को काटता है', वह निःसन्तान होकर मरता है', यह परम निषेधाज्ञा ही है। अनेक अंचलों में ज्येष्ठमास की अमावस्या को उपवास रखकर वट वृक्ष की पूजा की जाती है। तुलसी वृक्ष को आंगन में लगाकर भवमोक्षप्रदा मानकर उनकी पूजा की जाती है, मन्त्र पढ़कर तुलसी पत्र तोड़कर भोज्य पदार्थों में डालने से ही भोजन की पूर्णता मानी जाती है। इसके अलावा आदिवासी क्षेत्रों में अपनी प्रथा के अनुरूप विवाह के उपरान्त महुए के पेड़ पर सिन्दूर लगाकर सर्वदा सुहागिन होने की याचना की जाती है। अन्य क्षेत्रों में हलषष्ठी के दिन महिलाओं द्वारा कुशा, पलाश, झरबेरी, बाँस आदि को समेकित कर उनकी पूजा करके व्रत रखकर सन्तानों के दीर्घजीवी होने की कामना की जाती है। हरि प्रबोधिनी एकादशी के दिन आँवले के वृक्ष के नीचे ही भोजन पकाना व पूजन करने की प्रथा सर्वविदित ही है। त्रिमूर्ति स्वरूप मानकर त्रिदल विल्वपत्र को तापत्रय नाशकारी मानकर महादेव की पूजा आदि विधायें पर्यावरण संरक्षण की रीढ़ सिद्ध होती हैं। वैदिक संस्कृति तो अरण्य संस्कृति का स्वर्णकाल ही था। जहां वनदेवी अरण्यानी की प्रार्थना अनिवार्य थी जो वनमाता प्रकृति की ही पर्याय थी। जो जीवों, जन्तुओं, वनस्पतियों के जीवन की पोषिका, संरक्षिका एवं विकास की आधार थी। जैसा कि ब्रह्मा का भूमि के प्रति उद्‌गार द्रष्टव्य है–

**"माताः भूमि पुत्रोऽहं पृथिव्याः"**[1]

इसी मन्त्र को आदर्श वाक्य मानकर ऋषिजन मुनिजन सागरों, वनों को देवतुल्य मानते थे और नदियों को माता तुल्य मानकर गंगा (गम्यते ब्रह्मपदमनयेति) त्रिपथगा को स्वर्ग सोपान पंक्ति के रूप में अर्चना की। यही नहीं अपितु पुराणकालीन ऋषिचर्या के अवलोकन में उनकी ब्रह्ममुहूर्त में की जाने वाली प्रार्थना द्रष्टव्य है–

**पृथ्वी सगन्धा सरसास्तथापः स्पर्शश्च वायुर्ज्वलनं सतेजाः।**
**नभः सशब्दं महता सहैव, यच्छन्तु सर्वे मम सुप्रभातम्॥**

विश्व प्रसिद्ध विशालकाय महाकाव्य महाभारत में महर्षि वेदव्यास ने भी पर्यावरण और जीवों का सम्बन्ध अङ्गाङ्गिभाव ही स्वीकारा है जैसे कि–

**चेष्टा वायुः खमाकाशः ऊष्माग्निः सलिलं द्रवः।**
**पृथ्वी चात्र संघातः शारीरं पाञ्चभौतिकम्॥**

---

1. अथर्ववेद–पृथिवीसूक्त–12.1.12

इसी प्रकार महाभारत के भृगु-भारद्वाज संवाद के माध्यम में मानव मस्तिष्क में उत्पन्न होने वाली विविध प्रकार की शंका का उन्मूलन कर वृक्षों की समस्त क्रियाएँ मानव के सापेक्ष बतायी गयी है और अन्ततः वृक्षों के काटने का निषेध किया गया है कि-

**एतेषां सर्ववृक्षाणां छेदनं नैव कारयेत्।**
**चातुर्मासे विशेषेण विना यज्ञादि कारणम्।।**

ये वृक्ष भी मनुष्य की तरह देखते हैं क्योंकि कोई भी वल्लरी अपने पार्श्ववर्ती सहकार आदि वृक्ष का ही वेष्टन करती है अन्यत्र नहीं जाती है।

वृक्ष सुनते भी हैं क्योंकि बादल के गड़गड़ाहट आदि के श्रवणोपरान्त भय-भीत वृक्ष के पत्र-पुष्प आदि नीचे गिरे जाते हैं।

वृक्ष स्पर्श का अनुभव भी करते हैं क्योंकि "**छुयी-मुयी**" नामक लता स्पर्श के पश्चात् एक नवोढ़ा नायिका के समान संकुचित हो जाती है। किंचित काल में स्व-अवस्था को प्राप्त हो जाती है।

वृक्ष घ्राण शक्ति सम्पन्न होते हैं वे सूँघते भी हैं क्योंकि किसी भी फलदार वृक्ष के निकट कूड़ा आदि अपशिष्ट पदार्थों, भट्ठे आदि की चिमनियों के होने से फल आना बन्द हो जाता है। फलहीन वृक्षों में वृक्षायुर्वेद की औषधियों के उपचार से फल लगने शुरू हो जाते हैं।

इसी प्रकार वृक्ष "**पादैः सलिलपानाच्च**" अर्थात् मूल से जल का पान भी करते हैं। घटपर्णी आदि पौधे प्रत्यक्ष भोजन करते दिखाई देते हैं जबकि अन्य वृक्ष अप्रत्यक्षतः प्रकाश-संश्लेषण की क्रिया से पूर्ण भोजन करते हैं।

वैदिककालीन पुराणकालीन सूत्रकालीन परम्पराओं का याथातथ्य वर्णन अपनी सार्वकालिक जीवन्तता से अद्यावधि संस्कृत साहित्य के कवियों की वाग्धारा का विषय बनकर अबाध गति से बह रहा हैं।

"**काव्येषु नाटकं रम्यं तत्र रम्या शकुन्तला**" सूक्ति को चरितार्थ करता हुआ विश्व प्रसिद्ध सर्वजन श्लाघ्य विश्व मंच पर मंचित नाटक "**अभिज्ञान शाकुन्तलम्**" के प्रणेता, प्रकृति छटा के सूक्ष्म द्रष्टा महाकवि कालिदास के समस्त काव्यों में (खण्डकाव्यद्वय, महाकाव्यद्वय, नाटकत्रय) जैसी पर्यावरण की चेतना का संचार वक्ता, द्रष्टा, बोद्धा अथवा श्रोता को होता है वैसा अन्यत्र कहीं दिखाई नहीं देता है। मनो-शारीरिक सौन्दर्य की इसी धारा में निमग्न हुए जर्मन कवि गेटे की आमुक्त कण्ठ श्लाघा को श्लोकबद्ध कर डॉ. वासुदेव विष्णु मिराशी कुछ यूँ कहते हैं-

**"सौन्दर्य यदि वाञ्छसि प्रियसखे शाकुन्तलं सेव्यताम्।"**

कालिदास के पर्यावरण संरक्षण के आकूत को किंचिद् अंशों से देखा जा सकता है-निसर्ग सुन्दरी शकुन्तला आश्रमस्थ जीवों से सोदर्य स्नेह करती थी, जिसको शकुन्तला की विदाई के समय उसके पालक-पिता कण्व तपोवन के वृक्षों को सम्बोधित करते हुए कहते हैं कि-**"हे वृक्षों! तुम्हे बिना जल पिलाए जो जल नहीं पीती थी। तुम्हारे प्रति प्रेम के कारण जो सौन्दर्य-मण्डना होने पर भी (तुम्हारे) नये कोपलों को नहीं तोड़ती थी। तुम्हारे पुष्पोद्गम के समय जो उत्सव मनाती थी, वही यह शकुन्तला (अब) पतिगृह को जा रही है, तुम सब अपनी स्वीकृति दो।"**[1]

विरह कातर आश्रम के जीवों की दशा का भी वर्णन कालिदास की वाचा से हृदय से अछूती नहीं रह जाती है-

**"हिरणों ने कुश के ग्रास को उगल दिये है, मोरों ने नाचना छोड़ दिया है और लतायें आँसू के रूप में पीले पत्ते ही गिरा रही हैं।"**[1]

इसी तरह कण्व शकुन्तला का मृग से स्नेह एवं भगिनी का सम्बन्ध लता-भगिनी वनज्योत्स्ना को बताते हुए कहते हैं कि-

**"अवैमि ते तस्यां सौदर्यस्नेहम्।"**[2]

तात कण्व से शकुन्तला कहती है-**"तात! एषोटजपर्यन्तचारिणी गर्भमन्थरा वधूर्यदा अनघप्रसवा भवति, तदा मह्यं कमपि प्रियनिवेदयितृकं विसर्जयिष्यथ।"**[3]

यहाँ मृगियों के निर्विघ्न प्रसव होने की सूचना देने का संकेत अगाध जीव-प्रेम को इंगित करता है। तभी तो शकुन्तला की विदाई के वक्त मृग-शावकों के बारे में कण्व कहतें हैं कि-

---

1. अभिज्ञानशाकुन्तलम्-4/9 पृ.213 व्या.-कपिलदेव द्विवेदी-
   पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या
   नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम्।
   आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः
   सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम्।।
1. (अभि. 4/12 पृ. 217 व्या. कपिलदेव द्विवेदी)
   उद्गलितदर्भकवलामृग्यः परिव्यकतबर्तना मयूराः।
   अपसृतपाण्डुपत्रा मुंचन्त्यश्रूणीव लताः।।
2. अभिज्ञानशाकुन्तलम् 4/87 पृ. सं.-219 व्या. कपिलदेव द्विवेदी
3. अभिज्ञानशाकुन्तलम् 4-पृ. 221 व्या. कपिलदेव द्विवेदी

**"कुशाग्रो से मुख विध जाने पर इंगुदी का तेल लगाकर श्यामाक ( साँवा, चावल ) के मुट्ठियों से पाले गये मृग शकुन्तला का मार्ग ही नहीं छोड़ते हैं"**[1] इससे कृतक पुत्रों का वात्सल्य अभिव्यंजित होता है।

ऐसे ही पर्यावरण की शिक्षा से सम्पृक्त रामायणोपजीव्य दूतकाव्य में सिरमौर सहज मृदुल मञ्जुल मनोभाव पूत मेघदूत काव्य भी भौगोलिक आदि वर्णन में अद्वितीय स्थान रखता है क्योंकि मेघदूत में रामगिरि आश्रम (चित्रकूट) से लेकर अलका नगरी उज्जयिनी तक के भौगोलिक भ्रमण वृत्तान्त में पर्यावरण शिक्षा सुखद और आनन्दरस-पायिनी है।

ऐसा ही मधुर सूक्ति कलरव गुञ्जित नदी, वन, पर्वत उपत्यकादि का हृदयकारी वर्णन कर कालिदास षड् ऋतुओं में उद्भूत पुष्पों से संवलित अलका की नायिकाओं के अनघसौन्दर्य का वर्णन करते हैं। वृक्षों, जन्तुओं के प्रति वर्णन हृदय-अन्तःस्पर्शी तक हो जाता है जब वे यक्ष मुखेन यक्षिणी के कृतक पुत्रों में कदम्ब, मन्दार, सारिका, रक्ताशोक आदि पर अपनी सूक्ष्म दृष्टि डालते हैं, जैसे कि-

**"यहीं ( क्रीडा शैल पर ) कुरबक की बाड़ वाले माधवी लता के कुञ्ज के अत्यन्त पास में हिलते हुए नवीन कोयलों वाला अशोक एवं सुन्दर बकुल ( मौलसिरी ) का वृक्ष है, ( उनमें से ) एक मेरे साथ तुम्हारी सखी के ( भाभी के ) बायें पैरे के प्रहार का इच्छुक है और दूसरा वकुल का वृक्ष दोहद के बहाने से उसके मुख की मदिरा को चाहता है।"**[2]

असमय में भी वृक्षों की पुष्पित होने के लिए कवि-प्रसिद्धि अग्रलिखित रूप में दिग्दर्शित है-**"प्रियंगु सुन्दरियों के स्पर्श से विकसित होता है, बकुल सुन्दरियों के गण्डूष सेचन से, अशोक कामिनियों के वाम-पाद के प्रहार से, तिलक देखने से, कुरबक आलिंगन से, मन्दार नर्म वाक्यों से, चम्पक सुन्दर और कोमल हँसी**

---

1. (अभि. 4-14 पृष्ठ सं. 222 व्याख्या-कपिलदेव द्विवेदी)
   यस्य त्वया ब्रणविरोपणमिंगुदीनां
   तैलं न्यषिच्यतमुखे कुशसूचिविद्धे।
   श्यामाकमुष्टिपरिवर्धितको जहाति
   सोऽयं न पुत्रकृतकः पदवी मृगस्ते।।
2. कालिदास-मेघदूत-उत्तरमेघ-18
   रक्ताशोकश्चलकिसलयः केसरश्चात्र कान्तः
   प्रत्यासन्नौ कुरबकवृतेर्माधवीमण्डपस्य।
   एकः सख्यास्तव सह मया वामपादभिलाषी
   काक्षत्यन्यो वदनमदिरां दोहदच्छद्मनास्याः।।

**से, आम मुख की हवा से, नमेरू गीत से, कर्णिका सुन्दर नायिका के नृत्य से विकसित होते है।"**[1]

इस तरह मेघदूत पर्यावरण शिक्षा का महान उद्घोष है। जो पूर्वमेघ से बाह्य प्रकृति तथा उत्तरमेघ में आन्तरिक प्रकृति का हृदयहारी वर्णन करता है।

इसी प्रकार ऋतुसंहार खण्डकाव्य भारतीय षड्-ऋतुओं पर अवलम्बित मनोरम आख्यान है। इसमें दिग्दर्शन मात्र के लिए मन्मथ का मित्र ऋतुराज वसन्त का साकार वर्णन द्रष्टव्य है-

**द्रुमाः सपुष्पाः सलिलं सपद्मोस्त्रियः सकामाः पवनः सुगन्धिः।**[2]
**सुखाः प्रदोषाः दिवसाश्च रम्याः सर्व प्रियोचारूतरं वसनते॥**

"रघुवंश" महाकाव्य में "**पार्वती द्वारा वृक्षों को सन्तान के सदृश पालने का वर्णन मिलता है। शिव भी उन्हें अपने पुत्रवत् मानते हैं। जंगली हाथी देवदारू के तने से रगड़-रगड़ कर अपनी कनपटी खुजलाने लगा, इससे उसक छाल छिल गयी। पार्वती जी को उतना ही शोक हुआ जितना दैत्यों के बाणों से घायल कार्तिकेय को देखकर हुआ था।"**[3]

इसके अतिरिक्त भी हिरणों को घास आदि खिलाना और वृक्षों को कृतक पुत्रवत् पालने का वर्णन है।

रघुवंश महाकाव्य के त्रयोदश सर्ग में अखण्ड रत्न सम्भार सागर को वर्षा के हेतु मेघ के उत्पादक रूप में व्याख्यान पूर्वक जगत का पालन करने वाले विष्णु की संज्ञा दी गयी है-**विष्णोरिवास्मानवधारणीयम्........**

संस्कृत साहित्य में प्रकृति के सूक्ष्म द्रष्टा गद्यसम्राट महाकवि बाण का अपना अनन्यतम स्थान है। कादम्बरी कथा में कादम्बरी वर्णन, महाश्वेता वृतान्त, जाबालि-आश्रम वर्णन के प्राकृतिक सौन्दर्य की छटा सहृदय-हृदयों के लिए अत्यन्त मनोहर हो जाती है। हर्षचरित आख्यायिका में हृदय के अन्तःस्तलीय प्रकृति प्रेम के स्रष्टा तथा मानव की अन्तःप्रकृति का बाह्य प्रकृति से अनूठा समन्वय स्थापित करने वाले लोकनायक तुरंग

---

1. (कालिदास मेघदूत-उत्तरमेघ श्लोक-29 व्याख्याकार ब्रजेन्द्र कुमार)
स्त्रीणां स्पर्शात्-प्रियंगुर्विकसति बकुलसीधुगण्डूषसेकात्
पादाघातादशोकस्तिलककुरबकौ वीक्षणालिंगनाभ्याम्।
मन्दारो नर्मवाक्यात् पटुमृदुहसनाच्चम्पको वक्त्रवातात्
चूतो गीतान्नमेरूर्विकसति च पुरो नर्तनात्कर्णिकारः॥
2. ऋतुसंहार-6.2
3. रघुवंश महाकाव्य द्वितीय सर्गः

उपाधि विभूषित बाणभट्ट ने प्रभाकरवर्द्धन की बीमारी से आहत यशोमती के माध्यम से वृक्षों के प्रति अपने पर्यावरण से सम्बन्धित दायित्व और संचेतना की अभिव्यक्ति करवायी है। जो कि स्वयं में वृक्षारोपण एवं वन संरक्षण की पराकाष्ठा है। यशोमती अग्निप्रवेश के पूर्व वृक्षों से क्षमा माँगती हुई कहती है कि–

**"तात चूत! चिन्तयात्मानं प्रवसति ते जननी। वत्स जातीगुच्छ! गच्छाम्यापृच्छस्व माम्। मया विनाद्यानाथा भवसि, भगिनि दाडिमलते! रक्ताशोक! मर्षणीयाः पादप्रहाराः कर्णपूर गण्डूषग्रहणदुर्ललित! दृष्टोऽसि वत्से! प्रियंगुलतिके। गाढमालिंग मा दुर्लभा भवामि ते। भद्र भवनद्वारासहकारक। दातव्यो निवापतोयाञ्जलिरपत्य-मसि।"**[1]

अर्थात् "पुत्र आम्र! अब तुम्हारी जननी जा रही है। वत्स जातीगुच्छ! जाती हूँ, विदा दो! बहन दाडिमलता, मेरे बिना तू आज अनाथ हो रही है। रक्ताशोक! जो मेरे चरण प्रहार है और कर्णपूर बनाने के लिए तुम्हारे पल्लव तोड़े है, उन अपराधों को माफ करना। हे प्रिय पुत्र! अन्तःपुर के छोटे-छोटे बकुल, मदिरा के गण्डूष लेने में दुर्ललित, अब तेरा अन्तिम दर्शन है। पुत्रि प्रियंगुलिका! मुझे कसकर आलिङ्गन करो, दुर्लभ हो रही हूँ! हे भद्र! भवनद्वार के सहकार तुझे मैंने अपत्य समझा है जलाञ्जलि देना।"

महाकवि भवभूति कृत करूण रस प्रधान प्रसिद्ध नाटक उत्तररामचरित में देव नदियों गंगा, गोदावरी, तमसा, मुरला का मानवीकरण कर मानव से अगाध प्रेम एवं वनदेवी वासन्ती का चित्रकूट अभ्यागत राम का वृक्षों से स्वागत करवाना अत्यन्त ही रमणीय है। छायांक (उत्तररामचरित तृतीय अंक) में सीता के कृतक पुत्रों करिकलभ, कदम्ब, मयूर, हिरण का प्रगाढ़ प्रेम पुरस्सर वर्णन और सीता का हंसो के साथ कौतुक चित्रण द्रष्टा, श्रोता, बोद्धा को आनन्दातिरेक तक पहुँचा देता है जैसा कि–

**"अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम्।"**

अतः संस्कृत साहित्य के विशाल भण्डार में प्रकृति चित्रण ही पर्यावरण चेतना है। संस्कृत साहित्य अकूपार में पर्यावरण संरक्षण के रत्न अन्तस्तल तक अपरिमित मात्रा में न्यासित है। इन गोपित ज्ञानों का अन्वेषक द्वारा अनावृत्तीकरण उसकी प्रज्ञा का अभास मात्र सिद्ध होता है। अतः विश्व के वैज्ञानिकों, बुद्धिजीवियों, समाजशास्त्रियों, राजनेताओं पर्यावरणविदों, साहित्यकारों को अपनी नीरक्षीर विवेकिनी दृष्टि से निरीक्षण समीक्षण करना चाहिए क्योंकि यह संस्कृत साहित्य शाश्वत मूल्यों, नैतिकता आदि को अन्तःसंजोये हुए स्वकल्याण एवं स्वधर्म पालन ही नहीं अपितु विश्वकल्याण एवं विश्वधर्म के आदर्श को स्थापित करने वाले पूर्वजों द्वारा प्रदत्त एक धरोहर है।

---

1. हर्षचरित्र-बाणभट्ट उच्छ्वास-7

पर्यावरण प्रदूषण की समस्या के सार्वकालिक निदान के लिए हमें अपने प्राच्य साहित्य का आलोडन-विलोडन करना ही होगा क्योंकि वर्तमान की जड़ सदैव अतीत में रहती है और फल भविष्य में। अतः पर्यावरण के संरक्षण जैसी धारणा संस्कृत साहित्य के विशाल भण्डार में है वैसा समग्र विश्व में दूसरा प्राचीन साहित्य उपलब्ध ही नहीं होगा।

साम्प्रतिक भोगवादी पथ-प्रवृत्त युग में प्रकृति को शत्रु मान कर उससे संघर्ष में ही विजय पा लेने को ही अपना जीवन मानते हैं। सभ्यता की विकास यात्रा के साथ-साथ विलासिता, स्वार्थीपन, लोलुपता, हिंसावृत्ति भी निरवधि और निरवसान सी प्रतीत हो रही है। आधुनिक ज्ञान-विज्ञान दक्ष विविध व्यवसाय में निरत व्यवसायियों के द्वारा विस्थापित फैक्ट्री, कारखाने, कम्पनियाँ मानो अट्टहास करती हुई सी नजर आ रही हैं। उनसे निकलने वाले कचरे, अपशिष्ट पदार्थ धुआँ CO, CFC, $SO_2$ आदि समवाय से संघर्ष करता हुआ पर्यावरण (जीवन रक्षक कवच) आत्मरक्षा हेतु पुकारता हुआ नजर आ रहा है। जीव-जन्तुओं का दम सा घुट रहा है। नेता-राजनेता हास करते दिखाई दे रहे है। वैदेशिक सभ्यता का आधुनिक विकास की होड़ में अग्रसर वैद्यों, अभियन्ताओं, फैक्ट्री मालिकों के दृष्टिकोण ही परिवर्तित हो गये हैं।

विविध विषयों के ज्ञाता इसकी संसार को सब कुछ विषय (भोग) ही दृष्टि से देख करके इनकी दृष्टि जब पहाड़ों पर पड़ी तो पहाड़ों के छाती पर बम-विस्फोट कर वहां आवास और गगन चुम्बी इमारतें, मॉल, होटल आदि बसाने की ठान ली।

पर्वतों से झरने वाले प्रपातों की रमणीयता को देखा तो वहाँ उसकी अविरल धारा को बाँधकर विद्युत केंद्र की स्थापना कर दी। जगह-जगह पृथ्वी का सीना चीर-चीर कर जल संयन्त्रों, जलकूपों की स्थापना कर दोहन करने लगा। इतने पर भी जब इच्छा शान्त नहीं हुई तो इनकी दृष्टि वनाच्छादित प्रदेशों पर पड़ी और वनों की अन्धाधुंध कटाई करता हुआ गांवों, कारखानों को बसाता हुआ वन्य जीवों का शिकार करता हुआ उनके निर्जीव तन (लाश) को खाता हुआ अपनी सर्वभक्षी प्रवृत्ति का परिचय देने लगा। वनों के पुष्पाच्छादित प्रदेशों के मनोहारी पुष्पों को देख कर उसमें प्रियजनों को उपहार में देने वाले गुलदस्ते नजर आने लगे और जब मृदुजल के स्रोत बर्फीली पहाड़ियों को देखा तो बर्फ की फैक्ट्री समूह की स्थापना का दिव्य स्वप्न दिखने लगा। स्वात्म-प्रज्ञा से विज्ञान रूपी वरदान को प्राप्त हो जाने के बाद तो आधुनिक मानव ने अपना आपा ही खो दिया। वह मुम्बई जैसे सर्वाधिक जन समुदाय वाले शहरों में समुद्र जिसकी गम्भीरता या शांतपन विश्वविदित है उसको भी नरीमन-प्वॉइन्ट जैसे स्थलों पर आधुनिक संयंत्रों से जल को पीछे ढकेलता हुआ बस्तियों को बसाता हुआ चला जा रहा है।

विज्ञान प्रौद्योगिकी और औद्योगीकरण के विकास के साथ तो मनुष्य और

पर्यावरण में मानों शत्रुता का श्रीगणेश ही हो गया क्योंकि मनुष्य नई प्रौद्योगिकी का विकास कर प्राकृतिक परिस्थितिक तंत्र के बजाय 'मैन मेड ईको सिस्टम' में जीने लगा। डी.डी.टी. आदि रासायनिकों के उपयोग से भू-प्रदूषण तथा क्लोरीन सल्फेट, बाई कार्बोनेट, नाइट्रेट, सोडियम, मैग्नीशियम, फास्फेट आदि के आयन का विमोचन मनुष्य ही करता है। कारखानों से निकलने वाला कचरा और गन्दे जल के नालों के माध्यम से जलाशयों झीलों नदियों को प्रदूषित किया जा रहा है। जहरीले मिथाइल रूप में पारे का विमोचन, तेलवाहक जलयानों से खनिज तेज का सागरीय जल में रिसाव, सीसे का विमोचन घुले हुए अकार्बनिक तत्वों का विभिन्न मात्रा में मिश्रण आदि जल प्रदूषण के कारण हैं।

विकिरण प्रदूषण अधिक रूप में प्रभावकारी है। जापान में 1945 में नागासाकी और हिरोशिमा पर गिराये गये परमाणु बम इसके ज्वलन्त प्रमाण हैं।

उपर्युक्त विवेचन से स्पष्ट है कि पर्यावरण सन्तुलन का अव्यवस्थित होने का ही परिणाम जल प्रदूषण, वायु प्रदूषण, ध्वनि प्रदूषण, विकिरण प्रदूषण। भू-प्रदूषण के कारण अकाल, बाढ़, भूकम्प आदि भौतिक आपदायें लोचन गोचर हो रही हैं। जीवन रक्षक कवच, ओजोन परत के क्षरण की स्थिति भयावह बनी हुई है। 5 जून को विश्व पर्यावरण दिवस मनाने और जीवन के परम कर्तव्यों पर अमल करने से आधुनिक सार्वभौमिक कम्प्यूटरीकृत युग लोकहितकारिणी भावना से ओत-प्रोत है। प्रकृति प्रेम पर्यावरण संरक्षण जैसे विषयों को पाठ्यक्रम में लागू करने से भावी आपदाओं से निजात पायी जा सकती है। प्राकृतिक तत्वों के प्रति दिव्य भावना से निर्लोभ त्याग, दानादि उदात्त मानवीय गुण उत्पन्न करने से पर्यावरण संरक्षण हो सकता हैं। लाखों वर्ष पूर्व हमारे महर्षियों के उद्घोष 'माताभूमिः पुत्रोऽहं पृथिव्याः' संस्कृति को स्थापित करना होगा और जीवन का परम लक्ष्य 'आत्मनो मोक्षार्थं जगद्धिताय च' को मानना पड़ेगा। तथैव पर्यावरण से सम्बन्धित राष्ट्रिय-अन्ताराष्ट्रिय प्रयास सफलता के शिखर पर पहुँच सकते हैं, जन-जन को स्व कर्त्तव्यों को समझना अनिवार्य है-

**करें देश के सभी नागरिक**
**निज कर्त्तव्यों की समीक्षा।**
**होगा निर्माण ओजोन परत का**
**पाकर पर्यावरण की शिक्षा।।**

# अभिराजयशोभूषणनिरूपितालङ्कारसमीक्षा

- डॉ. शिवराम शर्मा

सहायक-आचार्यः, काशीहिन्दूविश्वविद्यालय, वाराणसी

**अस्मिन् शोधपत्रे अनुसन्धाता अभिराजयशोभूषणे निरुपितानामङ्कारणां विवेचनं पूर्वाचार्यदिशा ग्रन्थकारेणनकृतम् इति सम्यग् विचार्य खण्डितम्।**

काव्याकाव्यविवेकविधानायाप्तैर्मनीषिभिः कृतः तत्त्वविचारः संस्कृतवाङ्मये काव्य-शास्त्रत्वेन प्रतिष्ठामावहति। काव्यतत्त्वोन्मीलने श्रुतिं शास्त्रान्तरसिद्धान्तांश्च प्रमाणतयोपन्यसद्भिः सद्भिर्विद्वद्भिः सहृदयहृदयानुभवोऽपि तथ्यनिर्णये प्रमाणीकृतः। एष्वाचार्येषु सत्यपि बहुत्र वैमत्ये काव्यास्वादनजन्यरसानन्दविषये सर्वत्रैकमत्यमेवावलोक्यते। पूर्वमासीद् गुणालङ्कारादि काव्योत्कर्षाधयकतत्त्वलक्षणविर्धारणेऽनैकमत्यं किन्तु ध्वनिसिद्धान्तस्थपनानन्तरं समेषां गुणा-लङ्कारादीनां रसोपकर्षकतयाङ्गतां रसस्य ध्वनेर्वाङ्गितामभ्युपगम्य काव्यशास्त्रं प्रावर्तत। ध्वनि-सिद्धान्ते रसालङ्काररीत्यौचित्यादिप्रस्थानचतुष्टयस्य यथायथमन्तर्भावे जाते, वक्रोक्तेश्च ध्वनि-निर्विशेषतायामङ्गीकृतायां नाभूदन्यस्य कस्यापि तादृशस्य प्रस्थानस्य स्थापना यस्य परम्परा प्रचलिताभूत्। परवर्तिभिरभिनवगुप्तमम्मटविश्वनाथापय्यदीक्षितपण्डितराजप्रधानैराचार्यैरानन्द-वर्धनप्रतिष्ठापितो ध्वनिसिद्धान्त एवान्वमोदि। परम्परया विचार्यमाणानां दोषगुणालङ्कारीत्यादि-तत्त्वानां सामान्यलक्षणस्वरूपाणि मम्मटेन व्याख्यातान्येव परवर्तिभिः क्वचित् क्वचित् परिष्कृत्यानुमोदितानि। विश्वनाथोत्तरवर्तिकालेऽलङ्काराणां विशेषलक्षणानां भेदप्रभेदानाञ्च सविशेषं सूक्ष्मविवेचनं बभूव। तत्र विशेषतोऽपय्यदीक्षितपण्डितराजाभ्यां कृतमलङ्कारव्याख्यानं तथा सूक्ष्मं गम्भीरञ्च वर्तत यथा तदग्रे अलङ्कारव्याख्यनस्य सम्भावनापि कर्त्तुं न शक्यते। अत एव पण्डितराजानन्तरमृतेविश्वेश्वरपण्डितं नाभूत्तथाविधः कोऽप्याचार्यो यस्य काव्य-शास्त्रविषयका विचाराः समालोचकसहृदयेषु चर्चाविषयतामगुः। अतः निष्कर्षतयेदं वक्तुं शक्यते तद् भारतीयकाव्यशास्त्रीयसुदीर्घाचार्यपरम्परायां सुसूक्ष्मविचारैः परिष्कृतानां स्वानुभव-प्रमाणितानां सुदृढभारतीयकाव्यशास्त्रसिद्धान्तानां कथमपि खण्डनं परिवर्तनं वा कर्त्तुं न शक्यते। परिवर्धनस्य परिष्कारस्य वा तत्र सम्भावना नैव जागर्ति। प्रकारान्तरेण वक्तुं शक्यते यत् अन्यदर्शनादिशास्त्रीयमूलसिद्धान्ता यथा अखण्ड्यास्तथैव काव्यशास्त्रीयसिद्धान्ता अपि अखण्ड्या एव। अत एव विगतशतत्रयात्मके काले नाभूत् कस्यापि नव्यस्य काव्य-

वादस्यात्र स्वीकृतिः। भारतीया काव्यनिर्झरिणी येन सुगममार्गेण प्रवहमानासीत्, यो वाल्मीकि-महर्षिणा प्रदिष्टः व्यासकालिदासभारविमाघश्रीहर्षपण्डितराजादिभिः परिष्कृतः आधुनिकैः रतिनाथझावटुकनाथखिस्तेशेवडेप्रभृतिभिश्चानुकृतः काव्यशास्त्रं च अमुमेव काव्यस्वरूप-मनुशास्ति। किन्तु आधुनिकेऽस्मिन् वैश्वीकरणयुगे विज्ञानानुगतार्थकामोपार्जनैकरते भूमण्डले विश्वव्याप्तया लौकायतिकसिद्धान्तसमर्थकपाश्चात्यजीवलशैल्या प्राच्यपरम्परासु विघटितासु, जीवनोद्देश्येषु परिवर्तितेषु कविसम्प्रदायोऽपि प्रभावितोऽभूत्। भारतीयेतरसंस्कृतिप्रभावितैः किविभिः प्राच्यमार्षमार्गमुल्लङ्घ्य नव्यानां विषयाणां नवीनानां प्रवृत्तीनाञ्चावलम्बनं विधाय काव्यप्रणयनमारब्धम्, तदनुसारमभिनवकाव्यव्याख्यानाय शास्त्रोल्लेखप्रवृत्तिरप्युदभूत्। काव्या-लङ्कारिकाकाव्यसत्यालोकाभिनवकाव्यालङ्कारसूत्रादयोऽनैके। नव्यकाव्यशास्त्रीयसिद्धान्तोन्मेषका ग्रन्था प्रकाशिता अभवन्। परम्परायामस्यां कविवरस्याभिराजराजेन्द्रमिश्रस्य अभिराजयशो-भूषणाख्यः ग्रन्थः समालोचकसमाजे सविशेषं चर्चितोऽभूत्। परिचयशरीरात्मनिर्मिति-प्रकीर्णतत्त्वाख्येषु पञ्चोन्मेषेषु विभक्तेऽस्मिन् ग्रन्थे आद्येषु चतुर्षून्मेषेषु काव्यशास्त्रे यथापरम्परामाचार्यैः प्रतिपदितानां काव्यतत्त्वानां सङ्कलनं कृतमस्ति। प्रथमे काव्यप्रशंसा-प्रयोजनकारणलक्षणभेदादयः, द्वितीये शब्दार्थतच्छक्त्यादिकं रीतिवृत्तिगुणालङ्कारादिप्रतीयमानार्थो-पस्कारकाणि काव्यतत्त्वानि, तृतीये काव्यात्मतया पूर्वचार्यप्रतिष्ठिापितानां रसालङ्काररीति-वक्रोक्त्यौचित्यध्वन्यादितत्त्वानां पुनरवलोकनं, ध्वनेः काव्यत्मतायाः समर्थनं, चतुर्थे च दृश्यश्रव्यगद्यपद्यादिस्वरूपकृतकाव्यभेदानां प्राचीनानि साम्प्रतिककाव्यनुरूपाणि च लक्षणानि लिखितानि सन्ति। पञ्चमे मिश्रवर्यस्य मौलिकं चिन्तनमवलोक्यते। तत्र ऋतुपर्वसंस्कार-रोत्सवादिसम्बद्धविविधलोकभाषाप्रचलितगीतानुगतसंस्कृतभाषानिबद्धगीतानां वैदेशिकरीत्यनुगत-कवितानां छन्दोमुक्तरचनानाञ्च काव्यभेदत्वेन लक्षणोदाहरणपुरःसरं व्याख्यानं विधाय निखिलस्य लोककाव्यस्याभिनवकाव्यशास्त्रप्रामाण्यं परिकल्प्याचार्येण स्वमौलिकचिन्तनदिक् प्रादर्शि।

ग्रन्थस्यास्य नान्दीवाचि "**नाहं पक्षधरः कस्यचित् काव्यात्मसिद्धान्तस्य। काव्य-विषयकं यच्छाश्वतं सत्यं तदेव मह्यं रोचते। परम्परां सर्वथोपहाय नव्यं किञ्चिदाख्यातुं नोचितं, परम्परायां विद्यते यच्छाश्वतं सत्यं तदेवाभिप्रेतं मम। अत एव शाश्वततावाद एव मम काव्यसिद्धान्तः**" इत्युक्त्वा स्वसिद्धान्तत्वेन शाश्वततावादोऽङ्गीकृतः। शाश्वततावादो नाम पूर्वाचार्याभितकाव्यतत्त्वसमर्थनम्, आभरतापण्डितराजं परम्परायां परिष्कृतं काव्यतत्त्व-जातम्। विशेषतः ध्वनिं काव्यात्मतयाङ्गीकृत्य व्यवस्थापितं काव्यस्वरूपमेव, शाश्वतवाद-त्वेनाङ्गीकर्तुं न्याय्यमतः तत्समर्थने नव्यग्रन्थप्रणयनमनावश्यकमेव प्रतिभाति। यतो हि ग्रन्थः प्रणीतः अतः पारम्परिककाव्यतत्त्वचिन्तनातिरिक्तेन नव्यविचारसारेणात्र भाव्यमेवेति धिया ग्रन्थालोचनपरेण मया लक्षणेषु दृष्टिपाते कृते तत्र काचित्तादृशी नव्यता नान्वभावि या प्राच्यचिन्तनव्यतिरिक्ततया स्थाप्येत। ग्रन्थकारोदाहृतानि आधुनिककविप्रणीतपद्यानि एव नव्यतया निरीक्षितानि, विशेषतोऽलङ्कारनिरूपणप्रकरणे। एतद् विषये स्वयमेव ग्रन्थकारेणोक्तम्-

**"अलङ्कराणां लक्षणानि पूर्वापेक्षया भाषादृष्ट्या सरलतराणि अभिप्रायदृष्ट्या च स्पष्टतराणि कृतानीति स्वतः प्रामाण्येन निवेदये। सर्वाण्युदाहरणानि समकालकवीनां रचनात एव सङ्कलनितानीति विशेषः। सहृदयानां कीदृशोऽनुभव इति पश्चादेव ज्ञातुं शक्यते।"**

अत्र ग्रन्थकृता सहृदयानुभवो जिज्ञासितोऽतः अध्येतृभिः स्वानुभवः अभिव्यञ्जनीय एवेति धियात्र अलङ्कारप्रकरणमभिलक्ष्य मया स्वानुभवो विज्ञाप्यते।

**अलङ्कारलक्षणम्-ः**

**शब्दार्थसंश्रिता ये वै काव्यशोभां प्रतन्वते।**
**हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः॥** (अभिराज-91)

**प्रमुखा येऽप्यलङ्काराः शब्दस्यार्थस्य सम्मताः।**
**त एव नवया शैल्या प्रस्तूयन्ते विदाम्मुदे॥** (अभिराज-98)

अत्र ग्रन्थकृता नवशैलीसमालम्बनं प्रतिज्ञातं, कीदृशीयं विदां मोदिका नवशैलीति जिज्ञासयाध्येतुं प्रवृत्तेन मया लक्षणेषु काचिन्नव्यता नावलोकिता, प्राच्यलक्षणानि विशेषतो विश्वनाथकृतान्यलङ्कारलक्षणान्येवात्र किञ्चित् परिवर्त्य स्थापितानि। परिवर्तनेन तत्र सरलता स्पष्टता च समायाता नवेति पृथगेव विचारविषयः। उदाहरणेषु कीदृशी लक्षणसङ्गतिः काव्यता चेति विचार्यतेऽत्र। पक्षपातरहितैः सहृदयैः नेमे मम विचारा अन्यथा ग्राह्याः, यतः सर्वमिदं पारम्परिककाव्यशास्त्रालोके विचारितम्।

**1 ) उपमा-ः**

**वैधर्म्यरहितं साम्यं यत्र काव्यं क्वचिद् द्वयोः।**
**वाक्यैक्ये सोपमा पूर्णा चतुरङ्गसमन्विता॥** (अभिराज-105)

इत्येवं रूपेण प्राच्याचार्योक्तोपमालक्षणमनूद्य, सपदकृत्यञ्च व्याख्यायोदाहरणत्वेन रसिकविहारिजोशिनः पद्यमिदमुपन्यस्तम्-ः

**राधे ते करुणाकटाक्षलहरी नीलाम्बुजस्पर्धिनी**
**कालिन्दी प्रतिभाति कापि विमला सम्पत्सुधावर्षिणी।**
**किं वा मौक्तिककान्तिपुञ्जजयिनी सारस्वतेयीच्छटा**
**किं वा कैरविणीरुचां मदरिपुर्भागीरथीसन्ततिः॥** (अभिराज-पृ.109)

ग्रन्थकृता साधिता चात्रोपमा-"**अत्र राधाकटाक्षलहर्युपमेयम्। कालिन्द्युपमानम्। सम्पत्सुधावर्षा साधरणो धर्मः। प्रतिभातीति वाचकश्शब्दः। पूर्णोपमेयम्।**" इति। अत्र "**राधे नीलाम्बुजस्पर्धिनी सम्पत्सुधावर्षिणी ते दृष्टिः कापि कालिन्दी प्रतिभाति**" इत्येवं रूपे वाक्यार्थे वाचकपदाभावात् पूर्णोपमा नैव। ननु "**प्रतिभातीति वाचकः शब्दः**"

इति ग्रन्थकृतैव व्याख्यातम्, तत्कथमत्र वाचकशब्दाभावः? इति चेत् तत्सर्वथाविचारिताभिधानम्, न खलु क्रियावाचकः शब्दः क्वचिदुपमावाचकत्वेन दृष्टः श्रुतो वा। कदाचित् क्रियावाचकपदस्य साधारणधर्मता भवितुमर्हति न तूपमावाचकता, अतः वाचकपदाभावेऽपि कथमत्र पूर्णोपमासाधनप्रयासः? ननु वाचकलुप्तेयमित्यवधार्यतामिति चेत्तदपि नैव।

**वादेर्लोपे समासे सा कर्माधारक्यचि क्यङि।**
**कर्मकर्त्रोर्णमुलि ........................।।** (का.प्र. सूत्र 130)

इति मम्मटोक्तसर्वाचार्यसमर्थितवाचकलुप्ताभेदेभ्यो नात्रैकोऽपि सम्भाव्यते, नात्र समासः न कर्मण्याधारे वा क्यच् क्यङ् वा, न च कर्मणि कर्तरि वा णमुल्, तत्कथमत्र वाचकलुप्तासाधनप्रयासः? नात्र काप्युपमा कथमपि सम्भवति। वस्तुतोऽत्र रूपकालङ्कारो भवितुमर्हति, अस्त्येव। '**राधायाः करुणाकटाक्षलहरी कालिन्दी प्रतिभाति**' इति वाक्यार्थे करूणाकटाक्षलहर्याः कालिन्द्याश्च भेदेऽपि कविकल्पिताहार्याभेदनिश्चयस्य स्फुटं प्रतीतिविषत्वात्।

एवमेव मालोपमोदाहरणमपि चिन्त्यमेव। एकस्यैवोपमेयस्यानेकोपमानसद्भावे जायमानां मालोपमां यथापूर्वं लक्षयित्वा ग्रन्थकृता सीताचरितमहाकाव्यस्य पद्यमिदमुदाहृतम्–

**शरत्सु हंसा दिवसेषु भास्करः सुधांशुरह्नो विगमेषु दीव्यति।**
**नृनाथ कालेष्वखिलेषु पावनं यशस्तु ते दीव्यति दीप्तमोजसा।।**
(अभिराज–110)

व्याख्यातञ्च "**अत्रैकस्यैव यशसस्त्रीण्युपमानानि हंसभास्करसुधांशुप्रभृतीन्युपस्थापितानि। तेन मालोपमात्र।**"

अयि सहृदयधुरीण! भवता न सम्यग् विचारितोऽत्र काव्यार्थः अनेकोपमानसद्भावमात्रेण न खलु मालोपमा सम्भवति तत्र सर्वेषामुपमानानां साधर्म्यमपि विवक्षितं भवति। उक्तपद्ये न साधर्म्यं कविविवक्षितमपितु सामान्यतया साधर्म्यवतामुपमेयोपमानानामेकेन धर्मेण वैधर्म्यं प्रदर्श्योपमेयस्य व्यतिरेकोऽत्र कविविवक्षितोऽत्र व्यतिरेकालङ्कार एव न तु मालोपमा। तद्यथा "**राजयशः शुभ्रत्वात् हंससुधांशुसदृशम्, ओजसा दीप्तत्वाच्च भास्करसादृश्यमपि दधात्येव, किन्तु हंसा केवलं शरत्सु भास्करो दिवसेषु सुधांशुश्चाह्नो विगमेष्वेव दीव्यति, ते पावनं यशस्तु अखिलेष्वेव कालेषु दीव्यतीति तेभ्योऽधिकम्**" इत्यस्यार्थस्य स्फुटतयैव कविविवक्षितत्वेन सहृदयप्रतीतिविषयता, अतः '**उपमानाद् यदन्यस्य व्यतिरेकः स एव सः**' (काव्यप्रकाश सूत्र–159) इति लक्षणानुसारमत्र व्यतिरेकः काव्यार्थमलङ्करोति। राजयशसो हंसादिभ्य आधिक्यमेव कविनिष्ठराजविषयकभावध्वनिमुपस्कुर्वदलङ्कारतामातनोति। तन्मालोपमोदाहरणत्वेनास्योपस्थापनं सर्वथाविचारिताभिधानमेव। एवमेव–

**कलेव चान्द्री स्फुटचारुशोभा ज्वलद्धुताशप्रतियातनेव।**
**लतेव मालेव धरासुतेव प्रमोहविद्धं विदधे जनं सा।।** (अभिराज–111)

इति ग्रन्थकृद्विरचितजानकीजीवनमहाकाव्यादुन्नीतं द्वितीयमुदाहरणमपि चिन्त्यमेव। अत्र ग्रन्थकृतोक्तम्-"**अत्रापि एकस्या एव जानक्याः पञ्चोपमानानि समुदाहृतानि अतो मालोपमा।**" सत्यम् पद्येऽस्मिन् जानक्याः चान्द्रीकलाज्वलद्धुताशलतामालाधरासुतादीनि पञ्चोपमानानि सन्ति, किन्तु सर्वेषामुपमानानां समानधर्मनिर्देशाभावान्नात्र मालोपमा चमत्कृतिं दधाति। सामान्यतयोपमालक्षणलक्षितायां मालोपमायामुपमानबहुत्वमेव विशेषः, उपमानैः सह साधारणधर्मेणापि भाव्यमेव, स च प्रसिद्धत्वादुपमायां क्वचिन्नोपादीयते, किन्तु मालोपमायाम-निवार्यमेव अनेकोपमानसाधर्म्यप्रतिपत्त्यर्थम्। सोऽपि द्विविधः एकोऽनेकश्च। यत्रैकमेव साधारणधर्मं पुरस्कृत्यानेकोपमानसादृश्यं वर्ण्यते तत्रैकसाधारणधर्मिका मालोपमा, यत्र च प्रत्युपमानं भिन्न एव साधारणो धर्म उपादीयते तत्रानेकसाधारणधर्मिका सम्भवति। यथोदाहृता मम्मटेन-:

**अनयेनेव राज्यश्रीर्दैन्येनेव मनस्विता।**
**मम्लौ साथ विषादेन पद्मिनीव हिमाम्भसा।।** (काव्यप्रकाश-410)

इत्यत्रानेकोपमानानां म्लानिरूपं साधारणधर्मं पुरस्कृत्य मालोपमा निष्पादिता।

**ज्योत्स्नेव नयनानन्दः सुरेव मदकारणम्।**
**प्रभुतेव समाकृष्टसर्वलोका नितम्बिनी।।** (काव्यप्रकाश-411)

इत्यत्र ज्योत्स्नायाः नयनानन्दं सुराया मदकारणतां प्रभुतायाश्च समाकृष्टसर्वलोकत्वं धर्मं पुरस्कृत्य नितम्बिन्या सह मालोपमा कल्पिता।

प्रकृते कलेवेति पद्येऽनेकसाधारणधर्मवती मालोपमा कल्पयितुं शक्यते। तत्र प्रथमो-पमानभूतचान्द्रीकलायाः शब्दोपात्तेन स्फुटचारुशोभात्वेन सादृश्यं सम्भवति, किन्त्वन्येषां धुताशलतामालाधरासुतादीनां पृथक्पृथगपेक्षितानां साधारणधर्माणामुपादानमत्र नास्ति। सर्वो-पमानानुगतस्य तादृशसाधारणधर्मस्य प्रसिद्ध्यभावादुन्नयनमपि कर्त्तुं न शक्यते। अतो धर्मं विनौपम्यप्रतीतेरभावात् सर्वथा दोषग्रस्तैवेयमुपमा।

ननु "**प्रमोहविद्धं विदधे जनं सा**" इत्युक्त्वा कविना धर्मनिर्देशः कृत एव। एकमेवात्र प्रमोहविद्धत्वाधनं समानधर्मीकृत्य सादृश्यविधानं कवेरभिप्रेतमिति चेन्न, न खलु ज्वलद्धुताशलतामालाधरासुताद्युपमानानि प्रमोहाधायकत्वेन पूर्वप्रतीतानि। धुताशेन सह मालालतयोः क्वैकधर्मता? किञ्च उपमेयभूतजानक्या उपमानतयोक्ता धरासुता तदभिन्ना, जानक्येव धरासुता अत एकस्यैव पदार्थस्योपमानोपमेयत्वाधानमपि व्यर्थमेव। इत्थमत्र उपमानानां माला तु वर्तते किन्तु मालोपमालङ्कारो नास्ति।

एवमेव उपमेयोपमाया उदाहरणमपि लक्षणहीनमेवास्ति। ग्रन्थकृता पूर्वाचार्यकृतं लक्षणमनूद्य-:

**वाणी मुक्तेव यस्यासीद् मुक्ता वाणीव निर्मला।**
**करपात्रयतीशानं वन्दे काशीविभूषणाम्॥** (अभिराज–109)

इत्युदाहरणमुपन्यस्तम्, "**अत्र वाणीमुक्तयोः पर्यायेणोपमानोपमेयत्वं सुस्पष्टमेव**" इत्युक्त्वात्रोपमेयोपमाङ्गीकृता, किन्त्वत्र सत्यपि पर्यायेणोपमेयोपमानत्वम् उपमेयोपमाया अलङ्कारता नास्ति। कथमिति चेदुच्यते—उपमेयोपमायां भिन्नवाक्ययोः निबद्धयोः द्वयोः पदार्थयोः पर्यायेणो-पमेयोपमानत्वं तृतीयसदृशव्यवच्छेदफलकं यदा भवति तदैव तस्या अलङ्कारता, तदभावे चमत्काराभावादलङ्कारता नैव। यथोक्तं मम्मटेन–:

**"इतरोपमानव्यवच्छेदपरा उपमेयेनोपमा इति उपमेयोपमा।"**
(काव्यप्रकाश–91 वृत्ति)

सकलालङ्कारिकसम्मतमिदं तृतीयसदृशव्यच्छेदकत्वं प्रकृतोदाहरणे न प्रतीयते। तद्यथा "**यस्य काशीविभूषणस्य करपात्रस्वामिनो वाणी मुक्ता इव मुक्ता च वाणीव निर्मला आसीत् तं वन्दे**" इति कविविवक्षितेऽर्थे वाणीमुक्तयोः पर्यायेणोपमेयोपमानत्वं तु वर्तते किन्तु तत् तृतीयसदृशव्यवच्छेदं न फलति। कथमिति चेदुच्यते–करपात्रस्वामिनां वाणी तु निर्मला आसीत् किन्तु तत्सदृशी या मुक्ता कविनोक्ता सा का? स्वामिपादसम्बन्धिनी कापि विशेषमुक्ता, अन्या समान्यमुक्ता वा? स्वामिपादसम्बद्धतया न कापि विशेषमुक्ता प्रसिद्धा या तेषां वाणीव निर्मलासीत्। समान्यमुक्ता चेत् तस्याः केवलस्वामिपादवाणीसदृशत्वं न सम्भवति, लोके तत्सदृशानामन्यमुक्तानां सम्भवात्। अतः नात्र तृतीयसदृशव्यवच्छेदः फलति। यथा स्वामिपादानां वाणी निर्मलतया मुक्ताभिन्नपदार्थसादृश्यं न दधाति स्म तथैव मुक्ताया अपि करपात्रस्वामिसम्बन्धेन वाणीभिन्नपदार्थसादृश्यं यदि न स्यात् तदैव परस्पर-सदृशयोरनयोर्वाणीमुक्तयोः तृतीयसदृशव्यवच्छेदः सम्भाव्येत्। स च न सम्भवति मुक्तायाः करपात्रस्वामिसम्बन्धाभावात् अतः अलङ्कारताविहीनेयमुपमेयोपमा।

**2 ) समासोक्तिः–:**

**प्रस्तुतेऽप्रस्तुतस्यैव कार्यलिङ्गविशेषणैः।**
**समैर्यत्र समारोपः सा समासोक्तिरुच्यते॥** (अभिराज–126)

लक्षणमिदं चिन्त्यम्। प्राच्याचार्यैः प्रस्तुतेऽप्रस्तुतव्यवहारस्य समारोपे समासोक्तिरङ्गीकृता, अत्र तु प्रस्तुतेऽप्रस्तुतसमारोपे समासोक्तिरित्युक्तं, तन्नोचितं व्यवहारसमारोप एव समासोक्ते-रर्थलाभात्। अपि च समैः कार्यलिङ्गविशेषणैः प्रस्तुतेऽप्रस्तुतस्यैव व्यवहारः समारोपयितुं शक्यते नान्यस्य, अतः लक्षणेऽस्मिन्नन्ययोगव्यवच्छेदाय निविष्टः एवकारो व्यर्थ एव। अस्या ग्रन्थाकृता यदुदाहरणमुपस्थापितं तत्त्वतीव चिन्त्यम्। यथा–:

**समायाता इमा वर्षाः श्यामाग्रैः स्वपयोधरैः।**
**पाययन्त्यः पयस्तूर्णं प्रजाभ्यो मातृवत्सलाः॥** (अभिराज–126)

"**अत्र प्रयुक्तशब्दानां श्लिष्टतया वर्षोपरि जनन्या व्यवहारसमारोपः परिस्फुटः।**" इत्युक्त्वा ग्रन्थकृतात्र या समासोक्तिः निर्णीता सा नैव, अत्र तु श्लिष्टोपमालङ्कारः न्याय्यः। समासोक्तिः कथं नेति चेदुच्यते-अत्र मातृवत्सलेतिवर्षाविशेषणभूतेन पदेनाप्रस्तुतस्य जननीपदार्थस्योपमानतया वाच्यत्वात्। समासोक्तौ श्लिष्टविशेषणमात्रसामर्थ्यात् प्रस्तुतेऽप्रस्तुतव्यवहारः समारोप्यते, अप्रस्तुतो विशेष्यपदार्थः शब्देन नाभिधीयते। यथोक्तं मम्मटेन-:

"**प्रकृतप्रतिपादकवाक्येन श्लिष्टविशेषणमाहात्म्यात् न तु विशेष्यस्यापि सामर्थ्यात् यदप्रकृतार्थस्याभिधानं सा समासेन संक्षेपेणार्थद्वयकथनात् समसोक्तिः।**" (काव्यप्रकाश वामनी-61)

समासोक्तौ अप्रकृतस्य वाच्यत्वं निषेधयता पण्डितराजेनाप्युक्तम्-"**यत्र त्वप्रकृत-व्यवहार एव शब्दशक्तिं सहेत न त्वप्रकृतधर्मी तत्र समासोक्तिः।**" (रस. तृतीय भाग पृ.-228)

प्रकृतोदाहरणे मातृवत्सलेत्यनेन वर्षाविशेषणभूतेन पदेन अप्रस्तुतो जननीपदार्थो वाच्यतामानीतः। स च यथा-मातृवत्सलेत्यस्य पदस्य द्विविधः समासः सम्भवति-मातरि वत्सला, मातेव वत्सलेति च। अनयोः प्रथमो नोपयुज्यते विशेष्यभूतायां वर्षायां मातरि वत्सलात्वस्यानुपयुज्यमानत्वात्, न खलु वर्षायां मातृविषयिणी वत्सलता सम्भवति। मातेव वत्सलेति द्वितीय उपयुज्यत एव, वत्सलतां समानधर्मीकृत्य मातुः वर्षोपमानत्वेनान्वयसम्भवात्। इत्थमत्र व्यङ्ग्यतयापेक्षितोऽप्रस्तुतो विशेष्यभूतो मातृपदार्थः प्रस्तुतस्योपमानतया वाच्यतामानीतः। विशेष्ये वाच्ये तद्विशेषणानामपि वाच्यत्वमेव, अतः श्यामाग्रपयोधरकरणकपयःपानरूपस्य वर्षाजनन्योरुभयोरपि व्यवहारस्य वाच्यत्वात् समासोक्तेः गन्धोऽप्यत्र नास्ति। "**प्रजाभ्यः श्यामाग्रैः स्वपयोधरैः तूर्णं पयः पाययन्त्यः (अत एव) मातृवत्सला इमा वर्षाः समायाताः**" इति वाक्यार्थे श्लिष्टसमानधर्मवती समासगा वाचकलुप्तोपमैवात्र मान्यमान्या। एवमेव-:

> **आदौ प्रसाद्य कलमञ्जुलगुञ्जितैः स्वैः**
> **स्पृष्ट्वा तनुं सदयमञ्चितहार्दहृद्याम्।**
> **मल्लीमुपात्तरजसं सरसां सगन्धां**
> **भुञ्जंस्त्वमेव सुकृती भुवि भृङ्ग दृष्टः॥** (अभिराज-126)

इति पद्ये समासोक्तिं साधयता ग्रन्थकारेण यदुक्तं तत् त्वतीव चिन्त्यम्। तेनोक्तं यथा-"**अत्र प्रस्तुतयोर्मल्लीभृङ्गयोर्व्यवहारसमारोपोऽप्रस्तुतयोर्नायिकानायकयोरुपरि श्लिष्टपदमहिम्ना स्पष्टतया प्रतीयत एव।**"

अरे भगवन्! अत्र न खलु अप्रस्तुतयोः नायिकानायकयोरुपरि प्रस्तुतमल्लीभृङ्ग-

व्यवहारसमारोपः, अपि तु मल्लीभृङ्गयोरुपरि नायिकानायकव्यवहारसमारोपो विद्यते। भवता सर्वथा विपरीतमुक्तम्। समासोक्तौ प्रस्तुतेऽप्रस्तुतव्यवहारः समारोप्यते न त्वप्रस्तुते प्रस्तुतव्यवहारः।

**3 ) अतिशयोक्तिः-:**

**सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते।** (सा.द. 10/693)

इति साहित्यदर्पणोक्तं लक्षणम् "**अध्यवसायसिद्धत्वेऽतिशयोक्तिर्निगद्यते**" (अभि. -118) इत्येवं रूपेण किञ्चित्परिवर्त्त्य ग्रन्थकृतातिशयोक्तिर्लक्षिता, उदाहृतं च स्वोपज्ञमिदं पद्यम्-

**समुन्नतत्वादवतंसताङ्गता मनोज्ञनासेति विभाव्य निष्कृतिम्।**
**अहो प्रतिस्पर्धितया तयैव किं पयोधरौ तुङ्गतरौ बभूवतुः॥**

(अभिराज-118)

व्याख्यातञ्च-"**अत्र नासापयोधरयोः प्रतिस्पर्धासम्बन्धेऽविद्यमानेऽपि सम्बन्धः कश्चिदुपकल्पित एव।**" (अभिराज, पृ.119)

अत्रातिशयोक्तिनिर्णये महती भ्रान्तिः। न खल्वत्र असम्बन्धे सम्बन्धरूपातिशयोक्तिः, अपि तु पयोधरयोः स्वाभाविकी तुङ्गता नासास्पर्धित्वेन सम्भाविता अतोऽत्र उत्प्रेक्षा स्फुटतया प्रतीयते। यथोदाहृतं पण्डितराजेन-:

**दिवानिशं वारिणि कण्ठदघ्ने दिवाकराराधनमाचरन्ती।**
**वक्षोजतायै किमु पक्ष्मलाक्ष्यास्तपश्चरत्यम्बुजपङ्क्तिरेषा॥**

(र.ग.द्वि.भा.पृ.-726)

अत्राम्बुजानां स्वाभाविकोऽभिदिवाकरं वारिनिवासः पक्ष्मलाक्ष्या वक्षोजताप्राप्तिफलत्वेन सम्भावितः अतोऽत्र यथोत्प्रेक्षा तथैव प्रकृतपद्येऽपि "**अहो प्रतिस्पर्धितया तयेव किम्**" इति शब्दोपात्तेन सकाकुप्रश्नेन यौवने पयोधरयोः स्वाभाविकी तुङ्गतरता नासिकया प्रतिस्पर्धितया सम्भावितोत्प्रेक्षामेव साधयति न त्वतिशयोक्तिम्।

असम्बन्धे सम्बन्धरूपातिशयोक्तिस्तत्र भवति यत्र यदिशब्देन चेच्छब्देन वा असम्भविनो-ऽप्यर्थस्योक्तौ कल्पनं क्रियते। यथोक्तं मम्मटेन "**यद्यर्थोक्तौ च कल्पनम्**" इत्यस्य भेदस्य व्याख्याने-"**यद्यर्थस्य यदि शब्देन चेच्छब्देन वा उक्तौ यत् कल्पनम् अर्थात् असम्भविनोऽर्थस्य सा तृतीया।**" यथा-:

**राकायामकलङ्कं चेदमृतांशोः भवेद् वपुः।**
**तस्या मुखं तदा साम्यपराभवमवाप्नुयात्॥** (का.प्र.वामनी पृ.632)

व्याख्यातञ्चोद्योतकारेण-"**पूर्वार्द्धे पूर्णेन्दौ कलङ्काभावस्यासम्बन्धेऽपि सम्बन्धः**

**कल्पितः, उत्तरार्धे साम्यसम्बन्धसम्भवेऽपि तदसम्बन्धः पराभवपदेन सूचितः एवञ्चा-सम्बन्धेऽपि सम्बन्ध इति द्विविधेयम्।"** (का.प्र. वामन्यामुद्धृतम्-632)

यथा चोदाहृतासम्बन्धेऽपि सम्बधरूपातिशयोक्तिर्विश्वनाथेन-:

**यदि स्यान्मण्डले सक्तमिन्दोरिन्दीवरद्वयम्।**
**तदोपमीयते तस्या वदनं चारूलोचनम्।।** (सा.द. 10-693)

अत्रेन्दाविन्दीवरद्वयस्यासम्बन्धेऽपि यदिशब्देन सम्बन्धः सम्भावितः। समर्थिता च पण्डितराजेनापि-"**यत्रासम्बन्धेऽपि सम्बन्धो वर्ण्योत्कर्षार्थः।**" यथा-

**तिमिरशारदचन्दिरतारकाः कमलविद्रुमचम्पककोरकाः।**
**यदि मिलन्ति कदापि तदाननं खलु तदा कलया तुलयामहे।।**
(र.ग.पृ.13 भाग-तृतीय)

अत्र यदिशब्देन रजतादीनां परस्परासम्बन्धेऽपि सम्बन्धः कल्पितः स चाननस्या-तुलनीयतां गमयन् तस्योत्कर्षे पर्यवस्यति। इत्थं पारम्परिकलक्षणानुसारमत्र नातिशयोक्तिः। भवतापि तदेव लक्षणमङ्गीक्रियते चेत् कथमिदमपव्याख्यानम्? नाङ्गीक्रियते चेत् कथं परम्परानुपालनम्।

एवमेव भेदेऽप्यभेदरूपाया अतिशयोक्तेरुदाहरणमपि चिन्त्यमेव। यथा ग्रन्थकृतोदाहृतम्-:

**विकचकुमुदनेत्रा यूथिकामञ्जुहासा**
**सरसिजमृदुकाण्डाताम्रहस्ताङ्घ्रियुग्मा।**
**तरुशिखरकुलायोन्निद्रपक्षिप्रजल्पा**
**समभिसरति चन्द्रं गुर्जरेषु त्रियामा।।** (अभिराज, पृ 119)

अत्र कुमुदयूथिकासरसिजतरुपक्षिभेदे सत्यपि त्रियामानायिकाङ्गत्वादभेदकल्पनयाति-शयोक्तिः।

अत्रातिशयोक्तिसाधनाय कृतमिदं व्याख्यानमनालोचितालङ्कारशास्त्रतयात्यन्तं भ्रान्तम्। तच्चेत्थम्-"**त्रियामा चन्द्रमभिसरति**" इत्यस्मिन् वाक्यार्थे समभिसरणसिद्ध्यर्थं त्रियामायां नायिकारोपोऽपेक्षितः, स च न शब्दोपात्तः किन्त्वार्थः, विकचकुमुदेषु नेत्रयोः, यूथिकायां मञ्जुहासस्य, सरसिजमृदुकाण्डेषु हस्तयुग्मस्य उन्निद्रपक्षिषु च प्रजल्पस्यारोपादवसीयते। इत्थमत्र विशेषणेषु आरोप्यमाणाः शाब्दाः, विशेष्यभूतायां त्रियामायां नायिकारोपश्चार्थः, अतोऽत्र "**श्रौता आर्थाश्च ते यस्मिन्नेकदेशविवर्ति तत्**" इत्येकदेशविवर्तिरूपकलक्षणानुसारं रूपकालङ्कारः स्फुटः। इदमत्र ध्यातव्यम्-भेदेऽप्याहार्याभेदकल्पनायां रूपकं, निगीर्याध्यवसाने चातिशयोक्तिः, सारोपालक्षणास्थले यत्र विषयविषयिणोरूभयोरूक्तिस्तत्र रूपकम्, साध्य-वसानास्थले यत्र विषयिणी विषयस्य निगरणं क्रियते तत्रातिशयोक्तिः इत्युभयोरनयोः

विविक्तविषयतायामाचार्यैः व्याख्यातायां कथं भवता रूपकस्थलेऽतिशयोक्तिर्निर्णीयते। "**अध्यवसायसिद्धत्वे**" इति लक्षणमुक्त्वा अध्यवसायस्य साध्यतायां कथमतिशयोक्तिः साध्यते? विश्वनाथस्येदं व्याख्यानं ध्यातव्यं–"**विषयनिगरणेनाभेदप्रतिपत्तिर्विषयिणो-ऽध्यवसायः, तस्य चोत्प्रेक्षायां विषयिणोऽनिश्चितत्वेन निर्देशात् साध्यत्वम्, इह तु निश्चितत्वेन प्रतीतिरिति सिद्धत्वम्।**" (सा.द.–10–693)

**4 ) विशेषोक्तिः–ः**

**विशेषोक्तिस्तथाहेतौ सत्यभावः फलस्य च।** (अभि. 133)

इत्यविशेषोक्त्या यथापरस्परं विशेषोक्तिं लक्षयित्वा ग्रन्थकृता पद्यमिदमुदाहृतम्–

**वात्योत्थधूलिनिचयैर्वनिका परीता भग्नाः प्रभञ्जनरयैस्तरवस्समन्तात्।**
**वर्षानिषद्वरवशाद्वसुधाऽप्यगम्या नूनं विरञ्चिकृपयैव मृगोऽवतीर्णः॥**

अत्र वात्याधूलिप्रभञ्जनवर्षानिषद्वरादिप्राणसंकटकारणेषु सत्स्वपि मृगप्राणहानिरूप-कार्याभाववशाद् विशेषोक्तिः। (अभिराज–133)

अत्र व्याख्यानेन पद्येऽस्मिन् योऽयं विशेषोक्तिसाधनोद्योगः कृतः स आपततो विशेषोक्तिं गमयति, किन्तु विचारे कृते मृगप्राणहानिरूपकार्याभावस्य दृढतरकारणस्य कविनैव न्यस्तत्वात्, विशेषोक्तिः चमत्कारिणी नैव। अवलोक्यतां–"**नूनं विरञ्चिकृपयैव मृगोऽवतीर्णः**" इत्युक्त्वा भवतैव मृगप्राणहानिरूपकार्यस्य प्रतिबन्धकं विरञ्चिकृपारूपं कारणमुपन्यस्तम्। तदपि नूनमिति निश्चयवाचकेनाव्ययेन अन्ययोगव्यवच्छेदकेन एवकारेण च भवत्प्रयुक्तेन मृगप्राणरक्षणे विरञ्चिकृपाया हेतुत्वं निश्चिनोति। भारतीयसंस्कृतौ '**ईश्वरेच्छा बलीयसीति**' वचने सर्वेषां दृढप्रत्ययः, अतः सत्स्वपि विपुलकारणेषु ईश्वरेच्छाभावे कार्यं नैव भवति। अत्रापि मृगप्राणहानेः कारणेषु सत्सु विरञ्चिकृतरूपबलवद्धेतौ विद्यमाने कथमत्र यथालक्षणं विशेषोक्तिर्भवितुमर्हति। किञ्च सत्स्वपि कारणेषु मृगो न मृत इति विशेषोक्तिरत्र सति हेतौ फलाभावरूपा व्याख्याता, किन्तु कवेस्तात्पर्यमात्र विशेषोक्त्याधाने न प्रतिभाति, प्रत्युत विरञ्चिकृपाया महत्त्वोद्घाटने वर्तते। अत एव कविना नूनमित्यस्य एवकारस्य च प्रयोगः कृतः, मृगरक्षणे केवलमेकमेवविरञ्चिकृपारूपं कारणं पर्याप्तमिति कविविवक्षात्र विधेयतया स्फुटैव।

वस्तुतस्तु यान्यत्र मृगप्राणहानेः वात्याधूतिप्रभञ्जनवर्षादीनि कारणानि उपात्तानि तानि प्राणहरणकारणानि न भवति। न खलु वात्या प्रभञ्जनकृततरुपातेन वर्षया पङ्किलयेलया वा मृगप्राणहानिः जायते। तथा सति प्रतिवर्षं जायमानैः प्रकृतिविकारैरेभिः मृगविरहितेयं भूः स्यात्। अतो नात्रालङ्कारः न च काव्यत्वम्।

**5 ) परिकरः-:**

**उक्तैः परिकरः प्रोक्तस्साभिप्रायैर्विशेषणैः।** (अभिराज-129)

**कलिकाल महात्मन्! नमो नमः, आश्चर्यशतात्मन्! नमो नमः।**
**हे संस्कृतिपुष्करिणीध्वंसक, मदमेदुरवारण! नमो नमः॥**

अस्मिन् परिकरोदाहरणे **'महात्मन्! आश्चर्यशतात्मन्!'** इति प्रसंशात्मकं विशेषणद्वयं कराले कलिकाले बाधितं सत् विपरीतलक्षणया तस्य दौरात्म्यं लक्षयति तदतिशयश्च व्यङ्ग्यः, तेन नमः पदार्थोऽपि निन्दायां परिणमति। द्वितीयार्धे संस्कृतौ पुष्करण्यारोपात् तद्ध्वंसकतया च कलौ मदमेदुरवारणारोपात् रूपकमुखेन कलिः वाच्यतयैव भर्त्सितः, अतः तत्र प्रयुक्तो नमस्कारो नौचित्यमावहति संस्कृतिध्वंसकस्य नमस्कारानर्हत्वात्। ननु लक्षणयात्रापि नमस्कारेण निन्दा लक्षणियेति चेन्न, वाच्यतया कलेः संस्कृतिध्वंसकतायां निरूपितायां तत्प्रयोज्याया निन्दाया अपि वाच्यत्वमेवौचित्यमावहति। अर्धो वाक्यार्थो लक्ष्यः अर्द्धश्च वाच्य इति नायं कविसम्प्रदायः। पूर्वार्द्धे यथा विशेषणानि विपरीतार्थं लक्षयन्ति तेनैव च नमस्कारोऽपि वैपरीत्ये पर्यवस्यति तथैवोत्तरार्धेऽपि यदि कलिविशेषणं लाक्षणिकं स्यात्तदैव नमः पदार्थोऽपि लाक्षणिकं भवितुमर्हति, किन्तु संस्कृतिपुष्करिणीध्वंसकत्वेनासौ वाच्यतयैव निन्दितः, अतः नमः पदार्थोऽपि वाच्य एव, स च तादृशे कलावनुपयुज्यमानत्वात् दोषे पर्यवस्यति। किञ्च विपरीतक्षणयोपाक्रान्तस्य वर्णनस्य उत्तरार्धेऽनिर्वाहात् भग्नप्रक्रमदोषोऽपि। निर्वाहः कथं कर्त्तव्य इति **"उपकृतं बहु तत्र किमुच्यते"** इत्यादि प्रसिद्धविपरीतलक्षणो-दाहरणेनावगन्तव्यम्। अत्र पूर्वार्धे लक्षणामूलध्वनिचमत्कारः उत्तरार्धे च परम्परितरूपकं न तु परिकरः तदनुकूलाभिप्रायवद्विविशेषणाभावात्। ग्रन्थेऽस्मिन्नलङ्काराणामन्यान्युदाहरणान्यपि चिन्त्यान्येव तानि सहृदयैः स्वयमेव समीक्षणीयानि।

इत्येवं प्रकारेणोदाहरैरेभिः ज्ञायते यत्र अलङ्कारनिरूपणेऽभिराजयशोभूषणेऽस्मिन् ग्रन्थकृतावधानता न वर्त्तिता। वस्तुतः प्राच्याचार्यकृताः लक्षणग्रन्था एवाध्येतव्याः, तैरेव सम्पूर्णं शास्त्रज्ञानं सम्भवति। तदनुसृत्य च काव्यनिर्माणं कर्त्तव्यम्। स्वेच्छया लक्षणहीनानि चमत्कारविरहितानि यथाकथञ्चित् योजितानि काव्यानि तत्र च नव्यशास्त्रसङ्गतिप्रयासः न खलु परम्परारक्षणाय समुचितः। नवलेखनापेक्षया पूर्वाचार्यचिन्तितशास्त्ररक्षणाय प्रयत्नो विधेयः। विशेषतोऽलङ्कारशास्त्रं प्राच्यचिन्तकैः यां परां कोटिमध्यारोपितः तत्परिज्ञानेनानुपालनेन च जीवनसाफल्यं भवितुर्हति। करालेऽस्मिन् कलिकाले तद्रक्षणमेवास्माकं प्रथमं कर्त्तव्यम्।

✦✦✦

संस्कृत-विमर्शः 2016 ( अङ्कः-11 ) ISSN : 0975-1769

# व्याकरणदर्शनेऽधिकरणसम्प्रत्ययः

- **यीशनारायणद्विवेदी**
शोधच्छात्रः, ज.ने.वि., नवदेहली

**निबन्धेऽस्मिन् मुख्यतः वाक्यपदीयमाधारीकृत्य अधिकरणपदार्थः भृशं समीक्षितो विद्यते।**

**शोधसारः-**

प्रस्तुतपत्रेऽस्मिन् साधनसमुद्देशीयमधिकरणमधिकृत्य चर्चिष्यते, तत्र मुख्यत्वेनोपस्थाप्यं वाक्यपदीयमधिकरणम्, किन्तु समूला चर्चा क्रियतेऽष्टाध्याय्या आरभ्य महाभाष्यम्, प्रौढमनोरमा, सिद्धान्तकौमुदी, वाक्यपदीयम्, प्रभृतिग्रन्थानालोच्य। आधारोऽधिकरणम्, एतत्प्रपञ्चभूतं व्याख्यानमेव पूर्वोक्तेषु ग्रन्थेषूपलभ्यते तद्यथा वाक्यपदीयकृत्-**कर्तृकर्मव्यवहितमसाक्षाद्धारयत् क्रियाम्। उपकुर्वत्क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्॥** तात्पर्यमिदं यत् कर्तृकर्मव्यवहिताम्-कर्तृकर्मद्वारिकां क्रियाम्, अत्र क्रियाया अर्थद्वयं भवति, क्रिया **क्रियते ययेति क्रिया** करणव्युत्पत्तिस्वीकारे व्यापाररूपा ताम्, **क्रियते या सा क्रियेति** कर्मपूर्विका यदा व्युत्पत्तिस्तदा फलरूपा ताम्- असाक्षाद्धारयत् सत् फलसिद्धिरूपायां क्रियासिद्धावुपकुर्वत् कारकं शास्त्रेऽधिकरणमिति कथ्यते। क्रियाया सिद्धावुपकारः कर्तृद्वारा कर्मद्वारा वा भवति, कारिकायां व्यवहितकथनेऽपि-असाक्षादिति किमर्थम्, उत्तरति लोकेऽपि अधिकरणकारकस्य क्रियाया धारणं व्यवधानं दृश्यत इति लोकानुभवसंवादार्थं लोकेऽधिकरणद्वारा द्रव्यगुणक्रियाविषयमेवाभिधीयते, अत्र प्रकरणात् क्रियाया आक्षेपे क्रियायामेवोपकारविशेषेण नामधारणरूपोपकारविशेषेणाधिकरणसंज्ञावतिष्ठते। या क्रिया भवति सा च कदाचित् कर्तरि कदाचित् कर्मणि प्रतिष्ठते, अतः पर्यायेणाधिकरणता दृश्यते। यदा क्रिया कर्तृनिष्ठा तदा कर्तृगताधारः, क्रिया तु पूर्वव्युत्पत्तिवद् व्यापारपरा, तदाश्रयत्वात् परम्परया कर्तृनिष्ठाधारः, तथा च यदा कर्मनिष्ठ आधारः क्रियायास्तदा कर्मगताधारः, आधारस्याष्टाध्यायीत आरभ्य नव्यसम्प्रदाये मनोरमा, सिद्धान्तकौमुदी तथा च महाभाष्यम्, वाक्यपदीयञ्चाधृत्य पत्रमिदमलिख्यत। तत्र कर्तृकर्मद्वारैव क्रियाया आधारता भवतीति प्रत्यपद्यत, परम्परया सर्वेषामपि भावानामाधार आकाश एवेति संसर्गग्रहवादिभिराकाशस्य या आधारता तस्याः खण्डनमकारि, पुनराकाशाधिकरण्यसाधना विविधैस्तर्कैरसाध्यत तथा चान्ते **वसेरश्यर्थस्य प्रतिषेध** इति वार्तिकस्य बृहद्व्याख्यानं यथाभाष्यमक्रियत।

**अधिकरणम्-**

आधारोऽधिकरणम्[1]-कर्तृकर्मद्वारा तन्निष्ठक्रियाया आधारः कारकमधिकरणसंज्ञः स्यात्।[2] आधारः, अधिकरणमितिच्छेदः **"कारके"** इति सूत्राधिकारस्तत् कारकपदं प्रथमान्ते विपरिणम्यते, सति विपरिणामे आधार इत्यस्य विशेषणं **कारक**मिति पदं भवति तदाऽर्थो सम्पद्यते आधारः कारकमधिकरणं स्यात्।

**आधारः**- आध्रियतेऽस्मिन्नित्याधारः, अत्राधिकरणे **"हलश्च"** इत्यनेन घञि सत्यनु-बन्धलोपे वृद्ध्यादिकार्ये आधार इति सिध्यति, तदन्वाधारः कारकमधिकरणं भवतीत्यर्थे सति कस्या आधारः कारकमधिकरणमिति, तदा कारकाधिकारात् क्रियाया आधार इति लभ्यते, क्रियाया आधारः कर्म कर्ता वा भवति यतोहि क्रिया कर्तृनिष्ठा कर्मनिष्ठा वा भवति, अत्राधारः साक्षान्न लक्ष्यतेऽपितु परम्परया। कर्तुराधारः कर्मणश्चाधारोऽत्र गृह्यतेऽतो वृत्तावुल्लेखि-कर्तृकर्मद्वारा तन्निष्ठक्रियाया आधारोऽधिकरणसंज्ञः स्यात्, तन्निष्ठत्वञ्च कर्तृ-निष्ठत्वं कर्मनिष्ठत्वम्। इत्येव सिद्धान्तकौमुद्यामष्टाध्याय्यां व्यवाह्रियत। महाभाष्ये तु सूत्रस्यास्य व्याख्यानं भाष्यकृता नाभ्यधायि, वाक्यपदीये तु विस्तृतं व्याख्यानं समुपलभते।

अत्र वाक्यपदीयसम्मताधारचर्चा विधीयते, वाक्यपदीये वस्तुतो विभक्तिविधानक्रमे षष्ठ्या विवेचनं स्यात्, किन्तु षष्ठ्याः कारकत्वाभावात् तत्र यथाक्रमं कारकमधिकरणं व्याख्याति, तत्राधारो नाम-

> **कर्तृकर्मव्यवहितामसाक्षाद्धारयत् क्रियाम्।**
> **उपकुर्वत्क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्॥**[3]

तात्पर्यमिदं यत् कर्तृकर्मव्यवहिताम्- कर्तृकर्मद्वारिकां क्रियाम्, अत्र क्रियाया अर्थद्वयं भवति, क्रिया **क्रियते यया इति क्रिया**[4] करणव्युत्पत्तिस्वीकारे व्यापाररूपा ताम्, **क्रियते या सा क्रिया**[5] इति कर्मपूर्विका यदा व्युत्पत्तिस्तदा फलरूपा ताम्- असाक्षाद्धारयत् सत् फलसिद्धिरूपायां क्रियासिद्धावुपकुर्वत् कारकं शास्त्रेऽधिकरणमिति कथ्यते। क्रियाया सिद्धावुपकारः कर्तृद्वारा कर्मद्वारा वा भवति, कारिकायां व्यवहितकथनेऽप्यसाक्षादिति किमर्थम्, उत्तरति लोकेऽप्यधिकरणकारकस्य क्रियाया धारणं व्यधानं दृश्यते, इति लोकानुभवसंवादार्थं लोकेऽधिकरणद्वारा द्रव्यगुणक्रियाविषयमेवाऽभिधीयते, अत्र प्रकरणात् क्रियाया आक्षेपे क्रियायामेवोपकारविशेषेण नामधारणरूपोपकारविशेषेणाधिकरण-संज्ञावतिष्ठते। या क्रिया भवति सा च कदाचित् कर्तरि कदाचित् कर्मणि प्रतिष्ठते, अतः पर्यायेणाधिकरणता दृश्यते। यदा क्रिया कर्तृनिष्ठा तदा कर्तृगताधारः, क्रिया तु पूर्वव्युत्पत्तित्वाद् व्यापारपरा,

1. अष्टाध्यायी 1.4.45
2. सिद्धान्तकौमुदी कारकप्रकरणम्
3. वाक्यपदीयम्, सम्बन्धसमुद्देशः कारिका संख्या 148
4. तत्रैवाम्बाकर्त्री टीका पृष्ठसंख्या-375
5. तत्रैव

तदाश्रयत्वात् परम्परया कर्तृनिष्ठाधारः, तथा च यदा कर्मनिष्ठ आधार क्रियायास्तदा कर्मगताधारः, तत्र कर्मस्थक्रियाविषया वा कर्तृसंज्ञा स्यादिति तत्र यथायोगं कर्तृकर्मसंज्ञाभावे-ऽधिकरणसंज्ञा प्रसज्येत इत्याशङ्कायामाह-

कर्मस्थक्रियाविषया कर्तृसंज्ञा यथा-**सः तण्डुलान् पचती**'त्यत्र तण्डुलपदं कर्म किन्तु कर्मकर्तरि, किं तेन **तण्डुलाः स्वयमेव पच्यन्ते** कर्तृस्थक्रियाविषया कर्मसंज्ञा, **दृश्यते घटः, गम्यते ग्रामः स्वयमेव,** इत्युभयत्र यथासूत्रं कर्तृकर्मसंज्ञाभावे सत्वे एवाधि-करणसंज्ञावचनवलादधिकरणसंज्ञापत्तिरत एवैतादृशस्थले मा भूदधिकरणसंज्ञा तदर्थं व्यवहिता-मिति पदम्। उदाहरणम्-कटे आस्ते[1] अत्र कर्तुरध्याहारो देवदत्तगतासनक्रियां प्रति कटस्य संयोगः, देवदत्तद्वारा कटस्य आधारता सिध्यति। स्थाल्यां पचति[2] तण्डुलान् स्थाल्यां पचति तण्डुलकर्मतायाः पाकक्रियां प्रति स्थाल्याः संयोगोऽतः स्थाल्याधारः, अनयोरुदाहरणयोः कर्तृकर्मसम्पृक्तायां क्रियायां पारम्पर्येणोपकारोऽधिकरणम्, अत एवाधारस्याभावे **कर्ता कर्म,** इत्युभावपि साक्षात्क्रियाया उपकारं न कुर्याताम्, अत एव कर्तृकर्मणोर्धारणादुपकुर्वन् तत्स्थां क्रियामप्युपकरोति। **कारकाधिकारे तरब्तमप् योगो नास्ति, साधकतमं करणमिति** सूत्रे तमब्ग्रहणेन ज्ञाप्यते यत् कारकाधिकारे तरतमयोगोऽतिशययोगो न भवति, यतो ह्यतिशायन एव भवन्ति तमादिप्रत्ययाः, अतः कारके तरतमयोगो न जायते, तेन स्थाल्यां पचतीत्यादौ कर्मपरम्परया क्रियाधारके स्थाल्यादौ, कटे शेते, इत्यत्रापि कर्तृपरम्परया क्रियाधारके कटादावधिकरणसंज्ञायाः सावकाशत्वादनवकाशत्वेन साक्षात्क्रियाधारकयोः कर्तृकमणोः परत्वाद-धिकरणसंज्ञां बाधित्वा कर्तृकर्मसंज्ञे एव। कारकाणां क्रियानिमित्तता साक्षात्परम्परया वा आश्रीयते तस्मादुभयत्रोदाहरणेष्वधिकरणस्य कर्तृकर्मव्यवधानेन क्रियोपकारकारत्वं कारकत्वेन सह न विरुध्यते, अर्थात् स्थाल्यां पचति, कटे शेते, इत्यत्र परम्परयाधारता प्रतिपाद्यते, तण्डुलान् स्थाल्यां पचति, तण्डुल इति कर्म तस्मादत्र कर्मद्वारा क्रियाधारता, क्रिया च पचतीति, मोहनः कटे शेते, मोहन इति कर्तृपदद्वारा शयनक्रियायां परम्परयाऽन्वयात् कर्तृनिष्ठाधारता। कारिकायां व्यहितामिति पदोपादानेऽपि-असाक्षादित्यस्य पदस्य तात्पर्यं किम्-उत्तरति लोकानुसारेणाधिकरणपदार्थस्य व्यवस्थायामधिकरणस्य क्रियाधारणं प्रति कर्तृकर्मव्यवधानस्य पूर्वोक्तस्यैव व्यवहितस्यैव पुष्ट्यर्थम्, तथाहि शब्दद्वारा प्रतीयमानो लौकिकोऽर्थो व्याकरणशास्त्रे शब्दसाधुत्वनिमित्तं कथ्यते तदौपश्लेषिकमधिकरणं भवति, यदा समवाय्याधारस्तदा अभिव्यापकमधिकरणं भवति। तद्यथा-कटे आस्ते देवदत्तः[3], इत्यत्र संयोगिपदार्थे कटे देवदत्तस्य साकल्येन सम्बन्धाभावोऽवलोक्यते, किन्तु कतिपया-वयवानां व्याप्यत्वेनौपश्लेषिकमिति। तिलेषु तैलम्[4] इत्यत्र तिलरूपाधारस्य समवायिना सह तिलरसेन तिलानां सकलावयवव्याप्त्या लोके प्रसिद्धत्वात् व्यापकमधिकरणम्, यतोहि

1. तत्रैव प्रकाशटीका पृष्ठसंख्या 376
2. तत्रैव पृ.सं. 376
3. तत्रैव
4. तत्रैव

तिलेषु समस्तावयवेषु तैलस्य व्याप्तिः। **खे शकुनयः**[1] अत्राकाशस्य तत्त्वेनावयवाभावत्वात्, यतोहि निरवयव आकाशस्तत्रावयवाः कल्पिता भवन्ति, अतः कल्पितप्रदेशतया सम्बन्धत्वात् वैषयिकमधिकरणमुच्यते, **अनन्यत्र भावाश्चाभावश्चात्र विषयार्थः, अनन्यत्र भावश्च अनन्यत्र भावाभावश्च,** अत्राकाशे यत्रावयवो नास्ति वस्तुभूतस्तत्र विषयशब्दार्थः, जले मत्स्याः-[2] कटे आस्ते, इतिवदत्र जलैकदेशाधारप्रदेशस्यापेक्षैतदौपश्लेषिकमधिकरणम्। गुरौ वसति[3] इत्यत्र शिष्याणां या वृत्तिः सा गुर्वधीना, अतो गुर्वधीनायां वृत्तौ गुरुसमीपस्थितौ वैषयिकमधिकरणं गुरुः, गुर्ववयवानां व्यस्तानां समस्तानां वा स्थितेराधारतयाऽनपेक्षणात्। अत्र गुरुशिष्ययोराधाराधेयभावरूपोऽपि सम्बन्धो बौद्धः। युद्धे सन्नह्यति[4] इत्यत्र युद्धाभिप्रायेण कवचखड्गादिबन्धनरूपस्य सन्नहनस्य प्रवृत्तेर्युद्धविषयः, अत्रापि युद्धविषयत्वाद् वैषयिक-मेवाधिकरणम्। शत्रोरभावे सुखम्[5] अभावस्य बौद्धमुपश्लेषमादायाधिकरणत्वं पूर्वमेव निरणायि। आधारस्य त्रैविध्यविभाजने प्रौढमनोरमायामुक्तम्-मूले आधारस्त्रिधेति-एतच्च संहितायामिति सूत्रे भाष्ये स्पष्टम्।[6] यथा मूले आधारस्य त्रिविधता भाष्यसम्मता, किन्त्वा-धारत्वेन सकलाधार एकैव कथं त्रैविध्यसङ्गतिः- समाधीयते यदाधारता किञ्चित्सम्बन्धा-वच्छिन्ना भवति, यतो ह्याधारता-नियामकसम्बन्धेषु भिन्नत्वं भवति अतः सम्बन्धभेदादाधारोऽपि त्रिविधः, तत्राधारत्वाभिमतपदार्थीय-यत्किञ्चिदवयवावच्छेदेन यः संयोगः तत्संयोगसम्बन्धा-वच्छिन्ना कर्तृकर्मद्वारा क्रियानिरूपिता या आधारता या औपश्लेषभूता[7]। अव्यवहितसमीप्य-सम्बन्धावच्छिन्ना कर्तृकर्मद्वारा क्रियानिरूपिता या आधारता साप्यौपश्लेषभूता।[8] समवाय-सम्बन्धावच्छिन्ना कर्तृकर्मद्वारा क्रियानिरूपिताधारताप्यौपश्लेषभूता। एवमेव संयोगसमवायान्तराति-रिक्तविशेषणतासम्बन्धावच्छिन्ना आधारताऽप्यौपश्लेषिकी। अर्थात् संयोगसमवायविशेषणता-वच्छिन्नाधाराणामौपश्लेषिकता। यथा-शेते कटे देवदत्तः, संयोगसम्बन्धेन, अतो देवदत्तवृत्ति-राधेयतानिरूपितकटवृत्तिराधारता, संयोगसम्बन्धावच्छिन्ना। पटे शौक्ल्यम्- पटवृत्तिशुक्लता समवायसम्बन्धेनातः समवायसम्बन्धावच्छिन्नाधारतौपश्लेषरूपा। द्रव्ये जातिः- अत्रापि द्रव्य-वृत्तिजातिः समवायेन पूर्ववत्। घटाभावे पटाभावः- विशेषणता सम्बन्धेनैतावता सम्बन्धभेदादौ-पश्लेषिकोऽपि त्रिविधः।[9] संयोगसमवायिनां भिद्यमाना उपकारा के इति जिज्ञासायामाह-

**अविनाशो गुरुत्वस्य प्रतिबन्धे स्वतन्त्रता। दिग्विशेषादवच्छेद इत्यद्या भेदहेतवः॥**[10]

---

1. तत्रैव
2. तत्रैव
3. तत्रैव
4. तत्रैव
5. तत्रैव
6. प्रौढमनोरमा का. सप्तमीप्रकरणे पृ.सं.953
7. तत्रैव
8. तत्रैव
9. तत्रैव
10. वा.प.सं.समु. का.150

अत्र भेदकानुद्धरति वाक्यपदीयकृत्- अविनाशः- "तिलेषु तैलम्" अविनाशस्तैलस्य तिलकृतो धारणमूलकोपकारः, "पर्यङ्के शेते" शयितुर्गुरुत्वस्य प्रतिबन्धे आधारस्य स्वतन्त्र= कर्तृता लोके प्रसिद्धा, तेन पर्यङ्कादिना आधारेण शयितुराधेयस्य सौत्थित्यमुपकारः। "खे शकुनयः" इत्यत्र दिग्विशेषाद्- अधारदिग्रूपादाधेयसम्बन्धस्यापच्छेदोऽपावर्तनम्, आधेयस्या-धारकृदुपकार इत्याद्या उपकारा उपश्लेषकृताभेदानामाधाराणां भेदहेतवो भवन्ति। "प्राच्यामुदेति" "प्रतीच्यामस्तमेति" "दक्षिणस्यामगस्त्यः" "उत्तरस्यां ध्रुवः" इत्यादिप्रयोगेषु स्व-स्वसम्बन्धेभ्यः प्रतिपादनानुकूल्यरूप एवोपकारोऽधिकरणेनाधेयस्य क्रियते। अतः परं कथयति यन्मूर्तानाम्= तत्र मूर्तत्वं नाम- परच्छिन्नपरिमाणवत्त्वम्, अतः परं परिच्छिन्नपरिमाणवतां पदार्थानां या स्थितिः साप्यन्याधीना अतो हेतोः प्रमाणतः सिद्धायामपि मूर्ताधिकरणत्वस्थितौ तत्र मूर्ताधिकरण-स्याप्यपरमधिकरणं भवति तच्च व्याख्यायते-

**आकाशमेव केषाञ्चित् देशभेदप्रकल्पनात्।**
**आधारशक्तिः प्रथमा सर्वसंयोगिनां मता।।**[1]

यैराकशः स्वीक्रियते संसर्गवादिनस्तन्मते तु सर्वसंयोगिनां पदार्थानां प्रथमा मुख्याधार-शक्तिर्मूर्तख्यापकैः सर्वसंयोगिभिर्द्रव्यैरुपाधिभूतस्याकाशस्य देशभेदप्रकल्पनादाकाशमेव मता, अर्थादाकाशमुद्दिश्य विधीयमाना या आधारशक्तिः, तस्याः स्त्रीत्वान्मतेत्यत्र स्त्रीत्वम्। तात्पर्यमिदं यदन्तरिक्षे ग्रहनक्षत्रविमानानि सञ्चरन्ति तेषां तावदाकाशमेवाधिकरणम्, यथा- "पृथिव्यां रथः" इत्यत्र रथस्याधिकरणं पृथिव्यैकदेशः, यत्र रथस्य स्थिती रथश्चाधेयः, तत्र रथाधारभूतस्य पृथिव्यैकदेशस्य परम्परयाकाश एवाधारः, एवमेव सर्वसंयोगवतां पदार्थानामपि परम्परयाकाशस्यैवाधिकरणता प्रत्यपद्यत।[2] एवमेव समवायिनां पदार्थानामपि स्वावयवा एव आधाराः, तत्राप्यवयवेष्वप्यन्ते परमाणवो द्वयणुकानामाधाराः, तेषामपि देशप्रविभागकरणम्= अवयवभेदकल्पनाकारणमाकाशमेव आधार इति मुख्यभावानामाधारशक्तिराकाशमाश्रिता। पुनरेवम्भूतायां परिस्थितौ सत्यां शङ्कोदेति यद् यदि सर्वेषामपि संयोगिसमवायिनां पदार्थानां पारम्पर्येण यद्याकाशस्यैवाधिकरणता तदात्वे तु संकराख्यो दोषो भवेदित्याशङ्क्याह-

**न चैवमेकदेशतया सङ्करः स्वावष्टब्धपरिमितदेशमुखभागप्रकल्पने भिन्नतया आकाशं देशभावं प्रतिपद्यते यतः तस्मादुक्तम्- देशभेदप्रकल्पनादिति।**[3] अत उत्तरति सर्वेषां पदार्थानां पारम्पर्येणाधिकरणत्वे सति समानाधिकरणता, तथात्वात् सङ्करो न यतोहि स्व-स्वाधेयेन परिच्छिन्नदेशवत्त्वेन तदवच्छिन्नाकाशस्यैवाधिकरणता तेन यावन्तोऽपि पदार्थाः सन्ति तेषामाधाराधेयदेशपरिच्छिन्नत्वेन तावदाकाशमेवाधिकरणतामेति, एवं त्वाकाशं प्रत्याधारदेशस्य कल्पनमाधेयावच्छिन्नदेशेन क्रियते तस्मात् तत्र दोषाभाव एव पूर्वोक्तसङ्करस्य। अतः सर्वेषां संयोगिनां देशतया व्यवह्रियमाणस्याकाशभेदस्य तैरेव संयोगिभिरव्यापकैः परिकल्पनादाकाशं सर्वेषामसङ्करेणाधिकरणम्।

---

1. तत्रैव 151
2. तत्रैव प्रकाशटीका 380
3. तत्रैव 380

अतः परमाकाशाधिकरणवादिनां खण्डनं क्रियते यदाकाश एव नास्ति तदा कथमा-काशस्याधिकरण्यम्- तत्रैतत् स्यात् किमिदमनध्यक्ष्यमाणमाकाशं नाम? शब्देन गुणेन गुणी सोऽनुमीयते इति चेदाकाशगुणत्वस्यैवासिद्धेः शब्दस्यान्वय्येतत्[1] कथ्यते यच्छब्द आकाशस्य गुणोऽतः आकाशगुणत्वाद् गुणिनोऽनुमानं क्रियते इति चेन्न कर्तुं पार्यते यतोहि प्रस्तुतप्रकरणे गुणवत्त्वं नाम- अयावद्द्रव्यभावित्वमाश्रयादन्यत्रोपलभ्यमानत्वम्, इत्युभयं यस्य तस्यैव गुणवत्त्वम्- तेन शब्दो यावद्द्रव्यभावित्ववान्, अर्थादाकाशे एवोपलभ्यते, आकाशश्च कर्णशष्कुल्यवच्छिन्नः, अन्यत्रास्य शब्दस्योपलभ्यमानतैव नास्ति, अतो यावद्द्रव्यभाव्येव शब्दः, अतो न गुणो गुणाभावान्न गुणी, तस्मान्नाकाश इत्याकाशस्य खण्डने कृते सति साधयत्याकाशसद्भावम्-

**इदमत्रेति भावानामभावान्न प्रकल्पते।**
**व्यपदेशस्तस्मादाकाशनिमित्तं सम्प्रचक्षते।।[2]**

अत्र सद्भावत्वमाकाशस्य साधयति, कथयति यच्छब्दप्रमाणकानां शब्दोऽर्थः, बहिरर्थ-स्योपलभ्यमानता विद्येत न वेति, अस्ति चायं शब्दो वाक्यप्रयोगरूपः- "इदं नक्षत्रमत्र तिष्ठति" अत्र यो व्यपदेशः शाब्दो व्यवहारो वाक्यप्रयोगरूपः स नक्षत्राधारभूतानां भावानाम-भावान्न प्रसिध्यत्यतस्तं व्यपदेशनिमित्तममूर्तमाकाशनिमित्तकं सम्प्रचक्षते। तात्पर्यमिदं यदत्रेति पदेन यन्निर्दिष्टं तदाकाशमेव पृथिव्यादेरन्यत्वादवलम्ब्यते इति संसर्गवादिनः, न चावस्त्वेतत् सर्वसामर्थ्यविरहलक्षणादवस्तुन एवंविधव्यपदेशाभावात्।

तात्पर्यमिदं यदाकाशख्यं वस्तु न स्यात्, तदा त्वत्र पदेन तद्व्यपदेशो न विधातुं शक्यते यतोह्यवस्तुनि व्यपदेशो न कर्तुं शक्यते वस्तुन्येव तस्मादाकाशोऽस्ति, "यतोहि निरूप्य हि व्यपदेशो निरूपणा च वस्तुनिबन्धना" निरूप्यं हि- अर्थस्वरूपमितरपदार्थसंसर्ग-योग्यत्वेन विचार्य हि व्यपदेशः, अर्थादर्थस्य स्वरूपं विचार्यते तच्चेतरपदार्थसंसर्गात्मकम्, तत्रैव व्यपदेशः, यदि पदार्थसंसर्गयोग्यत्वं न तदेदमत्र व्यवहारः संभवति, अतोऽस्मि आकाशस्य वस्तुनिबन्धना निरूपणा वस्तुप्रयुक्तस्यैव यतोहि शाब्दे व्यवहारे निरूपितस्यैव गोचरीकृतस्यैव वस्तुत्वात्- अत एव "शत्रोरभावे सुखम्" इत्यादिषु शाब्दव्यवहारेषु शब्देन निरूप्यमाणस्याभावस्य वस्तुत्वेन सुखाधाराभाव इत्यस्ति प्रागुक्तलोकव्यवहारनिमित्तभूतमाकाशं नक्षत्राधारतामापन्नम्। यदि पदार्थानां परमार्थतो विचारः क्रियते तदा तु सर्वं प्रपञ्चरूपमसत्, अद्वयस्यैव सत्वम् अविचारितरमणीयलौकिकपदार्थाश्रया लक्षणप्रवृत्तेरवमविरुद्धेत्याशयः, तस्मादाकाशस्य सद्भावमुक्तम्, सिद्धस्वभावतामादाय सर्वाधारत्वम्, किन्तु साध्यस्वभावमादाय कालस्य सर्वाधारता इति-

**कालात् क्रियाः विभज्यन्ते आकाशात् सर्वमूर्तयः।**
**एतावतांश्चैव भेदोऽयमभेदोपनिबन्धनः।।[3]**

---

1. तत्रैव
2. तत्रैव वा.प.सं., समु. का. 152
3. तत्रैव 153

अत्र कालस्य द्वे शक्ती प्रतिबन्धाऽभ्यनुज्ञाख्ये, ताभ्यामेव क्रियासु भेदः क्रियते, जायते, अस्ति, विपरिणमते, वर्धते, अपक्षीयते, नश्यति, एवं रूपेण क्रमेण एकस्याः प्रतिबन्धेऽपरस्या अभ्यनुज्ञा, एवं क्रमः प्रचलति, इत्थं सर्वाषामप्याधारभूतक्रियाणामेकाधिकरण-तास्ति, सा च कालमूलिका एवमेवाकाशात् परिच्छिन्नपरिमाणद्रव्यसंयोगेन परिच्छेदककल्पनया विभक्तभावानां पदार्थानाम् आधारभावमाप्नुवन् नियतदेशवृत्तितया भिन्न-भिन्नदेशवर्तित्वेन पदार्थव्यक्तिर्विभजते-मूर्तिक्रियाविवर्तो त्वविद्याशक्तिप्रवृत्तिमात्रौ, अविद्यापि ब्रह्मणि लीयते तस्मात् सर्वेषां भावानां परम्परया परब्रह्म एव। उपान्वध्याङ्वसः- इत्युपादिपूर्वस्य वसतेराधारः कर्म स्यात्। तत्र सूत्रे उप-अनु-अव-अधि-आङ्-पूर्वाद् वस् धातोराधारः कर्म स्यात्। किन्तु "वसेरश्यर्थस्य प्रतिषेधः" तेन "ग्रामे उपवसति" इति भवति "देवदत्तः तिष्ठति ग्रामे" इत्यत्र तिष्ठतिर्गतिनिवृत्तिविशिष्टमवस्थानमभिधत्ते, एवमुपवसतिरपि, उपवसिर्भोजन-निवृत्तिविशिष्टो वास इति वार्तिककारो मन्यते, तथा चोपवसेस्तिष्ठतिवद् ग्रामेण सम्बन्धो-ऽस्तीतिति प्राप्ता ग्रामस्य कर्मसंज्ञा निवर्त्यते, विशेषोऽत्र तिष्ठतौ ग्रामस्य कर्मसंज्ञायाः प्राप्तिर्न, फलव्यापारावुभावप्येकस्मिन्नेवाधिकरणे तिष्ठतस्तस्मात् तिष्ठतेरकर्मकत, किन्तूप-पूर्वकस्-धातोर्नाकर्मकता, फलव्यापाररूपार्तयोर्-व्यधिकरणतायाम्, फलञ्चात्र भोजननिवृत्तिः, अनेन वसेरश्यर्थस्यप्रतिषेधः" वार्तिकेन विवक्षा नियमः क्रियते, अतो नात्र ग्रामादेरीप्सित-तमत्वेन विवक्षा किन्तु सा च विवक्षाधाररूपा। भाष्यकृताऽस्य वार्तिकस्य प्रत्याख्यानं क्रियते "**नात्रोपादिपूर्वस्य वसेर्ग्रामोऽधिकरणम्**" कस्य तर्हि? अनुपसर्गस्य, ग्रामे वसन् त्रिरात्र-मुपवसति। अत्र प्रत्याख्याने किं बीजम्- इह कालविशेषावच्छिन्ना भुजिनिवृत्तिरूपवसेरर्थः, तत्र कालविशेषस्यान्तरङ्गत्वं तच्च कीदृशम्, भोजननिवृत्तेर्-नियमेनोपलक्षकत्वेन प्रथमोप-स्थितिकतयाऽनियतग्रामदिविशेषस्यापेक्षयाऽन्तरङ्गः, प्राकृतं कर्म, अभुञ्जानस्य त्ववस्थानं निरधिकरणस्य नोपपद्यते, आधारोऽपेक्षितोऽर्थापत्या गोचरीकृतोऽनियतः, स चोपदिपूर्वस्य वसेर्न सम्बन्धी किन्तु वसेरित्युपवसिनिरूपिता तस्य कर्मसंज्ञा प्राप्तैव। पुनः कथयति यद् यथा कालोऽपेक्ष्यते तद्वद्देशोऽप्यपेक्ष्यते नियतस्तेन तीर्थे उपवसतीत्यादिकं सिध्यति अस्याम-वस्थायां तूपवसेर्देशेन सम्बन्धः स्यात् तदा कर्मसंज्ञा स्यात् इत्याशङ्कायां भाष्यं समर्थयति-

**यद्यप्युपवसिर्देशविशेषमनुरुध्यते।**
**शब्दप्रवृत्तिधर्मात्तु कालमेवावलम्बते।।**[1]

तात्पर्यमिदं यत् तीर्थादिविशेषे भोजनादिनिवृत्तिर्यदाऽपेक्ष्यते तदा "उपवसिः" भोजन-निवृत्तिरूपाक्रिया तीर्थादिरूपं देशविशेषं तु स्वाश्रयतयाऽनुरुध्यतेऽर्थादपेक्ष्यते, शब्दस्य या प्रवृत्तिस्तत्र धर्मस्तस्माच्छब्दशक्तिस्वभावात् काल एवस्वाश्रयतामाश्रयते, उपवासाङ्गभूतस्य वासस्य तु तीर्थादिरूपे देशविशेषे सम्बन्धः। निष्कर्षत्वेनेदं वक्ष्यते तीर्थादिरूपे देशविशेषे वासूपर्विका किञ्चित्कालं भोजनिवृत्तिरूपवसेरर्थः, तत्र प्रधानक्रियायां कालस्य प्रथमोपस्थिति-कत्वेनान्तरङ्गत्वात् सम्बन्धः, तदङ्गभूतायां वासक्रियायां बहिरङ्गस्य देशविशेषस्य सम्बन्ध

1. तत्रैव 154

इति, तथा च "तीर्थे उपवसति" इत्यस्य शाब्दोऽनुभवः, "तीर्थादिदेशे वसन् त्रिरात्रमुपवसति" एवञ्चेदमायाति यदेकपदोपस्थापितयोर्धात्वर्थकालयोः परस्परसम्बन्धोऽन्तरङ्गत्वाद् भिन्नपदो-पस्थतियोस्तु वासदेशयोर्द्वयोरपि बहिरङ्गयोः परस्परं सम्बन्धः षाष्ठिकः। तथा च धात्वर्थाङ्ग-भूतवसतिक्रियाद्वारेणोपवसेरधिकरणतां देशः प्रतिपद्यते। भोजनस्य निवृत्तौ सत्यां विशेषणस्य वासस्याधिकरणत्वाद् देशो वासविशिष्टाया भोजननिवृत्तेरधिकरणम्। साक्षात् कालेनैव तस्या योगः, भोजननिवृत्तिर्नियतकाला तत्वात् तस्याः कालव्यवधानेन भोजनरूपत्वात्। उपवसेरङ्गस्तु वासो नियतदेश इति वासद्वारेणात्र देश उपवसेरधिकरणम्, एतस्मात् काराणादेव भाष्ये "ग्रामे वसन् त्रिरात्रमुपवसति" उपवासाङ्गभूतस्य वासस्य ग्रामेण सम्बन्धो दर्शितो न तु साक्षादुपवासस्यैव। वसतिक्रिया चात्रोपवसेर्बहिभूतापि तदङ्गभूतत्वात् तेनैवाक्षिप्तेति वासद्वारेणे-ष्यते ग्रामस्योपवसनि सह क्रियाकारकभावरूपः सम्बन्धः, वासरूपाङ्गवती हि भोजननिवृत्ति-र्नियतकाला ह्युपवसरेरर्थः, अतः "ग्रामे उपवसति" इत्युक्ते उपसरेङ्गभूतक्रियापेक्षया देशस्या-धिकरणम्, न तूपवसिक्रियापेक्षा साक्षात्, वसतिक्रियाद्वारा तूपवसेरपि देशोऽधिकरणमिति त्वन्यदेतत्। पुनः कथयतिउपवासाङ्गभूतवासक्रियासम्बन्धे प्रागुक्तरीत्या ग्रामस्य योग्यतया वृत्तेः प्रधानभूतभोजननिवृत्तिरूपायाः क्रियाया अपेक्षया चाप्रयुज्यमानो यः कालस्तस्यापि कर्मता प्रतीयतेऽत आह–

**वसतावप्रयुक्तेऽपि देशोऽधिकरणं ततः।**
**अप्रयुक्तं त्रिरात्रादि कर्म चोपवसौ स्मृतम्॥**[1]

"तीर्थे उपवसति" इत्यादौ वसतौ शत्रन्ते वस्-धातावप्रयुक्तेऽपि ततः=तस्मात्तमादाय देशस्तीर्थादिरूपयोग्यतयाऽधिकरणम्, अत्राप्रयुक्तं त्रिरात्रादि च=तूपवसौ=उपवस्यर्थे उपवासे कर्मस्मृतं भाष्य इति। अयं भावः–"तीर्थे उपवसति" इत्यादौ तीर्थादिदेशः श्रूयमाणोपवासक्रिया-सम्बन्धायोग्यत्वात् सामर्ह्यप्राप्तायां पदार्थसामर्थ्याक्षिप्तायामप्रयुज्यमानायामपि वसतिक्रियायां योग्यतयाऽधिकरणम्, यतोहि साधनं ह्यश्रूयमाणमपि क्रियामाक्षिपति-तद्यथा प्रविशपिण्डीमिति भक्षिक्रिया कर्म, एवमेव ग्रामे उपवसतीत्यत्र च क्रिया वासरूपक्रियाविशेषप्रत्ययनिमित्ता-भावान्नियतसाहचर्यरूपसम्बन्धा क्रिया, तस्याः सामान्यरूपेण सत्ता प्रतीयते यस्य च ग्रामाधिकरणी सत्ता ग्रामे असौ वसतीति, वासं प्रत्यधिकरणं ग्रामादिदेशोऽवस्थितो भवति, श्रूयमाणायामुपवसिक्रियायां काल एव योग्यत्वनैयत्याभ्यां पूर्वोपस्थितिकत्वेनान्तरङ्गोऽधिकरणम्, इत्यप्रयुज्यमानमप्येतद् योग्यत्वाद् आक्षिप्यते, यथा प्रवेशनक्रियायां गृहम्। तत्र च साक्षादुप-वसतिरूपप्रधानीभूतक्रियाया आधारे कृतार्थायाः कर्मसंज्ञाया अङ्गभूता वसतिक्रिया तद्वारा आधारामायातं ग्रामादिरूपं न स्पृशति, यतोहि प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्ययात्, पुनः कथयति यत् साधकतममं करणम्-इति सूत्रे तमब्ग्रहणाच्च साक्षात्कारकशक्तीनां प्रकर्षो नाद्रियते, न तु क्रियासम्बन्धनिमित्तकोऽन्तरङ्गबहिरङ्गभावप्रयुक्तः प्रकर्षानादरः क्रियते, अन्यथा सर्वविधस्य प्रकर्षस्य अनादरः क्रियते चेत् तदा स्वव्यापारे स्वातन्त्र्यात् कर्मसंज्ञा

---

1. तत्रैव 155

स्यात्, सत्यां कर्तृसंज्ञायां स्वातन्त्र्यप्रकर्षानादरात्। सन्दर्शनादिभिरीप्सिततमायां क्रियायां कर्मसंज्ञायाः सावकाशत्वान्न सा कर्तृसंज्ञायाः प्रकृताया बाधिका भविष्यति। यदा च वासविशेषस्यैवोशब्देन द्योतनाद्वास एव विशिष्टोपवसेरित्यर्थः, तदा कर्मसंज्ञापि देशे चरितार्था "ग्राममुपवसति" अधितष्ठतीत्यर्थः, अस्माद्धेतोर्भोजनस्य निवृत्यर्थतायामुपवसेः साक्षात्काल आधारः कर्मसंज्ञः, देशस्त्वभिहितोऽप्यङ्गभूतवसिद्वारेणैवाधारो न साक्षाद् स्थितम्। यस्तु व्याचष्टे उपवसेर्भोजन-निवृत्तिरूपाभावरूपत्वाद् देशरूपेणाधारेण भावाभावयोरसम्बन्धः सदसतोरुपरागायोगादिति, तस्य मते तत एव हेतोः कालेनाप्याधारणोपवसेरत्रासम्बन्धः स्यात्, अस्ति च गतिनिवृत्ति-वचनस्यापि तिष्ठतेः स्थाधातोः स्ववाच्याऽर्थद्वारकाधारेण ग्रामादिना सम्बन्ध इति निर्वृत्ति-रूपत्वादित्याधारस्यासम्बन्धसाधको हेतुरनैकान्तिकः।

"ग्रामे तिष्ठति" "ग्रामे आस्ते" इत्यत्र स्वव्यापारोपरमरूपायाः क्रियान्तरं स्वातिरिक्तं निवर्तयन्त्याश्च निवृत्तेः क्रियात्वं न विरुद्धम्, अत्रोच्यते "कारकाणां हि प्रवृत्तिविशेषः फलानुमेयः क्रिया"[1]कारकाणां प्रवित्तिविशेषः=व्यापारविशेषः (फलानुमेयक्रिया) स चोप-वसतीत्यत्र नियतकालभोजननिवृत्तिरूपः स्फुट एव। स चापि विधारकः सङ्कल्पविशेष एव मानसो व्यापारः, निवृत्तिः सन्दर्शनादीनाम्, सन्दर्शनसङ्कल्पादीनां प्रधानक्रिया अवान्तरक्रिया-व्यापाररूपाणाम्, प्रधानक्रियया निवृत्तिरूपया सह भेदाभावात्, "युद्धाय सन्नह्यते" इत्यादावेव हि प्रधानक्रियातोऽवान्तरव्यापाराणां भेदविवक्षेति पूर्वमुक्तम्, तत्र हि सन्नहननं कवचधारणं खड्गधनुस्तूणीरादिधारणानि च तस्य सन्नहननस्यावान्तरव्यापाराः, अत्र तस्य सन्नहनस्य कवचधारणस्य तैः खड्गधनुस्तूणीरादिधारणैः सह भेदः स्फुट इति तत्र भेदविवक्षैव। तद्वदेवात्रापि सङ्कल्पपूर्वकः कर्तृव्यापारो नियतकालव्यवधानेन भोजनादिरूपोपवसेर्धातोरर्थः क्रियारूप इत्यस्य निवृत्तिरूपत्वाभावात्, आधारसम्बन्धे सम्भवत्यपि साक्षादुद्देशलक्षणेनाधारेण न सम्बन्धः, एतदङ्गभूतवसतिक्रियाद्वारेण तस्यात्र योगादित्युपवासव्यभिचारिकालाख्याधार-सम्बन्धे सत्येव काले कर्मसंज्ञाविधिरित्यधिकरणविचारोऽभाव्यत।

**उपसंहारः-**

आधारस्याष्टाध्यायीत आरभ्य नव्यसम्प्रदाये मनोरमां सिद्धान्तकौमुदीं तथा च महाभाष्यम्, वाक्यपदीयञ्चाधृत्य पत्रमिदं समलेखि। तत्र कर्तृकर्मद्वारैव क्रियाया आधारता भवतीति प्रत्यपादि, परम्परया सर्वेषामपि भावानाधार आकाश एवेति संसर्गग्रहवादिभिराकाशस्य या आधारता तस्याः खण्डनं कृतं पुनराकाशाधिकरण्यसाधना विविधैस्तर्कैरन्ते **वसेरश्यर्थस्य प्रतिषेध** इति वार्तिकस्य बृहद्व्याख्यानं यथाभाष्यमक्रियत।

**सन्दर्भग्रन्थाः-**

1. पाणिनि, अष्टाध्यायी, चन्द्रलेखाव्याख्या, व्याख्याकार-ईश्वरकृष्णः, चौखम्भा संस्कृत-प्रतिष्ठानम्, देहली, 2009

1. तत्रैव प्रकाशटीका 389

2. भट्टोजिदीक्षितः, वैयाकरणसिद्धान्तकौमुदी, दीपिकासंस्कृतहिन्दीव्याख्या, व्याख्याकारः-गोपालदत्तपाण्डेयः, चौखम्भासुरभारतीप्रकाशनम्, वाराणसी, 2008

3. भट्टोजिदीक्षितः, वैयाकरणसिद्धान्तकौमुदी, कारकप्रकरणम्, अर्थप्रकाशिकाटीका-पुस्तकालय, जयपुर, 2010

4. भट्टोजिदीक्षितः, प्रौढमनोरमा, कारकादव्ययीभावान्तो भागः, चौखमीासंस्कृतसंस्थानम्, वाराणसी, 2003

5. भट्टोजिदीक्षितः, प्रौढमनोरमा, कारकादव्ययीभावान्तो भागः, व्याख्याता-डॉ. रमाकान्त-पाण्डेयः, चौखम्भाविद्याभवनं वाराणसी, 2007

6. भर्तृहरिः, वाक्यपदीयम्, तृतीयकाण्डे द्वितीयो भागः प्रकाशाम्बाकर्तृटीकायुतः, सम्पादकः-पण्डितरघुनाथशर्मा, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी, 1997

✦✦✦

# महाभारतेऽपत्यार्थकतद्धितप्रत्ययानुशीलनम्

- **अनिलकुमार आर्यः**
शोधच्छात्रः, जे.एन.यू., नवदेहली

**प्रस्तुते निबन्धे अनुसन्धात्रा महाभारते प्रयुक्ताऽपत्यार्थकतद्धितप्रत्ययान्ताः शब्दाः दृक्गोचरीकृताः विद्यन्ते।**

**कूटशब्दाः-**

व्याकरणम्, पाणिनिः, महाभाष्यम्, भर्तृहरिः, तद्धितः, प्रत्ययः, अपत्यम्, गोत्रापत्यम्, युवापत्यम्, अनुशीलनम्, महाभारतम्।

**शोधसारः**

विश्वेऽस्मिन् पाणिनीयव्याकरणं सुप्रसिद्धमेव। व्याकरणस्य सर्वशास्त्रोपकारकत्वं विदितमेव। अतो विदुषां मध्ये इयमुक्तिः प्रसिद्धैव-"काणादं पाणिनीयञ्च सर्वशास्त्रोपकारकम्"। पाणिनीयतन्त्रे तद्धितान्तप्रयोगस्याऽतीव भाषिकमाहात्म्यमैतिहासिकमाहात्म्यञ्चास्ति। यथा-'प्रियतद्धिता दाक्षिणात्याः।' प्राचीनकाले तद्धितान्तशब्दानां बहुप्रयोग आसीत्, किन्त्विदानीं तद्धितप्रयोगा दिनानुदिनं क्षीयन्ते। एतां दुर्दशां दृष्ट्वा व्याकुलाः प्रयोगमर्मज्ञा दुःखेन वदन्ति- "गतास्तद्धितान्ता मृताः प्रक्रियाजा हताः सन्धिबन्धा लुङश्च प्रयोगाः। इदानीन्तनानां जनानां प्रवृत्तिः कृदन्ते सुबन्ते कदाचित्तिङन्ते"।।

महाभारतमेकमैतिहासिकं सर्वविशालञ्च काव्यम्, अस्मिन्नाख्यानोपाख्यानैस्सह शतसहस्त्रं श्लोकास्सन्ति। बहुविधस्थलेऽपत्यार्थकप्रत्ययान्तशब्दानां प्रयोगो विहितोऽस्मिन् श्रीवेदव्यास-महर्षिणा। अपत्यार्थकगोत्राऽपत्यार्थक-युवाऽपत्यार्थकप्रत्ययान्तशब्दास्सम्मिलन्ति। तेषामर्थ-वैशिष्ट्यपुरस्सरं विवेचनमिह विधास्यते।

प्राचीनकालयेवमासीत् यत् पितुर्नाम्ना सहैवैकस्य प्रत्ययस्य योजनेन बालकस्य नाम भवति स्म। विश्वस्य सर्वासु भाषासु एतादृशं सामर्थ्यं नास्ति, यादृशं सामर्थ्यं संस्कृतभाषाया-मस्ति, यदेकस्य प्रत्ययस्य योजनेन पितुर्नाम स्मरणमपि भवेत्, सहैव लाघवमपि भवेत्। अद्यत्वेऽपि महाराष्ट्र-गुजरात-दक्षिणभारते पुत्रस्य नाम्ना सहैव पितुर्नाम्नस्स्मरणमपि भवति। अतोऽस्मिन् शोधपत्रेऽपत्यप्रकरणन्तर्गतानि महाभारतीयान्युदाहरणानि प्रदर्श्य पाणिनिविरचिताया-मष्टाध्यायां कृतो विमर्शः प्रदर्श्यते।

## शोधपत्रम्

विश्वस्य सनातनं सर्वप्राचीनं सर्वविधकल्याणसाधकञ्च साहित्यं मन्त्रब्राह्मणात्मको वेद एव। तत एव सर्वा विद्याः सर्वाणि शास्त्राणि च समुद्भूतानि सन्ति, अत एव मन्त्र-ब्राह्मणात्मके वेदे शब्दशास्त्रनिमित्तस्य व्याकरणशब्दस्य चर्चा समुपलभ्यते[1]। इदं व्याकरणं वेदस्याऽङ्गतया प्रख्यातमस्ति, तथाहि गोपथब्राह्मणे '**षडङ्गविदस्तत्तथा धीमहे**'[2] इत्युक्त्या '**ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च**'[3] इति महाभाष्योक्त्या च वेदस्य षट्सङ्ख्याकान्यङ्गानि सन्तीति ज्ञायते, तानि च शिक्षा, कल्पः, निरुक्तम्, छन्दः, ज्योतिषम्, व्याकरणञ्च[4] प्रसिद्धान्येव[5]। तत्र व्याकरणं वेदपुरुषस्य मुखरूपेण स्वीकृतमस्ति-'**मुखं व्याकरणं स्मृतम्**'[6]।

अपरञ्चास्य व्याकरणस्याऽङ्गान्तरापेक्षया प्राधान्यमप्युक्तम्भगवता भाष्यकृता-'**प्रधानञ्च षट्स्वङ्गेषु व्याकरणम्। प्रधाने च कृतो यत्नः फलवान् भवती**'ति।[7] वाक्यपदीयकारेण भर्तृहरिणाऽपि व्याकरणं सर्वप्रथमं सर्वप्रधानञ्चाऽङ्गं स्वीकृतम्,[8] अन्यच्च यथा शरीरस्य रक्षार्थमङ्गानां महत्यावश्यकताऽस्ति, तथैव वेदानां स्वरूपस्य तदर्थस्य चाऽवगमाय शिक्षाद्यङ्गाना-मस्ति महत्प्रयोजनम्, किं पुनस्तत्र मुखस्थानीयस्य व्याकरणस्य।

---

1. मन्त्रब्राह्मणात्मके वेदे शब्दशास्त्रं निमित्तं व्याकरणशब्दः प्रयुक्तो दृश्यते। यथा-"**दृष्ट्वा रूपे व्याकरोत्, सत्यानृते प्रजापतिः। अश्रद्धामनुते दधाच्छ्रद्धां सत्ये प्रजापतिः**"।। यजुर्वेदः, 19.77
   इन्द्रेण वाग् व्याक्रियत इति प्रख्यातम्-"**वाग्वै पराच्यव्याकृतावदत् ते देवा इन्द्रमबु-वन्निमां वाचं नो व्याकुर्व्विति तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्तस्मादियं व्याकृता वागुद्यते**"।। तैत्तिरीयसंहिता, 6.4.7
   गोपथब्राह्मणे ओङ्कारस्वरूपकथनावसरे व्याकरणशब्दो दृष्टिगोचरो भवति-"**ओङ्कारं पृच्छामः। को धातुः, किं प्रातिपदिकम्, किं नामाख्यातम्, किं लिङ्गम्, किं वचनम्, का विभक्तिः, कः प्रत्ययः, कः स्वर उपसर्गो निपातः, किं वै व्याकरणम्, किं स्थाननादानुप्रदानानुकरणम्**"।। गोपथब्राह्मणम्, पूर्वगोपथ, 1.1.24
   "**आख्यातोपसर्गानुदात्त-स्वरित-लिङ्ग-विभक्ति-वचनानि च संस्थानाध्यायिन आचार्याः पूर्वे बभूवुः**"।। तत्रैव, 1.1.27
2. गोपथब्राह्मणम्, पूर्वगोपथ, 1.27
3. महाभाष्यम्, पस्पशाह्निकम्, पृ. 6
4. वि+आङ्+कृ+ल्युट-'**करणाधिकरणयोश्च**', पा.अ., 3.3.117
5. '**शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसां चयः। ज्योतिषामयनं चैव वेदाङ्गानि षडेव तु**'।। संस्कृतनिबन्धशतकम्, पृ.5
6. पाणिनीयशिक्षा, का.42
7. महाभाष्यम्, पस्पशाह्निकम्, पृ.6
8. '**प्रथमं छन्दसामङ्गं प्राहुर्व्याकरणं बुधाः**'।। वाक्यपदीयम्, 1.110

तत्र व्याक्रियन्तेऽसाधुशब्देभ्यः साधुशब्दाः पृथक्क्रियन्ते (पृथक्कृत्य ज्ञायन्ते) येन तद् व्याकरणमिति। यथा–'गावी' 'गोणी' 'गोता' इत्यादिभ्योऽसाधुशब्देभ्यो 'गो' इति साधुशब्दस्य पृथक्कृत्य बोधनं व्याकरणशास्त्राऽधीनम्, पृथक्कृतिश्च 'गच्छतीति गौः', **'गमेर्डो'**[1] प्रत्ययः कर्तर्यौणादिक इत्येवं प्रकृतिप्रत्ययविश्लेषणपूर्विका।

एवं प्रकारेण साधुशब्दबोधकशास्त्रत्वं शब्दगतसाधुत्वबोधकशास्त्रत्वं वा व्याकरणस्य लक्षणं पर्यवसितम्। **'लक्ष्यलक्षणे व्याकरणमि'**ति[2] निर्दिश्य भाष्यकृताऽपि लक्ष्यगतासाधु-त्वलक्षकशास्त्रं व्याकरणमिति प्रत्यायते, येन च पूर्वोक्तं लक्षणं साधु समर्थ्यते। **'साधुत्वज्ञान-विषया सैषा व्याकरणस्मृतिः'**[3] इत्युक्त्या वाक्यपदीयकृताऽप्युक्ते तल्लक्षणे साधुसम्मतिः प्रदत्ता।

व्याकरणं नामैका विद्येति श्रूयते, अपराविद्याया गणनायां व्याकरणाऽभिधानं श्रावयति मुण्डकोपनिषद्।[4] भगवान् पतञ्जलिरपि महाभाष्ये **'व्याकरणं नामेयमुत्तरा विद्येति'**[5] इत्याह। भर्तृहरिरपि **'पवित्रं सर्वविद्यानामधिविद्यं प्रकाश्यते'**[6] इति महिमानं बभाण। हरिवृषभस्तु स्वोपज्ञवृत्तौ त्वितोऽप्यधिकं व्याहरन् सर्वविद्याभ्यो पवित्रस्य व्याकरणस्य पवित्रत्वमुक्तवान्–

> **"आपः पवित्रं परमं पृथिव्यामपां पवित्रं परमञ्च मन्त्राः।**
> **तेषां च सामर्ग्यजुषां पवित्रं महर्षयो व्याकरणं निराहुः"॥**[7]

चतुर्दशशास्त्रेष्वपि व्याकरणाऽभिधानं प्राप्यते[8] अत एव **"काणादं पाणिनीयञ्च सर्वशास्त्रोपकारकम्"** इत्युक्तिर्लोके प्रसिद्धा। व्याकरणस्य मुख्यः सम्बन्धः पदैरेव, न तु वाक्यैर्न वा वर्णैः, अतो व्याकरणं **'पदशास्त्र'**मुच्यते। अत एव **'पदवाक्यप्रमाणज्ञ'** इत्यत्र **'पदमि'**ति पदेन **'व्याकरणं'** बोध्यते।

---

1. उणादिकोषः, 2.68
2. महाभाष्यम्, परस्पशाह्निकम्, पृ. 43
3. वाक्यपदीयम्, 1.132
4. **"तस्मै स होवाच, द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति, परा चैवापरा च। तत्रापरा, ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति। अथ परा, यया तदक्षरमधिगम्यते"**॥ मुण्डकोपनिषद्, 1.1.4.5
5. महाभाष्यम्, 1.3.32
6. **"तद्द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम्। पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते"**॥ वाक्यपदीयम्, 1.14
7. वाक्यपदीयस्य स्वोपज्ञवृत्तौ, 1.14
8. **"पुराण-तर्क-मीमांसा धर्मशास्त्राङ्गमिश्रिताः। वेदाः स्थानानि धर्मस्य च चतुर्दश"**॥ याज्ञवल्क्यस्मृतिः, 1.3

अद्यत्वे प्रचलितसुप्रसिद्धो व्याकरणग्रन्थः पाणिनिप्रणीतोऽष्टाध्यायीनामकः। पाणिनेर्व्याकरणशास्त्रात् प्रागपि सप्तवैयाकरणानां व्याकरणशास्त्राण्यासन्[1], परन्तु तेषां ग्रन्था अद्यत्वे नोपलभ्यन्ते। अद्यत्वे तूपलब्धं व्याकरणशास्त्रं पाणिनिप्रणीतमष्टाध्यायीनामकम्।[2]

पाणिनीयदृष्ट्या विमर्शे कृते सति विज्ञायते यदष्टाध्याय्या भागत्रयम्, तत्र प्रथम-द्वितीयाऽध्यायात्मके प्रथमभागे वाक्यैः पदसङ्कलनम्, तृतीयचतुर्थपञ्चमाऽध्यायात्मके द्वितीयभागे पदानां प्रकृतिप्रत्ययात्मकं विश्लेषणम्, तृतीये च भागे षष्ठसप्तमाऽष्टमाऽध्यायात्मके आगमादेशविधानाऽनन्तरं विश्लिष्टप्रकृतिप्रत्यययोगात्पदनिर्माणम्। त्रिपादैच्छिकी।

वरदराजाऽऽचार्येण कृदादिपञ्चवृत्तिष्वेका वृत्तिः तद्धितवृत्तिरस्तीति निर्दिष्टम्।[3] एकार्थीभावरूपविशिष्टार्थस्याऽभिधानं यया क्रियते तन्नाम वृत्तिः। सम्प्रति तद्धितप्रत्ययविधान-दृष्ट्याऽष्टस्वध्यायेषु सङ्गतिविचारः क्रियते। भगवता सूत्रकारेण तृतीयेऽध्याये धातुभ्यो नामानि प्रदर्श्य चतुर्थपञ्चमाऽध्याययोर्नामतो नाम्नामुत्पत्तिप्रकारः प्रत्यययोगेन प्रदर्शितः।

**'ङ्याप्प्रतिपदिकाद्'**[4] इति सूत्रमुल्लिख्य प्रकृतिस्वरूपं विज्ञाप्य सुबन्तात्तद्धितोत्पत्तिरिति सिद्धान्ताऽनुसारेण स्वौजसादिस्वादिप्रत्ययाऽनुशासनात्परं तद्धितप्रत्ययानामनुशासनमेव न्याय्यम्। तद्धितप्रत्ययाऽनुशासनात्प्राक् स्त्रीप्रत्ययाऽनुशासनस्य क्रमः सिद्धान्तमिमं स्मारयति- **"ङ्याबन्तात्तद्धितोत्पत्तिर्यथा स्यान्ङ्याब्भ्यां प्राङ्मा भूदिति"**[5]। यदि स्त्रीप्रत्ययस्तद्धित-प्रत्ययश्च युगपत्प्राप्नुतस्तर्हि स्त्रीप्रत्ययाऽनन्तरमेव तद्धितप्रत्ययो भवतीति ज्ञापनार्थमपि स्त्रीप्रत्ययाः पूर्वं प्रकल्पिताः। अथ किं तद्धित[6]लक्षणमित्युच्यते? चेत् **'तद्धिताः'**[7] इत्यधिकारेऽष्टाध्याय्यां विहिताः प्रत्ययास्तद्धिता इति बोध्यम्। अयमधिकारो **'यूनस्तिः'**[8]

---

1. **"इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः। पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादि-शाब्दिकाः"**।। (वोपदेवः) उद्धृतम्-संस्कृत व्याकरण शास्त्र का इतिहास, पृ.29
2. **"चतुःसाहस्त्री सूत्राणां पञ्चसूत्रविवर्जिता। अष्टाध्यायी पाणिनीया सूत्रैर्माहेश्वरैः सह"**।। स्वरसिद्धान्तचन्द्रिका, का. 15
3. **"परार्थाभिधानं वृत्तिः। कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्चवृत्तयः"**। लघुसिद्धान्तकौमुदी, पृ. 778
4. पा.अ., 4.1.1
5. पा.अ., 4.1.76
6. तद्धितशब्दः समस्तपदं विद्यते-तेभ्यो हिताः तद्धिताः (चतुर्थीतत्पुरुषसमासः)। तदिति पदस्यार्थो वैदिकलौकिकशब्दौ। अतः 'तेभ्यो लौकिकेभ्यो वैदिकेभ्यः शब्देभ्यो हिताः तद्धिता' इत्यर्थः फलति-। **'तस्मै हितम्'** (पा.अ. 5.1.5) इति पाणिनिनिर्देशात्।
7. **'ङ्याप्प्रातिपदिकादि'**ति सूत्रे **"प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्"** इत्येव सिद्धे ङ्याब्ग्रहणं ङ्याबन्तात्तद्धितोत्पत्तिर्यथा स्यान्ङ्याब्भ्यां प्राङ् मा भूदित्येवमर्थम्। वैयाकरणसिद्धान्तकौमुदी, पृ. 179-180
8. पा.अ., 4.1.77

इत्यारभ्य '**निष्प्रवाणिश्च**'[1] सूत्रपर्यन्तमस्ति तथैव व्याख्यानात् स्वरितत्वप्रतिज्ञानाच्च। तेन युवतिरित्यत्र 'ति'रूपस्त्रीप्रत्ययः सिद्धान्तकौमुद्यास्तद्धितप्रकरणे तादृशवैदिकप्रक्रियायां विहिताः ष्यङ्-अण्-फञ्-फगादयः प्राग्दिशो विभक्तिरिति विभक्तिसञ्ज्ञकाः सर्वे टजादयः समासान्ताः प्रत्ययाश्च '**तद्धिता**' इति फलति। आपञ्चमाध्यायं तद्धितप्रकरणं विद्यते।

प्रकरणस्यैतस्य मुख्यतो विभागद्वयं **स्वार्थिकोऽस्वार्थिकप्रत्ययश्च।** मुख्यत्वाद-स्वार्थिकप्रत्ययाः पूर्वमुपन्यस्ताः, एतदर्थमाचार्यपाणिनिरस्वार्थिकेषु प्रत्ययविधिमाश्रित्याऽर्थोपदेशं कृतवान्। तद्धितप्रकरणे प्रत्ययावधिर्निश्चितोऽस्ति। अत्राऽर्थक्रम ऐच्छिको विद्यते। तद्धितान्त-प्रयोगस्याऽतीव भाषिकमाहात्म्यमैतिहासिकमाहात्म्यञ्चास्ति। यथा-'**प्रियतद्धिता दाक्षिणा-त्याः**'।[2] प्राचीनकाले तद्धितान्तशब्दानां बहुप्रयोग आसीत्, किन्त्विदानीं तद्धितप्रयोगा दिनानुदिनं क्षीयन्ते। एतां दुर्दशां दृष्ट्वा व्याकुलाः प्रयोगमर्मज्ञा दुःखेन वदन्ति-

> **"गतास्तद्धितान्ता मृताः प्रक्रियाजा**
> **हताः सन्धिबन्धा लुङ्श्च प्रयोगाः।**
> **इदानीन्तनानां जनानां प्रवृत्तिः**
> **कृदन्ते सुबन्ते कदाचित्तिङन्ते"।।**[3]

नानार्थेषु विधीयमानतद्धितप्रत्ययानाम्मध्ये सम्प्रत्यपत्यार्थकतद्धितप्रत्ययो विचार्यते- भगवता सूत्रकारेण तद्धितप्रकरणे सर्वप्रथमं साधारणप्रत्ययान् निरूप्य तदन्वपत्यप्रत्ययानां निरूपणं व्यधायि। इदानीमपत्यशब्दो विचार्यते-न पतन्ति नरके पितरो येन तदपत्यमिति '**पङ्क्तिविंशति०**'[4] इति सूत्रभाष्ये व्युत्पादित्वात् तथा च पौत्रादयोऽपि पितामहादीनां नरकादुद्धरतीति तेषामप्यपत्यत्वमस्त्येवेति '**एको गोत्रे**'[5] इति सूत्रभाष्ये स्पष्टम्। यद्यपि कोशकारैः साक्षात्पुत्रस्याऽपत्यसञ्ज्ञा प्रोक्ता[6], किन्तु सूत्रभाष्यादिविरुद्धत्वादुपेक्ष्या एव। अतोऽपत्याऽन्तर्गते गोत्राऽपत्यं युवाऽपत्यं द्वावप्यागच्छतः, तत्राऽपत्यत्वेन विवक्षितं पौत्रादीनां गोत्रसञ्ज्ञा[7] तथा वंश्ये पित्रादौ जीवति पौत्रादेर्यदपत्यं चतुर्थादि[8], अन्यच्च ज्येष्ठे भ्रातरि

---

1. पा.अ., 5.4.160
2. महाभाष्यम्, पस्पशाह्निकम्, पृ.30
3. कालिदासीया तद्धितान्तरमणीयता, पृ.54
4. पा.अ., 51.59
5. पा.अ., 4.1.93
6. '**सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ**'।। अमरकोषः, 2. ब्रह्मवर्गः 1, "**आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी**"। "**आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे**"।। अमरकोषः, 2. मनुष्यवर्गः 27-28
7. '**अपत्यं पौत्रप्रभृति गोत्रम्**'। पा.अ., 4.1.161
8. '**जीवति तु वंश्ये युवा**'। पा.अ., 4.1.163

जीवति कनीयांश्चतुर्थादिर्युवसञ्ज्ञश्च[1] भवति। गोत्रेक एव प्रत्ययो भवति '**एको गोत्रे**'[2] इति सूत्रनिर्देशादन्यथा फगिञो: परम्परायां मूलाच्छततमे गोत्रे एकोनशतं प्रत्यया भविष्यन्ति, तेनाऽनिष्टोत्पत्तिः प्रसज्येत्।

सूत्रकारेणाऽपत्यार्थे ण्य-अण्-अञ्-नञ्-स्नञ्-इञ्-ढक्-ऐरक्-ढक्-आरक्-छण्-ढञ्-यत्-घ-ख-ढकञ्-खञ्-ठक्-ण-छ-फिञ्-फिन्-ञ्यङ्प्रभृतयः प्रत्यया उपदिष्टाः। गोत्राऽपत्ये ष्यङ्-फञ्-फक्-अञ्-यञ्प्रभृतयः, अथ च युवाऽपत्ये फक्-फिञ्प्रभृतयः प्रत्यया विविधेभ्यः प्रातिपदिकेभ्य उपदिष्टाः।

महाभारतगतस्याऽऽदिपर्वणः प्रथमद्वितीयाऽध्यायौ, भीष्मपर्वण आदितः षड्विंशतिरध्यायाश्च, एतेषामपत्यार्थकतद्धितान्तप्रत्ययानां केचन विशिष्टप्रयोगास्सूत्रपुरस्सरमत्र प्रदर्श्यन्ते-

**नामवाचिशब्दतः-**

'**तस्यापत्यम्**' (अष्टा. 4.1.93) इत्यपत्यार्थे 'अण्'प्रत्ययेन निष्पन्नाः शब्दाः-

**पाण्डवः**- पाण्डोरपत्यं पुमान् (युधिष्ठिरादयः) – महाभारतम्, 1.2.13

**शान्तनवः**- शान्तनोरपत्यं पुमान् (भीष्मः) – म.भा., 1.1.178

**मानवः**- मनोरपत्यं मानवः – म.भा., 6.11.17

**वैवस्वतः**- विवस्वतोऽपत्यं पुमान् (मनुः) – म.भा., 6.12.1

**यादवः**- यदोरपत्यानि गोत्रापत्यानि वा (यदुवंशी) – म.भा., 6.19.41

**माधवः**- मधोरपत्यानि गोत्रापत्यानि वा (कृष्णः) – म.भा., 1.1.173

**माधवी**- मधोरपत्यं गोत्रापत्यं वा स्त्री (सुभद्रा) ('**टिढाणञ०**' (अष्टा.4.1.15) इति 'ङीप्') – म.भा., 1.1.151

**जाह्नवी**- जह्नोरपत्यं स्त्री (गङ्गा) – म.भा., 6.18.31

'**अत इञ्**' (अष्टा. 4.1.95) इति सूत्रेणापत्यार्थे 'इञ्' प्रत्ययेन निष्पन्नाः शब्दाः-

**द्रोणिः**- द्रोणस्यापत्यं पुमान् (अश्वत्थामा) – म.भा., 1.2.32

**सौमदत्तिः**- सोमदत्तस्यापत्यं पुमान् (भूरिश्रवा) – म.भा., 6.9.8

**गावल्गणिः**- गवल्गणस्यापत्यं पुमान् (सञ्जयः) – म.भा., 1.2.350

**लौमहर्षणिः**- लोमहर्षणस्यापत्यं (उग्रश्रवा) – म.भा., 1.1.5

**सौतिः**- सुतस्यापत्यं सौतिः (उग्रश्रवा) – म.भा., 1.1.7

'**ऋष्यन्धकवृष्णिकुरुभ्यश्च**' (अष्टा. 4.1.114) इति सूत्रेणापत्यार्थे, 'अण्' प्रत्ययेन निष्पन्नाः शब्दाः-

1. '**भ्रातरि च ज्यायसि**'। पा.अ., 4.1.164
2. पा.अ., 4.1.93

**धार्तराष्ट्रः**- धृतराष्ट्रस्यापत्यं पुमान् (दुर्योधनादयः) – म.भा., 1.1.116

**वासुदेवः**- वसुदेवस्यापत्यं पुमान् (कृष्णः) – म.भा., 1.1.130

**वैचित्रवीर्यः**- विचित्रवीर्यस्यापत्यं (धृतराष्ट्रादयः) – म.भा., 1.2.225

**पारिक्षितः**- परिक्षितस्यापत्यं (जनमेजयः) – म.भा., 1.2.91

**वंशवाचितः**-

'**उत्सादिभ्योऽञ्**' (अष्टा. 4.1.86) इति सूत्रेणाऽञ्प्रत्ययप्राग्दीव्यतीयार्थेषु-

**भारतः**- भरतस्यापत्यं गोत्रापत्यं वा (भरतवंशी) – म.भा., 6.9.24

'**अनृष्यानन्तर्ये०**' (अष्टा. 4.1.104) इति गोत्रापत्येऽञ् प्रत्ययः-

**पौत्रः**- पुत्रस्यापत्यं पौत्रः – म.भा., 1.2.347

'**ऋष्यन्धकवृष्णिकुरुभ्यश्च**' (अष्टा. 4.1.114) इत्यणप्रत्ययोऽपत्यार्थे-

**भारद्वाजः**- भरद्वाजस्य गोत्रापत्यं पुमान्(द्रोणः) – म.भा., 1.2.305

**भार्गवः**- भृगोरपत्यं गोत्रापत्यं वा (परशुरामः च्यवनश्च) – म.भा,. 1.2.170

**गौतमः**- गोतमस्यापत्यं गोत्रापत्यं वा(कृपाचार्यः) – म.भा., 1.2.32

**स्त्रीवाचिशब्दतः**-

'**स्त्रीभ्यो ढक्**' (अष्टा. 4.1.120) इति सूत्रेणापत्यार्थे 'ढक्' प्रत्ययः-

**वैनतेयः**- विनतायारपत्यं पुमान् (गरुडः) – म.भा., 6.18.30

**द्रौपदेयः**- द्रौपद्या अपत्यं पुमान् (द्रौपद्याः पञ्चपुत्राः) – म.भा., 6.9.6

'**द्व्यचः**' (अष्टा. 4.1.121) इति सूत्रेण अपत्यार्थे 'ढक्'-

**कौन्तेयः**- कुन्त्या अपत्यं पुमान् (कुन्त्याः त्रयः पुत्राः, विशेषरूपेणाऽर्जुनः) – म.भा., 6.9.27

'**शुभ्रादिभ्यश्च**' (अष्टा. 4.1.123) इति सूत्रेणापत्यार्थे 'ढक्'-

**गाङ्गेयः**- गङ्गाया अपत्यं पुमान् (भीष्मः) – म.भा., 1.1.94

'**इतश्चानिञः**' (अष्टा. 4.1.122) इति 'ढक्'-

**वार्ष्णेयः**- वृष्णेरपत्यानि गोत्रापत्यानि वा (कृष्णः, सात्यकीत्यादयः) – म.भा., 1.1.196

'**अवृद्धाभ्यो नदीमानुषीभ्य०**', (अष्टा. 4.1.113) इत्यण्-

**सौभद्रः**- सुभद्राया अपत्यं पुमान् (अभिमन्युः) – म.भा., 6.9.6

'**तस्यापत्यम्**' (अष्टा. 4.1.92) इति 'अण्' इति बाधयित्वा '**द्व्यचः**' (अष्टा. 4.1.

121) इति '**ढक्**', तं बाधयित्वा '**तस्येदम्**' (अष्टा. 4.3.120) इत्यण्-

**पार्थः**- पृथाया अयम् पुमान् (युधिष्ठिरादयः) – म.भा., 6.9.25

'**दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः**' (अष्टा. 4.1.85) इति अपत्यार्थे ण्यः-

**दैत्यः**- दितेरपत्यम् – म.भा., 6.18.30

**आदित्यः**- अदितेरपत्यम् – म.भा., 6.18.21

**जनपदवाचिशब्दतः**-

'**साल्वेयगान्धारिभ्यां च**' (अष्टा. 4.1.167) इति सूत्रेण गान्धारि+अञ्=गान्धारस्ततो '**शार्ङ्गरवा०**' (अष्टा. 4.1.73) इति '**ङीन्**'-

**गान्धरी**- गान्धारीणामपत्यं स्त्री (धृतराष्ट्रस्य स्त्री) – म.भा., 1.1.216

'**जनपदशब्दात्०**' (अष्टा. 4.1.166) इति सूत्रेणाऽञ्प्रत्ययः-

**सैन्धवः**- सिन्धोरपत्यं पुमान् (जयद्रथः) – म.भा., 1.1.198

'**कुर्वादिभ्यो ण्यः**' (अष्टा. 4.1.151) इति '**ण्यः**'-

**कौरव्यः**- कुरूणां राजाऽपत्यं वा – म.भा., 1.1.95

**क्षत्रियवाचिशब्दतः**-

'जनपदशब्दात्०' (अष्टा. 4.1.166) ततो '**शार्ङ्गरवा०**' (अष्टा. 4.1.73) इति ङीन्-

**पाञ्चाली**- पञ्चालानामपत्यं स्त्री (द्रौपदी) – म.भा., 1.2.44

'**वृद्धेत्कोसला०**' (अष्टा. 4.1.69) इति ञ्यङ्, '**स्त्रियामवन्ति०**' (अष्टा. 4.1.174) इति लुक्, '**इतो मनुष्यजातेः**' (अष्टा. 4.1.65) इति ङीष्-

**कुन्ती**- कुन्तेरपत्यं स्त्री – म.भा., 6.20.44

**क्षत्रियवाचिनः/जनपदवाचिनो लुक्**-

'**कुरुनादिभ्यो ण्यः**' (अष्टा. 4.1.151) इति '**ण्य**' प्रत्ययः (एकवचने)-

**कौरव्यः**- कुरूणां राजा अपत्यं वा – म.भा., 1.1.95

'**कुरुनादिभ्यो ण्यः**' (अष्टा. 4.1.151) इति '**ण्य**' प्रत्ययः, '**तद्राजस्य बहुषु तेनैवा-स्त्रियामि**'ति (अष्टा. 2.4.62) लुग् बहुवचने-

**कौरवः**- कुरूणां राजानोऽपत्यानि वा – म.भा., 1.2.29

**कुरुणाम्**- अत्रापि '**ण्य**' प्रत्ययस्य लुक् – म.भा., 1.1.13

'**जनपदशब्दात्०**' (अष्टा. 4.1.166) इति '**अञ्**' '**तद्राजस्य०**' (अष्टा. 2.4.62) इति लुक्-

**पञ्चालाः**- पञ्चालानां राजानोऽपत्यानि वा – म.भा., 1.2.294

**गोत्रापत्ये लुक्-**

'**उत्सादिभ्योऽञ्**' (अष्टा. 4.1.86) इति अञ्प्रत्ययप्राग्दीव्यतीयार्थेषु, '**यञञोश्च**' (अष्टा. 2.4.64) इति सूत्रेण गोत्रसञ्ज्ञकस्य बहुवचने लुक्-

**भरताः**- भरतस्यापत्यानि गोत्रापत्यानि वा – म.भा., 1.2.92

**अपत्ये जातौ-**

'**क्षत्राद् घः**' (अष्टा. 4.1.138) इति 'घ' प्रत्ययः, तस्य स्थाने '**आयने०**' (अष्टा. 7. 1.2) इति सूत्रेण 'इय्' आदेशः-

**क्षत्रियः**- क्षत्रस्यापत्यं क्षत्रियः – म.भा., 6.2.27

**अपत्ये न, अपितु जातौ-**

'**मनोर्जातावञ्यतौ षुक् च**' (अष्टा. 1.1.161) इति 'अञ्' अथ च 'यत्' प्रत्ययौ तथा च षुगागमः-

**मानुषः**- मनोरपत्यं जातौ – म.भा., 6.5.11

**मनुष्यः**- मनोरपत्यं जातौ – म.भा., 6.5.11

**अन्तरापत्ये गोत्रत्वारोपः-**

'**गर्गादिभ्यो यञ्**' (अष्टा. 4.1.105) इति गोत्रापत्ये 'यञ्', अत्र अन्तरापत्ये गोत्रत्वारोपः।

**जामदग्न्यः**- जमदग्नेरपत्यम् (परशुरामः) – म.भा., 1.2.168

**पाराशर्यः**- पराशरस्यापत्यम् (व्यासः) – म.भा., 1.2.270

एवं प्रकारेणात्र स्थालीपुलाकन्यायेनाऽपत्यप्रकरणान्तर्गतानि महाभारतीयान्युदाहरणानि प्रदर्श्य पाणिनिविरचितायामष्टाध्यायां कृतो विमर्शः प्रस्तुतः।

**निष्कर्षः-**

विश्वेऽस्मिन् पाणिनीयव्याकरणं सुप्रसिद्धमेव। व्याकरणस्य सर्वशास्त्रोपकारकत्वं विदितमेव। अतो विदुषां मध्ये इयमुक्तिः प्रसिद्धैव-"काणादं पाणिनीयञ्च सर्वशास्त्रोपकारकम्"। पाणिनीयतन्त्रे तद्धितान्तप्रयोगस्याऽतीव भाषिकमाहात्म्यमैतिहासिकमाहात्म्यञ्चास्ति। यथा- 'प्रियतद्धिता दाक्षिणात्याः'। प्राचीनकाले तद्धितान्तशब्दानां बहुप्रयोग आसीत्, किन्त्विदानीं तद्धितप्रयोगा दिनानुदिनं क्षीयन्ते। एतां दुर्दशां दृष्ट्वा व्याकुलाः प्रयोगमर्मज्ञा दुःखेन वदन्ति- "गीतास्तद्धितान्ता मृताः प्रक्रियाजा हताः सन्धिबन्धा लुङश्च प्रयोगाः। इदानीन्तनानां जनानां प्रवृत्तिः कृदन्ते सुबन्ते कदाचित्तिङन्ते"।।

महाभारतमेकमैतिहासिकं सर्वविशालञ्च काव्यम्, अस्मिन्नाख्यानोपाख्यानैस्सह शतसहस्त्रं श्लोकास्सन्ति। बहुविधस्थलेऽपत्यार्थकप्रत्ययान्तशब्दानां प्रयोगो विहितोऽस्मिन् श्रीवेदव्यास-महर्षिणा। अपत्यार्थक-गोत्राऽपत्यार्थक-युवाऽपत्यार्थकप्रत्ययान्तशब्दाः सम्मिलन्ति। तेषामर्थ-वैशिष्ट्यपुरस्सरं विवेचनमिह प्रस्तुतम्। अस्मिन् शोधपत्रे।

प्राचीनकालयेवमासीत् यत् पितुर्नाम्ना सहैवैकस्य प्रत्ययस्य योजनेन बालकस्य नाम भवति स्म। विश्वस्य सर्वासु भाषासु एतादृशं सामर्थ्यं नास्ति, यादृशं सामर्थ्यं संस्कृतभाषाया-मस्ति, यदेकस्य प्रत्ययस्य योजनेन पितुर्नाम स्मरणमपि भवेत्, सहैव लाघवमपि भवेत्। अद्यत्वेऽपि महाराष्ट्र-गुजरात-दक्षिणभारते पुत्रस्य नाम्ना सहैव पितुर्नाम्नः स्मरणमपि भवति। अतोऽस्मिन् शोधपत्रेऽपत्यप्रकरणान्तर्गतानि महाभारतीयान्युदाहरणानि प्रदर्श्य पाणिनि-विरचितायामष्टाध्यायां कृतो विमर्शो विहितः।

**सन्दर्भग्रन्थसूची-**

**प्राथमिकस्त्रोतांसि-**

**क) साक्षात्-स्त्रोतांसि-**

1. *अष्टाध्यायीसूत्रपाठः* (पाणिनिमुनिप्रणीतः), रामलाल कपूर ट्रस्ट, बहालगढ, सोनीपत, हरियाणा : 1988
2. *काशिका* (श्रीवामनजयादित्यविरचिता), सं. विजयपालो विद्यावारिधिः, रामलाल-कपूरट्रस्ट, बहालगढ़, सोनीपत, हरियाणा : सं.1; 1997
3. *काशिकावृत्तिः* (वामनजयादित्यौ) [चतुर्थपञ्चमषष्ठाध्यायात्मकद्वितीयभागः], व्या. पं. ईश्वरचन्द्रः, चौखम्बा संस्कृतप्रतिष्ठानम्, नवदेहली : 2010
4. *महाभारत* (श्रीमन्महर्षि वेदव्यासप्रणीत) (सम्पूर्ण, छः भागों में), अनु.-पण्डित रामनारायण शास्त्री पाण्डेय, गोविन्दभवन कार्यालय, गीताप्रेस, गोरखपुर : सं. 5; 2026-2044 वि.सं.
5. *व्याकरणमहाभाष्याम्* (महर्षिपतञ्जलिः, 'ज्योत्सना' समुद्भासितम्) (चतुर्थोऽध्यायः), टीकाकारः-डॉ. हरिनारायणतिवारी, चौखम्बा पब्लिशिंग हाऊस, नवदेहली : 2009
6. *वैयाकरणसिद्धान्तकौमुदी* (भट्टोजिदीक्षितः, बालबोधिनीतत्त्वबोधिनीसम्वलिता), सं.-गिरिधरशर्मा चतुर्वेदः परमेश्वरानन्दशर्मा च, मोतीलालबनारसीदास, नई दिल्ली : सं. 10; 2001
7. *व्याकरणमहाभाष्याम्* (भगवत्पतञ्जलिविरचितम्, नवाह्निकम्) अनु.-चारुदेव शास्त्री, मोतीलाल बनारसीदास, नवदेहली : सं. 8; 2012

**नो वा ततः किममरेशगुरोर्गुरूस्तु,**
**प्रीतोऽस्त्वेन पदपीठसमर्पणेन॥**[1]

इस प्रकार यह आकर ग्रन्थ है और न्याय के पण्डितों का परीक्षा निकष है। इसके ऊपर प्रकाश, मकरन्द आदि अनेक टीका-प्रटीका लिखी गयी है। श्री हरिदास भट्टाचार्य ने इसकी मूल कारिकाओं पर सरल व सुबोध व्याख्या लिखी है।

### ( 7 ) न्यायलीलावती

इस मौलिक ग्रन्थ रत्न की रचना श्री वल्लभाचार्य ने की है। न्यायलीलावती वैशेषिक दर्शन का एक ग्रन्थ है। वैशेषिक दर्शन में पदार्थनिरूपण पुस्तक में डॉ. शशिप्रभाकुमार का मत है कि यह प्रशस्तपादभाष्य की टीका न होकर एक स्वतन्त्र ग्रन्थ ही प्रतीत होता है, भले ही लीलावती नामक की प्रशस्तपादभाष्य की कोई व्याख्या रही होगी, परन्तु वह अनुपलब्ध है। यह ग्रन्थ चौखम्बा संस्कृत सीरीज से प्रकाशित हुआ है।[2] न्यायलीलावती चार परिच्छेदों में विभक्त है-1. विभागपरिच्छेद, 2. वैधर्म्यपरच्छिेद, 3. साधर्म्यपरिच्छेद तथा 4. प्रक्रियापरिच्छेद। ग्रन्थारम्भ के मंगलाचरण में आचार्य ने पुरूषोत्तम भगवान् अर्थात् विष्णु को नमस्कार किया है-

**नाथः सृजत्यवति यो जगदेकपुत्रः**
**प्रीत्या ततः परमनिर्वृत्तिमादधाति।**
**तस्मै नमः सहजदीर्घकृपानुबन्ध-**
**लब्धत्रितत्त्वतनवे पुरूषोत्तमाय॥1॥**[3]

आचार्य ने पदार्थों की संख्या छः मानी है, परन्तु अभाव को भाव-भिन्न सप्तम पदार्थ के रूप में स्वीकार किया है।[4] पूर्वपक्षी ने तम, शक्ति, ज्ञातता, वैशिष्ट्य, आधाराधेय भावसादृश्य इन छः तत्वों के पदार्थत्व होने की आशंकायें अभिव्यक्त की[5] तो उनका निवारण आचार्य ने इस प्रकार किया है-

तम—यदि नीलरूप तम है, ऐसी प्रतीति ही तमोविषयिणी है, तो रूप ही तम है, तम कोई पृथक् प्रमेय नहीं, यही सिद्ध होता है।

शक्ति—शक्ति भी अतिरिक्त पदार्थ नहीं मानी जा सकती, चूँकि उसके अतिरिक्त पदार्थत्व में कोई प्रमाण नहीं है।

---

1. वैशेषिकदर्शन में पदार्थ निरूपण, पृ.-14, 15
2. न्यायलीलावती, पृ.-1, 2
3. षडेव पदार्था.......अभावश्च वक्तव्यो निःश्रेयसोपयोगित्वाभावप्रपञ्चवत्। न्यायलीलावती पृ.-10-16
4. वही..... पृ.-18-28
5. वैशेषिकदर्शन में पदार्थनिरूपण, पृ.-30, 31

ज्ञातता–ज्ञातता भी सप्त पदार्थों के अतिरिक्त पदार्थ नहीं है, अतः उसे भी निराकृत ही जानना चाहिए।

वैशिष्ट्य–इसे पृथक् पदार्थ नहीं मान सकते, क्योंकि उसका न तो घटाभाव में और न ही भूतल में अनुभव होता है, अपितु वह ज्ञान स्वरूप ही है।

आधाराधेयभाव–इसे भी पदार्थ की श्रेणी में नहीं रखा जाता, क्योंकि गुरुत्व (गुण) का प्रतिबन्धक मान लेने पर ही निर्वाह हो जाता है।

सादृश्य–सामान्य में अन्तर्भू होने के कारण सादृश्य को पृथक् पदार्थ नहीं माना जा सकता है। इस प्रकार वल्लभाचार्य ने उक्त तत्वों के पदार्थान्तरत्व का निराकरण कर यही सिद्ध किया है कि पदार्थ (भाव) छः ही है।[1]

### (8) मानमनोहर

न्याय-वैशेषिक दर्शन के महत्वपूर्ण प्राचीनतम ग्रन्थों में वादिवागीश्वराचार्य कृत मानमनोहर का उल्लेखनीय स्थान है। मानमनोहर शब्द से ही अभिप्रेत है कि–**मानैः मनोहरः अथवा मनोहराणि यत्र अथवा मानेनपूर्ण मनो मानमनः तस्य हरो हर्त्ता दमयित्वा।**[2] इस अभिप्राय को आचार्य ने प्रतिवादिगर्वप्रशान्तये शब्द से अभिव्यक्त किया है। मानमनोहराचार्य ने सनातन परम्परा का पालन करते हुए चित्स्वरूपिणी शक्ति को नमस्कार किया है–

**नमस्तस्यै महाभूतबद्धान् अमृतसेवनात्।**
**मोचयत्यकुलस्थापि या शक्तिश्चित्स्वरूपिणी।।**[3]

नमस्कारात्मक मंगलाचरण के पश्चात् आचार्य ने स्वविषय तथा ग्रन्थ प्रणयन के विषय में लिखा है कि कथा (शास्त्र चर्चा) में गरजते हुए वादि गणों के गर्व को शान्त करने के लिए श्री वागीश्वराचार्य के पुत्र वादिवागीश्वर के द्वारा मानमनोहर नामक दुर्गम ग्रन्थ का प्रणयन किया जा रहा है। इस ग्रन्थ में 10 प्रकरण है जो निम्नलिखित है–

| | |
|---|---|
| सिद्धि प्रकरण | विशेष प्रकरण |
| द्रव्य प्रकरण | समवाय प्रकरण |
| गुण प्रकरण | अभाव प्रकरण |

---

1. मानमनोहर (भुवनेश्वरी) हिन्दीव्याख्या, (भूमिका) पृ.-8
2. वही.... पृ.-14
   नोट-मानमनोहरकार का समय बारहवीर शताब्दी तथा जन्मस्थान कर्णाटक प्रदेश माना गया है।
3. वही.... पृ.-21-24 (भूमिका)

कर्म प्रकरण पदार्थ निराकरण प्रकरण

सामान्य प्रकारण मोक्ष प्रकरण।[1]

वादिवागीश्वर ने अभाव को पृथक् पदार्थ स्वीकार कर लिया है किन्तु तम को पृथक् द्रव्य न मानकर अभावरूप ही सिद्ध किया है तथा निम्न छः के पदार्थान्तरत्व का निरास किया है – शक्ति, ज्ञातता, विशिष्टता, विषय, सादृश्य तथा प्रधान।

शक्ति–इसके सद्भाव में कोई प्रमाण न मिलने से शक्ति अतिरिक्त पदार्थ नहीं है।

ज्ञातता–कारण की सामग्री ही ज्ञान विषय की नियामक है, अतः ज्ञातता पदार्थ नहीं है।

विशिष्टता–ज्ञान जनक सामग्री की विचित्रता से ही विषयगत विशिष्टादि की उपपत्ति हो जाती है, इससे विशिष्टता पदार्थत्व का निराकरण हो जाता है।

विषय–विषयी–उसके नियामक कार्यकलाप से ही ज्ञान और अर्थ का नियम बन जाने से विषय–विषयी कोई पृथक् पदार्थ नहीं है।

सादृश्य–सादृश्य को अतिरिक्त पदार्थ इसलिए नहीं मानते क्योंकि उसमें कोई प्रमाण नहीं है।

प्रधान–यह पदार्थ सांख्यसम्मत है इसका कोई साधक प्रमाण उपलब्ध न होने से निराकरण जो जाता है।[2]

निष्कर्षतः स्पष्ट है कि मानमनोहर वैशेषिक दर्शन का एक अमूल्य ग्रन्थ रत्न है, जिसमें न्याय दर्शन की परम्परा का भी निर्वाह उचित रूप से मिलता है साथ ही अन्य दर्शनों के मत–मतान्तरों का तार्किक शैली में वर्णन प्राप्त होता है। आचार्य ने पदार्थ की परिभाषा न देकर वैशेषिक सम्मत छः भाव पदार्थ तथा अभाव पदार्थ को वर्णित कर बुद्धि गुण के अन्तर्गत प्रमाण मीमांसा को विस्तार पूर्वक समझाने का प्रयास किया है। अन्ततः प्रत्यक्ष तथा अनुमान प्रमाण को ही मान्यता प्रदान की है। तम द्रव्य की असिद्धि शक्ति आदि का निरास तथा मोक्ष प्रकरण की विवेचना ग्रन्थ में दार्शनिक मीमांसा को पूर्ण कर रही है।

### (9) भाषापरिच्छेद

इसके प्रणेता विश्वनाथन्यायपञ्चानन है। ग्रन्थ में 168 कारिकायें है, जिसमें वैशेषिकदर्शन के सिद्धान्तों का सुचारू रूप से वर्णन किया गया है। भाषा परिच्छेद पर आचार्य ने अपने प्रिय शिष्य राजीव के उपकारार्थ न्यायसिद्धान्तमुक्तावली टीका लिखी है। इसमें म.कणाद प्रतिपादित सिद्धान्तों का विवेचन मिलता है।[3]

---

1. वैशेषिक दर्शन में पदार्थ निरूपण–पृ.–31, 32
2. भारतीयदर्शन, पृ.–222
3. वैशेषिकसूत्रोपस्कार, पृ.–13

### ( 10 ) तर्ककौमुदी

इसके प्रणेता लौगाक्षिभास्कर है। इनका स्थितिकाल 17वीं शताब्दी का है। यह ग्रन्थ लघुकलेवर से युक्त न्याय वैशेषिक दर्शन से सम्बन्ध रखता है। न्यायसिद्धान्तों के प्रतिपादन और शैली में यह नव्य न्याय का अनुसरण करता है। वैशेषिक सिद्धान्तों के प्रतिपादन में प्रशस्तपाद भाष्य का अनुसरण करता है।

### ( 11 ) वैशेषिकसूत्रोपस्कार

विद्वच्चूडामणिश्रीशंकरमिश्रविरचित यह ग्रन्थ वैशेषिक सूत्रों की व्याख्या प्रस्तुत करता है। इनका जन्म 14वीं शताब्दी या कुछ वर्ष पश्चात् माना गया है।[1] इनका जन्म स्थान सरिसव ग्राम है जो बिहार के दरभंगा जिले में स्थित है। इनके निवास स्थान के समीप एक पोखरा है, जिसे 'चमाइनपोखरा' कहते है।[2]

शंकर मिश्र ने सभी शास्त्रों का अध्ययन अपने पिता पं. भवनाथ मिश्र से ही किया था। यह सभी शास्त्रों पर समान अधिकार रखते थे परन्तु न्याय-वैशेषिक दर्शन का पाण्डित्य प्रदर्शन इनकी अप्रतिहत प्रतिभा का मूर्तस्वरूप है। इसीलिए श्री मिश्र के व्याख्या ग्रन्थों के अतिरिक्त न्याय वैशेषिक शास्त्र पर इनके स्वतन्त्र ग्रन्थ भी है, जिनमें भेदरत्न प्रमुख हैं।[3] जिसका सरस्वती भवन, वाराणसी से 1933 ई. में हुआ। श्री शंकर मिश्र के दर्शन व काव्य से सम्बन्धित 15 ग्रन्थ प्राप्त होते है।[4]

वैशेषिकसूत्रोपस्कार वैशेषिक सूत्रों पर लिखा गया एक टीका ग्रन्थ हैं उन्होंने स्वयं लिखा है कि-"मैं सम्पूर्ण प्राचीन तथा नवीन नैयायिकों के मतों का संग्रह करने वाली उपस्कार नामक व्याख्या कर रहा हूँ। सयोगादभाव:कर्मण:।[5]" **उपस्कार टीका - मूर्त्तसंयोगेनकर्मकारणस्यवेगगुरुत्वादेः प्रतिबन्धात कर्मणोऽभावोऽनुत्पादो न त्वा-काशाभावात् तस्य व्यापकत्वात्। तस्मादाकाशान्वयोऽन्यथासिद्ध एव नाकाशनिमित्ततां साधयतीत्यर्थ।**[6]

इस प्रकार आचार्य का पाण्डित्य उपस्कार में पद-पद पर समुपलब्ध है और विशेष रूप में मंगलवाद, मुक्तिवाद, संशयनिरूपण, व्याप्तिवाद, पाकप्रक्रिया, द्वित्वप्रक्रिया तथा बहुसंख्या स्वरूप का विवेचन द्रष्टव्य है।[7] कलकत्ता से प्रकाशित 'परिष्कार' इसकी

---

1. वही..... पृ.-10
2. वही..... पृ.-11
3. वही.... पृ.-14, 15
4. वैशेषिकसूत्रोपस्कार, पृ.-3 (भूमिका)
5. वैशेषिकसूत्र-2/1/23
6. वैशेषिकसूत्रोपस्कार, पृ.-147
7. वही.... पृ.-16

टीका है जो म.म. पञ्चाननतर्करत्न ने लिखी है।[1]

**( 12 ) तर्कसंग्रह**

अन्नंभट्ट की अत्यन्त लोकप्रिय रचना तर्कसंग्रह है तो प्रारम्भिक स्तर पर न्याय-वैशेषिक दर्शन की मूल अवधारणाओं से परिचय कराती है। ग्रन्थकार ने स्वयं लिखा है-

**निधाय हृदि विश्वेशं विधाय गुरुवन्दनम्।**
**बालानां सुखबोधाय क्रियते तर्कसंग्रहः॥[2]**

**तर्कयन्ते प्रतिपाद्यन्ते इति तर्काः द्रव्यादिसप्तपदार्थाः, तेषा तर्काणां संग्रहः इति तर्कसंग्रहः।** इस व्युत्पत्ति के अनुसार वैशेषिक दर्शनाभिमत द्रव्य, गुण, कर्म, सामान्य, विशेष, समवाय और अभाव नामक सप्त पदार्थ तर्क है, समग्र विश्व में मूल रूप से ये पदार्थ सात ही है, जिनके अन्दर संसार की समस्त वस्तुएँ समाहित है। **तर्क्यन्तेऽनेनेति तर्कः प्रमाणम्** अर्थात् जिसके द्वारा प्रमेयों का ज्ञान प्राप्त किया जाता है, वह तर्क है। प्रमाणों से प्रमेयों की सिद्धि होने के कारण प्रमाण को तर्क माना जा सकता है। इस व्युत्पत्ति के अनुसार न्यायाभिमत प्रत्यक्ष-अनुमान-उपमान तथा शब्द इन चार प्रमाणों का विवेचन है।[3]

तर्कसंग्रह के अन्त में उल्लेख है कि – **सर्वेषां पदार्थानां यथायथमुक्तेष्वन्त-र्भावात् सप्तैव पदार्था इति सिद्धम्।**

**काणादन्यायमतयोर्बालव्युत्पत्तिसिद्धये।**
**अन्नम्भट्टेन विदुषा रचितस्तर्कसंग्रह॥[4]**

अतः स्पष्ट है कि संसार के समस्त पदार्थ पूर्वकथित सात पदार्थों में ही यथासम्भाव अन्तर्भूत हो जाते है, अतः पदार्थ सात ही है, इनसे अतिरिक्त कोई अन्य पदार्थ नहीं है। इन्हीं पदार्थों के सम्यक् ज्ञान से मनुष्य को अभ्युदय एवं निःश्रेयस् की प्राप्ति होती है, जिससे आत्यान्तिक दुःख की निवृत्ति होती है।

अन्नभट्ट ने तर्कसंग्रह के ऊपर 'तर्कसंग्रहदीपिका' नामक टीका लिखी है जो न्याय-वैशेषिक दर्शन का अग्रिम सोपान है। इसमें परमाणुवाद सृष्टिप्रक्रिया, पाकप्रक्रिया प्रभृति प्रायः न्याय वैशेषिक सम्मत सिद्धान्तों का प्रतिपादन किया गया है। इसमें मीमांसक बौद्ध, चार्वाक, वेदान्त से लेकर पूर्वपक्ष का भी तार्किक रीति से खण्डन किया है।

---

1. वही.... पृ.-17
2. तर्कसंग्रह (मंगलश्लोक), पृ.-1
3. तर्कसंग्रह (तन्वीव्याख्या) पृ.-21 (भूमिका)
4. वही... पृ.-132

तर्कसंग्रह पर लगभग 30 टीकाएँ संस्कृत, हिन्दी तथा अंग्रेजी में उपलब्ध होती हैं।[1]

### ( 13 ) पदार्थमण्डनम्

वेणीदत्त कृत पदार्थमण्डनम् वैशेषिक दर्शन का एक प्रामाणिक ग्रन्थ है। इस ग्रन्थ का प्रकाशन प. गोपालशास्त्री नेने ने किया था। जो 1930 ई. में बनारस से प्रकाशित हुआ है। वेणीदत्त 18वीं सदी में गुजरात प्रान्त में वीरेश्वर के घर उत्पन्न हुये थे। पदार्थमण्डनम् के अतिरिक्त इनके 12 ग्रन्थ रत्न है। श्री वेणीदत्त ने पदार्थतत्वनिरूपण में खण्डित पदार्थों का पुनः मण्डन किया है। इसलिए इस ग्रन्थ का नाम पदार्थ मण्डनम् पड़ा है।

पदार्थमण्डनकार ने श्रीकृष्ण की वन्दनाकर निर्विघ्न ग्रन्थ समाप्ति का आशीर्वाद प्राप्त किया हैं उन्होंने लिखा है-

**मातरं दधिविमन्थनादरां वीक्ष्य नन्दतनयस्य हृष्यतः।**
**श्री हरेः स्फुरदतीव चंचला दायन्तु दुरितं दृगच्चला॥**[2]

वेणीदत्त ने द्रव्य, गुण, कर्म, धर्म और अभाव ये पाँच पदार्थ माने है। जो भाव पदार्थ है। इनमें द्रव्यों की संख्या 9 है-**द्रव्यं तु श्रुतिसम्मतं पृथिव्यादि नवैव** है। अर्थात् श्रुति सम्मत द्रव्य-पृथिवी, जल, तेज, वायु, आकाश, काल, दिक्, आत्मा और मन।[3] गुणों की संख्या 24 न मानकर 19 मानी है। वे पृथक्त्व, परत्व, अपरत्व तथा संख्या को गुण नहीं मानते तथा धर्म-अधर्म के स्थान पर एक अदृष्ट को ही स्वीकार करते है।[4] कर्म के प्रसंग में '**कर्मगमनाख्यमेव**' अर्थात् गमन ही कर्म है, लिखा है।[5] वेणीदत्त ने धर्म पदार्थ के 9 भेद बताये है जो संख्या, सामान्य, विशेष, वैशिष्ट्य, विषयता, कार्यत्व, कारणत्व, स्वत्व एवं शक्ति है। वैशेषिक दर्शन में इस प्रकार का चिन्तन अलग ही प्रतीत

---

1. तर्कसंग्रह के अतिरिक्त आचार्य के दर्शन सम्बन्धित अन्य महत्वपूर्ण ग्रन्थ है। जिसका नामोल्लेख निम्न है-
   (क) तर्कसंग्रह के ऊपर 'तर्कसंग्रहदीपिका' नामक टीका।
   (ख) जयदेव विरचित 'तत्वचिन्तामण्यालोक' ग्रन्थ पर सिद्धाञ्जनटीका।
   (ग) उदयनाचार्य के 'न्यायपरिशिष्ट' पर प्रकाशटीका।
   (घ) 'ब्रह्मसूत्र' पर मिताक्षराटीका।
   (ङ) 'तन्त्रवार्तिक' के ऊपर सुबोधिनीसुधासारटीका।
   (च) 'अष्टाध्यायी' की मिताक्षराटीका।
   (छ) कात्यायन के शुक्लयजुर्वेदप्रातिशाख्य पर भाष्य।।
2. पदार्थमण्डनम्, पृ.-1
3. वही.... पृ.-36
4. वही.... पृ.-36
5. पदार्थमण्डनम्, पृ.-36

होता है।[1] अभाव के विषय में संसर्गाभाव तथा अन्योन्याभाव ये दो भेद स्वीकार किये है।[2] ग्रन्थ के अन्त में वेणीदत्त ने ग्रन्थ प्रयोजन और समय का निरूपण किया है। ग्रन्थ प्रयोजन के विषय में लिखा है कि जो ईश्वरवादी नहीं है या जो नास्तिक है उनके सही मार्ग के लिए हमने मूल टिप्पणी लिखी है, उन लोगों के अनुग्रह के लिए पदार्थमण्डनम् नामक ग्रन्थ लिखा गया है। अतः स्पष्ट है कि ग्रन्थकार ने अज्ञानी जनों को सत् मार्ग की ओर प्रवृत्त करने के लिए ग्रन्थ की रचना की है।

इसके अतिरिक्त वैशेषिक दर्शक पर व्याख्या ग्रन्थ प्राप्त हुए है, जिनका विवेचन आधुनिक संस्कृत साहित्य का इतिहास (सप्तम खण्ड) में प्राप्त होता है। यहाँ पर उनका नामोल्लेख करने का प्रयास है–

| क्र.सं. | आचार्य | टीकाग्रन्थ | प्रकाशन समय |
|---|---|---|---|
| 1. | उत्तमूर वीराघवाचार्य | रसायन व्याख्या | 1958 ई. |
| 2. | स्वामी हरिप्रसाद | वैदिक वृत्ति | 1961 ई. |
| 3. | ब्रह्ममुनिपरिव्राजक | ब्रह्ममुनि भाष्य | 1962 ई. |
| 4. | काशीनाथ शर्मा | पदार्थ व्याख्या | 1972 ई. |
| 5. | जयनारायणतर्कपञ्चानन | विवृत्ति | 1867 ई. |
| | यह व्याख्या शंकरमिश्र प्रणीत वैशेषिकसूत्रोपस्कार पर लिखी गई है। | | |
| 6. | पञ्चानन भट्टाचार्यतर्करत्न | परिष्कारटीका | 1906 ई. |
| 7. | चन्द्रकान्त तर्कालङ्कार | तत्वावली | 1866 ई. |
| 8. | प्यारेलाल आत्मज | भाष्यानुवादः | 1886 ई. |
| 9. | देवदत्त शर्मा | भाष्यानुवाद | 1886 ई. |
| 10. | टी उत्तमूरवीरराघवाचार्य | वैशेषिक रसायनम् | 1958 ई. |
| 11. | दैशिकतिरूमलैताताचार्य | सुगमा | 1979 ई.[3] |

परन्तु इस प्रसंग में थोड़ा कष्ट भी स्पष्ट होता है कि पदार्थमण्डनम् के पश्चात् न्याय वैशेषिक दर्शन परम्परा में पदार्थ के सम्बन्ध में कोई मौलिक विचारों वाला ग्रन्थ उपलब्ध नहीं होता है।

## वैशेषिकदर्शन का दर्शनसाहित्य में अवदान

सम्पूर्ण भारतीय दर्शन वाङ्मय में न्याय एवं वैशेषिक दर्शन प्रवृत्ति-निवृत्ति

1. वैशेषिकदर्शन में पदार्थ निरूपण, पृ.-35
2. पदार्थमण्डनम्, पृ.-27, 28
3. आधुनिक संस्कृत साहित्य का इतिहास (सप्तम खण्ड) पृ.-540 से 570 तक

उभयोन्मुख सामाजिक जीवन के सुचारू सञ्चालन हेतु सर्वोच्च स्थान पर प्रतिष्ठापित है, यह ध्रुव सत्य है। कहा भी गया है-

**यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः।**
**काणादं पाणिनीयञ्च सर्वशास्त्रोपकारकम्।**[1]

कणाददर्शन एवं पाणिनीयव्याकरण समस्तशास्त्रों के उपकारक होते है। जिस प्रकार शब्दों के यथार्थस्वरूप का निर्णय करने हेतु पाणिनीय व्याकरण परमोपयोगी है उसी प्रकार पदार्थों के स्वरूप निर्णय हेतु कणाद कृत वैशेषिकदर्शन की उपादेयता सर्वातिशायी हैं।

महर्षि कणाद प्रणीत वैशेषिक सूत्र ही इस दर्शन का मूलाधार है। वैशेषिक सूत्र 10 अध्यायों में निबद्ध है, प्रत्येक अध्याय में दो-दो आह्निक है। उनमें वर्णित विषयों का क्रम निम्न है-

| | | |
|---|---|---|
| प्रथम अध्याय | - | पदार्थकथन। |
| द्वितीय अध्याय | - | द्रव्यकथन। |
| तृतीय अध्याय | - | आत्मा-मन। |
| चतुर्थ अध्याय | - | शरीरादि। |
| पञ्चम अध्याय | - | कर्म। |
| षष्ठ अध्याय | - | धर्म। |
| सप्तम अध्याय | - | गुण समवाय। |
| अष्टम अध्याय | - | प्रत्यक्षप्रमाण। |
| नवम अध्याय | - | अभावहेतु। |
| दशम अध्याय | - | अनुमान। |

(1) वैशेषिक दर्शन प्रारम्भिक पदार्थ-विद्या का विवरण प्रस्तुत करता है। इस दर्शन में सर्वप्रथम धर्म को मान्यता प्रदान की है - **यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः।**[2] धर्मानुष्ठान से अन्तःकरण की शुद्धि होती है, अन्तः करण शुद्धि से वैराग्य आता है, वैराग्य से योगाभ्यास होता है और योगाभ्यास से तत्त्व का साक्षात्कार होता है। इस प्रकार तत्त्वज्ञान के लिए वर्णाश्रम धर्म का पालन व धर्मानुष्ठान आवश्यक है। धर्म में वेदों को ही प्रमाण माना गया है - **तद्वचनादाम्नायस्य प्रामाण्यम्।**[3]

1. तर्कसंग्रह व्याख्याकार आचार्य श्री निवास शर्मा, पृ.-1 (प्रस्तावना)
2. वैशेषिकदर्शनम्, पृ.-4
3. षड्दर्शनसमुच्चय, पृ.-16

(2) धर्म आदि पुरूषार्थ चतुष्टय की सिद्धि पदार्थों के तत्वज्ञान से होती है। यथा – **धर्मविशेषप्रसूताद् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां सधर्म्य-वैधर्म्याभ्यातत्त्वज्ञानान्निःश्रेयसम्।**[1] अतः इस दर्शन में भौतिक एवं आध्यात्मिक पदार्थों का प्रतिपादन किया गया है।

(3) वैशेषिकदर्शन में पदार्थ केवल अभिधेय ही नहीं, ज्ञेय भी माने गये है। अतः पदार्थ के सम्बन्ध में वैशेषिकदर्शन का सर्वाधिक महत्वपूर्ण योगदान यही है कि उसने पदार्थ की विचारनिरपेक्ष तथा वस्तुगत सत्ता सिद्ध की है।

(4) वैशेषिक का पदार्थवर्गीकरण तथा परमाणुकारणवाद, भौतिकवाद एवं क्षणिकवाद से श्रेष्ठ है और भारतीय दर्शन के विकास क्रम में एक महत्वपूर्ण स्तर है।

(6) वैशेषिकदर्शन के अनुसार पदार्थ के दो भेद है–भाव तथा अभाव। भाव पदार्थ द्रव्य, गुण, कर्म, सामान्य, विशेष तथा समवाय है। इन सात पदार्थों के अन्तर्गत विश्व की प्रत्येक वस्तु आ जाती है।

(7) वैशेषिकदर्शन में पृथ्वी, जल, तेज, वायु, आकाश, काल, दिक्, आत्मा और मन ये नौ प्रकार के द्रव्य माने गये है।

(8) पृथिवी नामक प्रथम द्रव्य की चर्चा से स्पष्ट होता है कि पृथिवीत्व जाति की सिद्धि वृक्षादि के स्थावरत्व अथवा जगमत्व सम्बन्धी विश्लेषण तथा पार्थिव शरीर की पाँच भौतिकत्व विषयक विप्रत्तिपत्ति में वैशेषिक दार्शनिकों ने विलक्षण युक्ति कौशल एवं तत्व दृष्टि प्रस्तुत की है। 'वृक्षादि' में भी जीवन है, यह वैशेषिक मान्यता आधुनिक वनस्पति विज्ञान से भी समर्थित है।

(9) विज्ञान के सबसे बड़े चमत्कारपूर्ण विषय परमाणुवाद का आविष्कार वैशेषिक दर्शन से हुआ है। इस सिद्धान्त के आधार पर विश्व में अनेक आश्चर्यजनक परिवर्तन हुए है।

(10) न्याय वैशेषिक दर्शन असत्कार्यवाद को मानते है। कार्य उत्पत्तिपूर्व असत् है, वह अपने कारण में विद्यमान नहीं रहता है। कार्य नई उत्पत्ति है, नूतन सृष्टि है और उत्पत्ति से ही उसकी सत्ता का प्रारम्भ होता है। इसलिए इसे आरम्भवाद भी कहा गया है।

(11) आत्मा को वैशेषिक दर्शन में ज्ञान का आश्रय कहा है। आत्मा अनन्त है, क्योंकि प्रति शरीर भिन्न-भिन्न है। ईश्वर को भी इसी द्रव्य के अन्तर्गत रखा गया है। वैशेषिक दर्शन का महत्व आत्मा व परमात्मा के स्वरूप निरूपण में नहीं, अपितु उनकी सिद्धि एवं सिद्धि प्रकार में है।[2]

---

1. प्रशस्तपादभाष्य, पृ.–2
2. वैशेषिक दर्शन में पदार्थ निरूपण, पृ.–69, 70, 603

(12) अन्तिम द्रव्य 'मन' के विवेचन में वैशेषिक दार्शनिकों ने मनोवैज्ञानिक विश्लेषण का सूत्रपात किया है अतः ज्ञानायौगपद्य रूप मनः साधक हेतु एवं मन के अणुत्व तथा अनन्तत्व सम्बन्धी युक्तियाँ ही इस दर्शन का महत्वपूर्ण योगदान है।[1]

(13) वैशेषिकदर्शन में गुण द्रव्य के स्थिर, अपरिवर्तनीय धर्म माने गये है। गुणों की संख्या चौबीस है, इससे कम या ज्यादा नहीं है।

(14) गुण साधर्म्य के निरूपण अवसर पर गुणों के यावद्द्रव्यभावित्व-अयावद् द्रव्य-भावित्व सामान्यगुणवत्त्व तथा विशेषगुणवत्व की चर्चा दार्शनिक दृष्टि से महत्वपूर्ण है। इसके अतिरिक्त गुण एवं गुणी एक ही अधिकरण में रहने पर भी पृथक्-पृथक् पदार्थ है। वैशेषिक दर्शन की मौलिक कल्पना समवाय पर आधारित होने से यह सिद्धान्त उल्लेखनीय है।[2]

(15) वैशेषिक दर्शन में गुण एक स्वतन्त्र पदार्थ है जबकि कुछ दर्शनों में गुण को स्वतन्त्र पदार्थ स्वीकार न कर उसे गुणी से सर्वथा अभिन्न माना है।

(16) रस गुण के अन्तर्गत कई वैशेषिकाचार्यो ने जल की नीरसता का विचार किया है, परन्तु यह मत खण्डन परम्परा का शिकार हुआ है, क्योंकि रस जल का प्रधान गुण है। जल में यदि रस को स्वीकार न किया जाये तो शरीर का भरण पोषण ही नितांत निराधार तथा असंभव हो जायेगा।[3]

(17) वैशेषिकदर्शन का महत्वपूर्ण भौतिक सिद्धान्त पाकप्रक्रिया है। पीलुपाकवाद एवं पिठरपाकवाद सम्बन्धी सूक्ष्मविवाद का सारतत्व यही है कि द्रव्य के रूप, रस, गन्ध आदि गुणों की परिवर्तनीयता की व्याख्या की जा सके।

(18) अपेक्षा बुद्धि से द्वित्वाद्युत्पत्ति प्रक्रिया एवं संख्या का वस्तुतः सत् स्वरूप भी वैशेषिक दर्शन की महत्वपूर्ण स्थापना है। इस विषय में गणितीय दृष्टि से संख्या के स्वरूप एवं वैशेषिकाभिमत मान्यता की तुलना करके यह प्रतिपादित किया गया है कि वैशेषिक सिद्धान्त सर्वथा गणितशास्त्री स्थापना के अनुरूप ही है।[4]

(19) परमाणुओं के पाक को मानने वाले (पीलुपाक), घट के विघटित हुए बिना ही उसका पाक मानने वाले (पिठरपाक) मतानुयायियों में जो वैचारिक दृष्टिकोण है, वह लोकप्रचलित उक्ति से युक्त हो चुका है-

**द्वित्वे च पाकजोत्पतौ विभागे च विभागजे।**
**यस्य न स्खलिता बुद्धिः तं वैशेषिकं विदुः॥**[5]

1. वही.... पृ.-603
2. वही..... पृ.-603
3. वही... पृ.-604
4. वैशेषिकदर्शन-तुलनात्मक अध्ययन, पृ.-73
5. वैशेषिकदर्शन में पदार्थ निरूपण, पृ.-604

(20) वैशेषिकमतानुसार ज्ञान (बुद्धि) आत्मा का स्वरूप नहीं, आगन्तुक गुण है जो उसमें शरीर संयोग से उत्पन्न होता है।

(21) वैशेषिकदर्शन की प्रमाणमीमांसा बुद्धि गुण के अन्तर्गत हैं। वैशेषिक दर्शन में दो ही प्रमाण माने गये है – प्रत्यक्ष तथा अनुमान। इनके अतिरिक्त प्रमाणों का इन्हीं दो प्रमाणों में अन्तर्भाव हो जाता है।[1]

(22) स्मृति, आर्षज्ञान, स्वप्न एवं स्वप्नान्तिक आदि ज्ञान प्रकारों के विवेचन में इस दर्शन का विशेष योगदान है।[2]

(23) 'गुरुत्व' गुण का वैशेषिक प्रतिपादित स्वरूप दृष्टिगत करने पर व्यक्त होता है कि आधुनिक विज्ञान में न्यूटन के गुरूत्वाकर्षण सिद्धान्त नाम से प्रसिद्ध महत्वपूर्ण सिद्धान्त का मूल आधार यही है।[3]

(24) भारतीय दर्शन में प्रामाण्यवाद एक बहुत महत्वपूर्ण विषय रहा है। न्यायवैशेषिक ने स्वतः प्रामाण्यवाद का खण्डन करके परतः प्रामाण्य का समर्थन करता है।[4]

(25) वैशेषिक दर्शन में संस्कार गुण के तीन भेद बताये गये है–वेग, भावना तथा स्थितिस्थापक।

(26) शब्द गुण के विषय में वैशेषिक दर्शन की विशेष मान्यता यह है कि उसे आकाश द्रव्य का साधक हेतु एवं विशेषगुण कहा गया है तथा वेद को अपौरूषेय मानने पर भी शब्द के अनित्यत्व पर बल दिया गया है।

(27) वैशेषिक दर्शन में कर्मपदार्थ का महत्वपूर्ण स्थान है। कर्म के पाँच भेद है– उत्क्षेपण, अपक्षेपण, आकुञ्चन, प्रसारण तथा गमन। तर्कसंग्रहदीपिका में भ्रमण आदि कर्मो की आचार्यो ने शंका उठाई है, उसका अन्तर्भाव अन्नम्भट्ट ने गमन में ही किया हैं। इन विभाजनों को डॉ. दयानन्द भार्गव ने अत्यन्त वैज्ञानिक बताया है।[5]

(28) वैशेषिक दर्शन ने सामान्य को पदार्थ सिद्ध करने का सफल एवं सार्थक प्रयास किया है। इसके भेदों का प्रतिपादन भी किया गया है, परन्तु जाति बाधक तत्वों का निरूपण अथवा जाति एवं उपाधि का अन्तर इस दर्शन की सूक्ष्म तर्क विद्या को एक महत्वपूर्ण देन है।

---

1. सर्वदर्शनसंग्रह, पृ.–360
2. प्रशस्तपादभाष्य, पृ.–174–180
3. वैशेषिकदर्शन में पदार्थनिरूपणम्, पृ.–604
4. वही..... पृ.–604
5. वैशेषिकदर्शन एक अध्ययन, पृ.–205–207

(29) विशेष पदार्थ वैशेषिक सम्प्रदाय की एक देन है। इस सम्प्रदाय से अतिरिक्त सम्प्रदाय वालो ने विशेष को सर्वथा अस्वीकार कर दिया है।[3]

(30) समवाय सम्बन्ध की कल्पना न्याय-वैशेषिक का एक विशिष्ट सिद्धान्त है। इसी पर न्याय वैशेषिक की सारी दार्शनिक प्रक्रिया आधारित है। यह समवाय नित्य सम्बन्ध है। यहाँ नित्य से तात्पर्य है कि यह कार्य की उत्पत्ति के बिना उत्पन्न नहीं होता तथा कार्य के नाश के बिना नष्ट नहीं होता।[4]

(31) अभाव की पृथक् स्वीकृति वैशेषिक दर्शन की एक महत्वपूर्ण मान्यता है। न्याय वैशेषिक दर्शन इसे बाह्य पदार्थ के रूप में स्वीकार करता है।

(32) न्याय वैशेषिक मत में सृष्टि एवं प्रत्यय का सिद्धान्त महत्वपूर्ण हैं।

(33) योग का लक्षण करते हुए वैशेषिकदर्शन में कहा है कि मन की ईश्वर में स्थिति होने पर जितने भी कर्म किए थे। उनका फल भोगने के पश्चात्, नये कर्मों के आरम्भ न होने के कारण दुःखों का अभाव हो जाता है। यही अवस्था योग की कहलाती है।

(34) वैशेषिकदर्शन का उल्लेखनीय योगदान यह है कि मानव जीवन का उद्देश्य अभ्युदय और निःश्रेयस् को प्राप्त करना है। जिन कर्मों को करने से लौकिक वैभव और आत्मिक कल्याण प्राप्त होता है, वही धर्म अर्थात् जीवन का कर्तव्य है।[1]

(35) महर्षि कणाद ने मोक्ष के विषय में लिखा है कि जब अदृष्ट के अभाव होने पर कर्म चक्र की गति का अपने ही आप अन्त हो जाता है तब आत्मा का शरीर से सम्बन्ध टूट जाता है और जन्म मरण की परम्परा भी उसी के साथ बन्द हो जाती है, साथ ही सब दुःखों का नाश हो जाता है, यही मुक्ति है।[2]

(36) वैशेषिकदर्शन का वैज्ञानिक दृष्टिकोण से भी महत्वपूर्ण स्थान है।[3]

इस प्रकार स्पष्ट होता है कि वैशेषिकदर्शन अत्यन्त उपयोगी एवं स्वाभाविक दर्शन है। इस दर्शन की स्वाभाविक उपयोगिता यह है कि इसके पदार्थ ऐसे अनुभव सिद्ध है कि हम अपने दैनिक व्यवहार में भी सहज रूप से इन्हीं पदार्थों का उपयोग करते है। व्यावहारिक होने के साथ-साथ यह तर्क के आधार पर वैज्ञानिक स्थिति का उद्भावन करते है।

---

1. तर्कसंग्रह (तन्वीव्याख्या) पृ.-119
2. वैशेषिकदर्शन तुलनात्मक अध्ययन, पृ.-157
3. तर्कसंग्रह (तन्वीव्याख्या), पृ.-126
4. तदनारम्भ आत्मस्थ मनसि शरीरस्य दुःखाभावः स योगः॥6॥ वैशेषिक सूत्र 5/2/26
5. भारतीयदर्शनशास्त्र का इतिहास, पृ.-622

इसके अतिरिक्त इनकी महत्ता इससे भी सिद्ध होती है कि साधारण पुरूष संसार में आसक्त रहते है, क्लेश की अनुभूति होने पर भी सांसारिक उपायों के अवलम्बन में ही उनकी प्रवृत्ति होती है। उसी मार्ग से यह उपदेश दिया जाये तो और अधिक सफल होता है। इसलिए प्रकृत दर्शन में व्यावहारिक पदार्थों के यथार्थ ज्ञान को मोक्ष का उपाय बतलाया है।[1] इस उपाय के अवलम्बन में जनसाधारण की भी अधिक अरूचि नहीं होगी। अतः उपर्युक्त उपाय के अनुसरण के द्वारा हम लोगों को परम पुरूषार्थ निःश्रेयस् का अधिगम करना चाहिए।

1. भारतीयदर्शन, रूपाली श्रीवास्तव, पृ.-145

संस्कृत-विमर्शः 2016 ( अङ्कः-11 ) ISSN : 0975-1769

# निरुक्तवेदाङ्गे भाषाविज्ञानस्य मूलभूतसिद्धान्तः

- **प्रो. राजेश्वरमिश्रः**
कुरुक्षेत्र-विश्वविद्यालयः, कुरुक्षेत्रम्

**निबन्धेऽस्मिन् निरुक्ते वेदाङ्गे च भाषाविज्ञानस्य मूलभूतः सिद्धान्तः विमृष्टो विद्यते।**

प्रायः सर्वविधज्ञान-विज्ञानानां मूलस्रोतस्स्वरूपे वेदे ग्रीकदार्शनिकानां भाषाविषयक-सङ्केतेभ्यो बहु प्रागेव भाषा-चिन्तनस्य प्रवृत्तिर्बीजरूपेण दृग्गोचरी-भवति। सर्वप्रथममृग्वेदे भाषाविषयकं सूक्तद्वयमुपलभ्यते।[1] वेदेऽस्मिन् भाषाविकासस्य तिस्रः अवस्थाः-(1) अव्यक्तभाषा (2) आदिमव्यक्तभाषा (3) वास्तविकभाषेति सङ्केतिताः।[2] भाषाविज्ञान-स्येतिहासे वैदिक-ऋषिभिरेवादौ स्फुटतया शब्दस्य विभागचतुष्टयस्य चर्चा कृतासीत्।[3] तत्कालीन-भारतीय-ऋषीणां भाषाविषयके चिन्तने भाषायाः उत्पत्तेरपि च तस्याः स्वरूप-सम्बद्धाः केचन सङ्केता अपि लभ्यन्ते। संसारस्याविर्भावेण सह ते वाण्यारुत्पत्तिरपि देवेभ्य एव स्वीकुर्वन्ति, अपि च त एतदप्यङ्गीकुर्वन्ति यदेषा वाक् भूतानां व्यवहाराय समुद्भूता विद्यते।[4] 'सुसंस्कृता वागेव प्रयोक्तव्या' इत्यस्मिन् विषयेऽपि तेषामृषीणामेतादृशी आसीदव-धारणा यत्, यथा धीराः विद्वांसः तितउना सक्तून् पूत्वोपभुञ्जते, तथैव प्रज्ञानयुक्तेन मनसा वाचं पवित्रीकृत्य, अर्थात् सम्यग्विचार्य निर्दुष्टं कृत्वा वा तस्या व्यवहारः करणीयः, यतो ह्येतादृशीवागेव कल्याणकारिणी भवति।[5] तेषामृषीणामेतादृशं चिन्तनं भाषा-चिन्तनस्याधार-

---

1. द्रष्टव्य, ऋ., 10.71; 10.125 सूक्त।
2. तदेव, 1.164.45 :
   चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः।
   गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति।
3. तदेव, 1.164.45 : चत्वारि वाक् परिमिता पदानि.।
4. वही, 8.100.11 :
   देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति।
   सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुपसुष्टुतैतु।।
5. वही, 10.71.2 :
   सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत।
   अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि।।

भूमिरिति वक्तुं शक्यते, सम्भवतः तमवलम्ब्यैव परवर्तिकाले भाषाचिन्तनस्य परम्परा विकसिता प्रतीयते।

वेदेऽन्यत्रापि कतिपयेषु मन्त्रेषु वाण्याः गुणान्, तस्या उच्चारण-प्रक्रियेत्यादयोऽपि सङ्केतिता विद्यन्ते।[1] इतोप्यधिकं, केषुचित् मन्त्रेष्वयमपि सङ्केत उपलभ्यते, यत्तदानीन्तने काले व्यवहृतभाषासु मन्त्राभिव्यक्तये ऋषिभिः प्रयुज्यमाणां भाषां मानकरूपामुररीकृत्य तस्या विश्लेषणमपि क्रियते स्म[2] तथा वैदिकस्तुतिष्वपि तस्या व्यवहारः क्रियते स्म।[3] 'अव्याकृतभाषाया व्याकरणमिन्द्रेणाविष्कृतमिति', ऋग्वेदस्य मन्त्रस्यैकस्य (3.34.10) भाष्ये वेंकटमाधवेनाप्युल्लिखितम्।[4] ते देवा इन्द्रमब्रुवन्निमां नो वाचं व्याकुर्वीति', तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्तस्मादियं व्याकृता वागुच्यते' इत्युल्लिखन्ती कृष्ण-यजुर्वेद-संहिताऽपि तथ्यमिदं स्फुटं प्रमाणयति।[5] मन्त्रेष्वेतेष्वभिव्यक्तानि श्रुतिवचनानि स्पष्टतः सङ्केतयन्ति, यत् तात्कालिका मनीषिणो भाषाया अवयवरूपाणि सम्यक्तयावबोधितवन्तः, अपि च ते तस्या विश्लेषणे, सूक्ष्माध्ययने च प्रवृत्ता आसन्। पदानां खण्डशो विभाजने (व्याकरणे) शब्द-व्युत्पत्त्यर्थञ्च, मूलधात्वर्थपरिज्ञानेऽन्वेषणे वा तेषां प्रवृत्तिरासीदित्यस्य प्रभूतसङ्केता अपि दृग्पथमायान्ति। उदाहरणार्थमिन्द्रस्य कृते व्यवहृतैः 'पुरन्दरः' (ऋ. 1.102.7; 2.20.7; 3. 54.15; 5.30.1; 8.1.7-8 इत्यादयः) 'पराषाड्' (10.74.6) इत्यादिभिः पदैः स्फुटं प्रतीयते, यत् शब्द-रचनायां विद्यमान-प्रकृति-प्रत्ययोः परिकल्पनया वैदिक-ऋषयः पूर्णतः परिचिता आसन्। एतस्माद् व्यतिरिक्तमृग्वेदे 'क्षि' इत्येतस्माद्धातोरधिकरणे निष्पन्नस्य 'क्षिति' इत्यस्य पदस्य निवासार्थे प्रयोगः (7.88.7)[6], अथ च तस्मात् धातोः कर्मणि निष्पन्नस्य 'क्षिति' इत्यस्य पदस्य शासनार्थे (5.37.4)[7] प्रयोगोऽपि तथ्यमिदं सङ्केतयति, यदेकस्मादेव मूलधातोर्निष्पन्नानां पदानां भिन्नप्रत्ययवशाद् भिन्नकारकवशाद्वा जातस्यार्थगतभेद-स्यापि विषये ते जानन्ति स्म। एवं व्युत्पत्तिपरकतत्त्वानां रूपवैशिष्ट्यमिदं वैदिकग्रन्थेषूत्त-रोत्तरं स्फुटरूपेण द्रष्टुं शक्यते। इतोप्यधिकं वेदे शब्दानां पदानां वा सम्मिश्रणमपवारयितुमथ

1. द्रष्टव्य, ऋ., 1.182.4; 5.63.6; 8.100.11
2. द्रष्टव्य, ऋ., 10.71.3 :
   यज्ञेन वाचः पदवीयमायन् तामन्वविन्दन्नृषिषु प्रविष्टाम्।
   तामाभृत्या व्यदधुः पुरुत्रा तां सप्त रेभा अभि सं नवन्ते।।
3. वही, 10.125.3 : अहं राष्ट्री संगमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम्।
4. वही, 3.34.10 पद वेंकटभाष्य-वाचश्चाव्याकृता, वि-नुनुदे व्याचकार।
5. तैत्ति.सं., 6.4.7 :
   वाग्वै पराच्यव्याकृताऽभवत्, ते देवा इन्द्रमब्रुवन्निमां नो वाचं व्याकुर्वीति-----
   तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्तस्मादियं व्याकृता वागुच्यते।
6. ऋ., 7.88.7 : ध्रुवासु त्वासु क्षितिषु क्षियन्तो-----।
7. वही, 5.37.4 :
   न स राजा व्यथते यस्मिन्निद्रस्तीव्रं सोमं पिबति गोसखायम्।
   असत्वनैरजति हन्ति वृत्रं क्षेति क्षितीः सुभगो नाम पुष्यन्।।

च पदानां मूलोच्चारणस्य संरक्षणार्थं पदपाठादिभिर्मन्त्रगत-(वाक्यगत-) पदानां पृथक्करणे पृथक्ज्ञाने वा ऋषिभिर्यः प्रयासो विहितः, सोऽपि भाषाविश्लेषणस्य प्रारम्भिकं प्रायोगिकं च रूपमासीदिति स्वीकर्तुं शक्यते, यतोहि शब्द-व्युत्पत्तिः समासविग्रहश्चास्याधारोऽस्ति। भाषायाः तत्त्वविश्लेषणस्यास्य प्रवृत्तेः स्फुटो वैज्ञानिकश्च विकासः शिक्षाग्रन्थेषु, अथ च प्रातिशाख्यग्रन्थेषु दृग्गोचरी भवन्ति। एते विश्वसाहित्ये ध्वनिविज्ञानस्य प्राचीनतमा ग्रन्थाः सन्ति।

वेदग्रन्थानामनन्तरं भाषा-चिन्तनस्य दिनानुदिनं वर्धमानं काठिन्यं समाधातुमेव सम्भवतः भारतीयैर्मनीषिभिर्वेदाङ्गान्याविष्कृतानि आसन्। वस्तुतस्त्वेतेषां शुभारम्भो वेदस्य सम्यगवबोधनायैव कृत आसीत्। वेदाङ्गेष्वेतेषु यास्कविरचितं निरुक्तवेदाङ्गमप्येकमस्ति, यस्य भाषाशास्त्रस्या-ध्ययनक्षेत्रे महदुपयोगित्वं सर्वविदितमेवास्ति। स्कन्दस्वामिन आरभ्याधुनिकव्याख्यापद्धतेरा-विष्कारक-जर्मन-विद्वर्य-रॉथपर्यन्तमथ च तेषामनुयायिनः, प्रायः सर्वे वेदभाष्यकारा निरुक्त-स्यैव रूपविशेषं तुलनात्मकभाषाविज्ञानमाधृत्य वेदार्थप्रवचनं समुचितं मन्यन्ते। पाश्चात्त्य-विदुषो रॉथमहोदस्य 'जर्मनमहाकाशेः', अथ च ग्रासमानमहोदस्य' वैदिककोषः' युगानुकूलं सातत्यं स्थापयन्तौ, निघण्टुसंकलनस्य, अपि च तस्योपरि निरुक्तव्याख्यायाः सादृश्यं धारयन्तौ प्रतीयेते। आधुनिकभाषाविज्ञानं देवशास्त्रञ्च वस्तुतस्तु आधुनिकं निरुक्तशास्त्रमेवास्ति। आवश्यकतानुसारेणैतानि शास्त्राणि एकतो भाषाशास्त्रीय-चिन्तनपरम्पराया विकासस्य ज्ञानं कारयन्ति, अपरतश्च विकसितज्ञानस्य परिरक्षणमथ चोपयोगानुकूलं तस्य प्रसाधनमुपदिशन्ति। भाषाशास्त्रस्य विकासे स्वकीयपद्धत्याः प्रतिपादनात्, अपि चागामिविदुषां पथप्रदर्शनेन सहैव महत्त्वपूर्णसामग्रीप्रदानादाचार्ययास्कस्य योगदानं स्तुत्यमेवास्ति। एतस्मात्कारणादेव वैदिकमन्त्रेषु पदार्थज्ञानाय वाक्यार्थावबोधनाय चास्य निरुक्तग्रन्थस्यात्युपयोगित्वं सुविदितमेव।[1]

यथा शिक्षा-ग्रन्थैरथ च प्रातिशाख्यग्रन्थैर्वैदिकपदानां शुद्धरूपाणि समवस्थातुं महनीयः प्रयासो विहितः तथैव कालान्तरे तेषां मूलार्थमवगन्तुं सहायग्रन्थरूपेण निघण्टुनाम्ना शब्दकोशानां निर्माणं प्रचलितम्। एते ग्रन्था विश्वस्योपलब्धवाङ्मये प्राचीनतमाः कोशाः मन्यन्ते। शब्द-विज्ञानार्थविज्ञानयोश्च प्रथम आचार्यो यास्कः एतान् निघण्टुग्रन्थानधिकृत्य स्वीयं प्रसिद्धं ग्रन्थं 'निरुक्तं' रचितवान्। यद्यपि यास्कात्पूर्वं द्वादशनिरुक्तकारा आसन्, येषामुल्लेखः तेन स्वयमेव कृतः, परन्तु विज्ञानस्यास्योपलब्धप्रौढतमा कृतिर्यास्कस्य निरुक्तग्रन्थ एव, यो भारतीयभाषाशास्त्रस्य मेरुदण्डः स्वीक्रियते। निर्वचनात्मकपद्धत्या शब्दानां परोक्षातिपरोक्षार्थाणा-मवबोधकभूतत्वादेवैष व्याकरणशास्त्रस्य पूरकग्रन्थोऽङ्गीकृतः।[2] अतो व्याकरणस्य कार्त्स्न्यं-ग्रन्थभूतत्वान्निरुक्ते व्याकरणस्य भाषाविषयकस्य वा केषाञ्चित् तत्त्वानां समावेशोऽनायासेनैव जातः, यथा-शब्दनित्यता, पदचतुष्टयम्, निपातोपसर्गौ, सर्वाणि नामान्याख्यातजानि, कानिचि-

1. निरु., 1.15 :
   अथापीदमन्तरेण मन्त्रेष्वर्थप्रत्ययो न विद्यते।
   अर्थमप्रतियतो नात्यन्तं स्वरसंस्कारोद्देशः।
2. निरु., 1.15 : तदिदं विद्यास्थानं व्याकरणस्य कार्त्स्न्यं स्वार्थसाधकं च।

देवाख्यातजानि वा, इत्यादीनि।[1] एवमाचार्ययास्केनैवादी निरुक्ते भाषाविषयिकी व्यापकदृष्टि-रुपस्थापिता। भाषायाः क्रमिकविकासस्य, तदुत्पत्तिसंरचनाविषये चास्मिन् ग्रन्थे प्रथमं वैज्ञानिकदृशा मीमांसा कृता विद्यते। सम्भवतः वैदिकग्रन्थेषु सङ्केतितं भाषापरकमन्तव्यमेवात्र यास्कस्य प्रेरणायाः कारणं प्रतीयते। आचार्यशाकटायनस्य मतमुद्धरताचार्ययास्केनैव सिद्धान्त एषः प्रतिपादितो यत्'। कस्माच्चन धातोरेव शब्दस्य निष्पतिभर्वति'।[2] शब्दानां निर्वचनार्थ-माचार्येणानेन वर्णागमवर्णविपर्यय-वर्णविकार-वर्णनाश-धात्वर्थातिशययोगरूपकं पञ्चक-मेतत् प्रमुख आधारोऽनुमतः।[3] 'प्रथमः प्रतमो बभूव' (नि. 2.22) इत्यनेन कथनेनासावेवादौ भाषाविज्ञानस्य तं सिद्धान्तं सङ्केतितवान्-, 'यद् ध्वन्यात्मकपरिवर्तनवशान्नूतनशब्दानां सृष्टि-र्भवति', परन्तु भाषावैज्ञानिक-विश्लेषणेन तस्य शब्दस्य मूलरूपं ज्ञातुं शक्यते।

साम्प्रतिके युगे भाषाविज्ञानं पर्याप्तं विकसितमेकं विज्ञानमिति प्रसिद्धम्। विज्ञाने-ऽस्मिन् भाषाविषयकबहुविधानां मौलिकानामथ च महत्त्वपूर्णतथ्यानामध्ययनं क्रियते। परमति-विस्मयकारकमिदं तथ्यं यदाचार्ययास्कस्य तस्मिन् सुदूरे कालेऽपि परिनिष्णातैर्नैरुक्ताचार्यैः वैयाकरणैश्च भाषाविषयका अनेके मूलभूतसिद्धान्ता आविष्कृताः। वस्तुतस्तु नैरुक्तानां वर्णागमवर्णविपर्यय-वर्णविकार-वर्णनाश-धात्वर्थातिशययोगरूपकं प्रक्रियापञ्चकं भाषा-विज्ञानस्याधारभूतसिद्धान्तो भवितुमर्हति। प्रक्रियापञ्चकादेतस्माद् व्यतिरिक्तं निरुक्तवेदाङ्गे भाषोत्पत्ति-ध्वनि-रूप-अर्थविज्ञानविषयकाः कतिपयसिद्धान्ता अपि दृग्गोचरीभवन्ति, आधुनिके युगे भाषाविज्ञानमध्येतुं ये विषयीभूता दृश्यन्ते, तेषां विवेचनमत्रापेक्षितं क्रियते च-

### भाषोत्पत्तिः

भाषाया उत्पत्तिविषये विदुषां मतैक्यं न विद्यते। भारतीय-परम्परायां कतिपये विद्वांस-श्चैनामीश्वरकृतां स्वीकुर्वन्ति, केचनान्ये विद्वांसस्तु ध्वनेरस्या उत्पत्तिं मन्यन्ते, अपरे च केचनाचार्याः भाषाया विकासवादसिद्धान्तमेवास्या उत्पत्तेः कारणमङ्गीकुर्कन्ति।[4] परन्तु विषयेऽ-स्मिन्नाचार्ययास्कस्य मतमतिव्यावहारिकं प्रतीयते। तदनुसारेण जागतिकव्यवहारायैव लोके वस्तूनां नामकरणं क्रियते, यतो ह्यन्याः पद्धतयः कष्टसाध्याः सन्ति, अथवा सूक्ष्मभावानामभि-व्यक्तावसमर्था भवन्ति; अतो व्यापकभूतत्वाच्छब्दा एव सरलतया भावानां वस्तूनाञ्च

---

1. एतदर्थ द्रष्टव्य निरुक्त का प्रथम अध्याय।
2. नि., 1.11 : तत्र नामानि आख्यातजानि इति शाकटायनः नैरुक्तसमयश्च।
3. काशिकाकार (6.3.109) का कथन -
   वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ।
   धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्।।
4. द्रष्टव्य, Taraporewala; Elements of the Science of language, Divine Theory, Bow-bow Theory.

द्योतका भवन्ति।[1] आचार्ययास्कस्याभिमतेनानेन स्फुटं प्रतिभाति, यत् 'भाषा मानवकृता विद्यते न त्वीश्वरकृतेति' तस्य निश्चयः। स्वाभिमतं दृढीकर्त्तुमसौ पुनः तर्कमेकमुपस्थापयति, यदि व्यावहरणे प्रचलिते भूते सत्येव कस्यचिच्छब्दस्य व्युत्पत्तिः क्रियते।[2] व्यतिरिक्तमेतस्मात् 'पदान्याख्यातजानीति' सिद्धान्तो[3]ऽपीत्थं सङ्केतयति यद् व्यापारा एव (क्रिया एव) शब्दानुद्-भावयन्ति। प्रकारान्तरेण तथ्यमिदमेवं वक्तुं शक्यते, यत् कश्चिच्छब्दः प्रथमं तावत् क्रियाया (व्यापारेण) सम्बद्धो भवति तदा प्रचलितो भवति। अतो मानवव्यापाराः (क्रियाः) प्रथमतः शब्देन सम्बद्धा भवन्ति चेच्छब्दोऽयं ध्वनिना (व्यञ्जनया), लक्षणया रूपकेण वा केनापि प्रकारेण वा स्वकीयमर्थं प्रकटयेत्।

आचार्ययास्को भाषाया उद्भवविषयेऽनुकरणसिद्धान्तमपि स्वीकरोति, यो वर्तमाने युगे भाषाविज्ञानान्तरगते 'ध्वनि-अनुकरण'रूपेण प्रसिद्धः।[4] 'शब्देष्वनुकृतिसिद्धान्तो नास्तीति'[5] पूर्वपक्षरूपेण-निरुक्ते आचार्यौपमन्यवस्य मतमुद्धृत्य आचार्ययास्कः तस्य विपरीतं 'प्रायः पक्षीणां नामानि शब्दानुकरण एव निर्धारितानि भवन्तीति' स्वकीयमभिमतमुपस्थापयति।[6] स्वकीये निरुक्तवेदाङ्गेऽन्यत्रापि यास्केन शब्दानुकृतिसिद्धान्तः कतिपयशब्दानामुत्पत्तिकारणं स्वीकृतः।[7] यास्कादनन्तरमाचार्यपाणिनिरप्यव्यक्तध्वनावनुकरणसिद्धान्तं स्वीकरोति।[8] अनेन प्रकारेणाचार्यो यास्को मनुष्याणां क्रिया (व्यापाराद्) एव शब्दोत्पत्तिम् अङ्गीकरोति। भाषा-विज्ञानस्येतिहासे सिद्धान्त एष भाषोत्पत्तेर्मूलभूतसिद्धान्त इति वक्तुं शक्यते, यः समुचित-साधनाभावात् तदानीन्तने काले न विकसितोऽभवत्।

### ध्वनि-विज्ञानम्

भाषाविज्ञानस्याङ्गमेकं ध्वनिविज्ञानमस्ति, यस्मिन् ध्वनि-परिवर्तनस्य विभिन्न-नियमानां सिद्धान्तानां वा विवेचनं भवति। निरुक्तशास्त्रस्याध्ययनेनैवं ज्ञायते यत्तस्मिन् सुदूरे कालेऽपि-आचार्ययास्को न केवलं ध्वनि-परिवर्तनस्य सिद्धान्तं जानाति स्म, प्रत्युत विषयेऽस्मिन् तस्य निरीक्षणमत्यन्तं महत्त्वपूर्णमथ चाधुनिकभाषाविज्ञानस्यानुसन्धानानां सर्वथानुकूलं वर्तते। तदनुसारं ध्वनिषु जायमानानि परिवर्तनान्येतानि सन्ति –

---

1. नि., 1.2 : व्याप्तिमत्वात्तु शब्दस्य। अणीयस्त्वाच्च शब्देन संज्ञाकरणं व्यवहारार्थं लोके।
   तुलनीय, काव्यादर्श, 1.2: इदमन्धतमः कृत्स्नं जायेत भुवनत्रयम्।
   यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते।।
2. नि., 1.14 : भवति हि निष्पन्ने अभिव्याहारे योगपरिष्टिः।
3. वही, 1.12 : तत्र नामानि आख्यातजानि इति शाकटायनः नैरुक्तसमयश्च।
4. द्रष्टव्य, Dr. Gune : Comperative Philoslogy, p.17
5. नि., 3.18 : न शब्दानुकृतिर्विद्यत इत्यौपमन्यवः।
6. वही, 3.18 : काक इति शब्दानुकृतिः, तदिदं शकुनिषु बहुलम्।
7. वही, 5.22 : कितवः किं तवास्तीति शब्दानुकृतिः।
8. अष्टा., 5.4.57 : अव्यक्तानुकरणाद् द्वयजवरा।

### ( I ) आदिस्वलोपः

लोपोऽयं स्वराघातवशाद् भवति, यतो हि कस्मिंश्चित् स्वरे बलविशेषाद् बलाघातवशाद्वा स्वराणामपराणामुच्चारणलोपो भवति। **"अथापि अस्तेः निवृत्तिस्थानेषु आदिलोपो भवति"**[1] इत्युक्त्वाचार्ययास्को निरुक्तेऽस्य सङ्केतं कृतवान्।

### ( II ) मध्यमस्वरलोपः

आचार्यो यास्कः लोपमेनमुपधालोप[2] इति उक्त्वा सङ्केतितवान्, यथा **जग्मतुः** (√गम्>जग्मतुः), **जग्मुः** (√गम्>जग्मुः) इति।

### ( III ) अन्तस्वरलोपः

आचार्ययास्कस्य मते लोपोऽयं योगात्मकं परिवर्तनमस्ति। **"अथापि अन्तलोपो भवति,**[3] यथा गत्वा, गतम्" (√गम्>गत्वा, गतम्) इत्यनेन वचनेन निरुक्तेऽस्योल्लेखो विद्यते।

### ( IV ) आदिविपर्ययः

लोपेऽस्मिन् वर्णानामंशतः समीकरणमंशतश्च विषमीकरणं भवति। आचार्ययास्कः **"अथाप्यादिविपर्ययो भवति,** यथा ज्योतिः घन"[4] (√द्युत्>ज्योतिः; √हन्>घनः) इत्यनेन कथनेनैनं सङ्केतयति।

### ( V ) आद्यन्तविपर्ययः

ध्वनि-परिवर्तनमेतद् 'वर्णविपर्यय' इत्युच्यते। **"अथाप्याद्यन्तविपर्ययो भवति स्तोकः रज्जुः सिकता इति"**[5] उक्त्वा निरुक्ते यास्केन परिवर्तनमेतत् सङ्केतितम्, यथा- √श्नुत्>स्तोकः; √सृज्>रज्जुः; √कस्>सिकता, इत्यादयः।

### ( VI ) मध्यमस्वरागमः ( स्वरभक्तिः )

आचार्यो यास्कः परिवर्तनमेनं वर्णोपजनमिति कथयति।[6] यद्यपि ध्वनिपरिवर्तनमेतत् पदस्य मध्ये स्वरागमस्यैव विधानं करोति, परन्तु व्यञ्जनानामागमोऽप्यस्यान्तर्गते समाहितो विद्यत इति विद्वांसः स्वीकुर्वन्ति। यथा-√अस्>आस्थात्; √वृ>द्वारः; √भ्रस्ज्>भरूज अथवा स्वर्णः>सुवर्ण इत्यादयः।

---

1. नि., 2.1
2. वही, 2.1
3. वही, 2.1
4. वही, 2.1
5. नि, 2.1
6. वही, 2.1 : अथापि वर्णोपजनः आस्थात्, द्वारः, भरूजा इति।

### ( VII ) सम्प्रसारणम्

य्, व्, र् प्रभृत्यर्धस्वराणां स्थाने क्रमशः इ, उ, ऋ इति परिवर्तनं सम्प्रसारणमुच्यते।[1] ध्वनि-परिवर्तनस्यानेन विधिनाऽपि यास्कः पूर्णतः परिचित आसीत्। विषयेऽस्मिन् निरुक्ते प्रकारान्तरेण तेनोक्तं यद्यत्र स्वरादव्यवहितोऽन्तस्थवर्णाः (य्, र्, ल्, व्) धातोरन्तस्थिता विद्यन्ते, तत्र द्विप्रकृतीनां (शब्दानां) स्थानं भवति[2], यथा - इष्टिः (√यज्>इष्टिः); ऊतिः (√अव्>ऊतिः); मृदुः (√म्रद्>मृदुः); पृथुः (√प्रथ्>पृथुः) इत्यादयः।

अनेनप्रकारेण ध्वनि-परिवर्तनस्य विभिन्नाभिः रीतिभिः सुविज्ञो यास्कः स्वकीयनिरुक्त-वेदाङ्गस्य द्वितीयेऽध्याये विषयेऽस्मिन् सम्यग्तया निर्दिशति। आधुनिके भाषाविज्ञाने ध्वनिपरिवर्तनमेतत् द्विविधं विवेचितम् - (i) स्वयमुत्पन्नं परिवर्तनमथ च (ii) परोत्पन्नं परिवर्तनम्। आचार्यो यास्कः परिवर्तनमुभयं सोदाहरणं विवेचितवान्।

### रूप-विज्ञानम् ( Morphology )

शब्द-रचनाभाषाविज्ञाने विशेषं स्थानं भजते, यतो हि शब्दैरेव वाक्यरचना भवति, वाक्यस्य च सर्वाणि पदानि परस्परं संयोजयितुमेषु (शब्देषु) सम्बन्धतत्त्वस्यावश्यकता वर्तते, तदा ते (शब्दाः) वाक्येषु प्रयुज्य वाक्यार्थं प्रकाशयन्ति। एतस्मात्कारणादेव तेषु रूपपरिवर्तनं भवति। शब्दानां तेषां विभिन्नरूपाणामध्ययनमेव रूपविज्ञानमुच्यते। आचार्ययास्कस्य निरुक्तेऽपि तत्कालस्य विकसितरूपविज्ञानस्य परिचयः प्राप्यते।

निरुक्तवेदाङ्गे पदानां निर्वचनप्रसङ्गे तेषां प्रकृति-प्रत्ययरूपानवयवान् विभज्य, तेषामवयवानामर्थानुसारं समुदायरूपेण पदानामर्थावबोध उपदिष्टः। आचार्ययास्को नामाख्यातोप-सर्गनिपाताश्चेति चतुर्षु समुदायेषु शब्दानां वर्गीकरणं कृतवान्।[3] चतुर्ष्वेतेषु वर्गेषु सर्वे शब्दाः समाहिता विद्यन्ते। अल्पसंख्यातत्त्वादुपसर्गा निपाताश्च न केवलं तेन परिगणिताः, सम्यग् विवेचिताश्चापि।[4] रूप-परिवर्तनं परिभाषितुमाचार्ययास्केन 'व्ययमिति शब्दो। व्यवहृतः, अथ च येषु शब्देषु रूपपरिवर्तनं सम्भाव्यं, ते शब्दाः तेन दृष्टव्ययमिति पदेन सङ्केतिताः।[5] चतुर्वर्गेभ्योऽवशिष्टाः शब्दा अव्ययानि इत्यसौ स्वीकरोति। भाषायां प्रमुखं मन्यमानानां नामाख्यातपदानां (संज्ञाक्रियापदानां) रूपपरिवर्तनस्याधारः तेषु विद्यमानं सम्बन्ध-तत्त्वमेवास्ति। तदनुसारं लिङ्ग-वचन-कारकाण्याधृत्य संज्ञा-(नाम)-पदस्य विभक्तिनिर्माणमथ च क्रियापदस्य काल-वचन-पुरुषेत्येषां द्योतनमात्रमेव सम्बन्ध-तत्त्वस्य प्रमुखं कार्यं भवति।

---

1. अ., 1.1.45 : इग्यणः सम्प्रसारणम्।
2. नि., 2.2 :
   तद् यत्र स्वरादनन्तरान्तस्थान्तर्धातु भवति, तद् द्विप्रकृतीनां स्थानमिति प्रदिशन्ति।
3. नि., 1.1 : तद्यान्येतानि चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्च।; दष्टव्यः वही, 1.12 : इति इमानि चत्वारि ----।
4. वही, 1.3-11 पाद।
5. वही, 1.8 : तत्कथम् अनुदात्तप्रकृति नाम स्यात्? दृष्टव्ययं तु भवति।

यास्कस्य निरुक्त-ग्रन्थे संज्ञाशब्दान् प्रति सम्बन्धतत्त्वस्योपर्युक्तानि सर्वाणि कार्याणि सङ्केतितानि विद्यन्ते। ग्रन्थेऽस्मिन् स्थलेष्वनेकेष्वमुना शब्दतो विभक्तीना[1]मथ च वचनाना[2]मुल्लेखः कृतः। निरुक्तस्य सप्तमेऽध्याये तु सर्वा विभक्तय उल्लिखिताः सन्ति।[3] क्रियापदानां सम्बन्धतत्त्वस्य चर्चा स्फुटरूपेण निरुक्ते न दृग्गोचरीभवति, परन्तु प्रथम-मध्यम-उत्तमेति त्रयाणां पुरुषाणां नाम्नोल्लेख उपलभ्यते।[4] कालस्य विषये यद्यपि यास्को धृतमौनो दृश्यते, परं तेषां प्रयोगैः स्फुटं ज्ञायते यत् क्रियाया अस्य तत्त्वस्याप्यसौ विज्ञ आसीत्।

एतस्माद् व्यतिरिक्तं शब्दानां संयोगेन जातानां समस्तपदानां विषयेऽप्याचार्ययास्केन विचारितम्। स्पष्टतः तेन स्वीकृतं यत् शब्दरचना द्विविधा विद्यते - (i) प्रथमः धातोर्निष्पन्नाः शब्दाः (ii) द्वितीयश्च पूर्वनिष्पन्नशब्दैः पुनर्निष्पन्नाः शब्दाः। आचार्ययास्केनैते शब्दाः क्रमशः 'कृत्' - 'तद्धित' इत्यभिधानेनाभिहिता वर्तन्ते। तद्धितशब्दानामेतेषां निर्वचनविषयेऽसावतिसतर्कः प्रतिभाति, तस्मात्कारणात्तु समस्तपदानामेतादृशाणां निर्वचनार्थमनेन विधानमेकं सम्पादितं, यत् समास-विग्रहेणादौ पदानि पृथक्-पृथक् कृत्वा, तदा तेषां निर्वचनं कर्त्तव्यमिति।[5]

एवं शब्दानां वर्गचतुष्टयं, नामपदानां विभक्तिः, वचनमथ च क्रियापदानां पुरुष, इत्यादि-सम्बन्धतत्त्वेभ्यो जायमानानां कार्याणां सङ्केतं कुर्वताचार्ययास्केन तात्कालिकस्य रूप-विज्ञानस्य परिचयोपस्थापितः। वैयाकरणा अपि पदविभागादिभिः सर्वथाऽभिज्ञा आसन्। यद्यपि यास्ककृतस्य पदचतुष्टयस्य सङ्केत आचार्यपाणिनिना न कृतः, परन्तु तस्य सूत्रेषु सामान्यतया शब्दानां चत्वारो भेदा उपलभ्यन्ते। **"चत्वारि शृङ्गा त्रयोऽस्यपादाः"** (ऋ. 4.58.3) अपि च **"चत्वारि वाक् परिमिता पदानि"** (ऋ. 1.164.45) इत्यनयोर्मन्त्रयोर्व्याख्याप्रसङ्गे महाभाष्यकारेण पतञ्जलिनाऽपि पदानामेते चत्वारः समुदाया नामत उल्लिखिताः सन्ति।[6] **"चत्वारि वाक् परिमिता."** (ऋ. 1.164.45) इत्यस्य

---

1. वही, 1.17 :
   'दूतो निर्ऋत्या इदमाजगाम' - पञ्चम्यर्थप्रेक्षा वा षष्ठ्यर्थप्रेक्षा वा आः कारान्तम्।'
   परोनिर्ऋत्या आ चक्ष्व'- चतुर्थ्यर्थप्रेक्षा ऐकारान्तम्।
2. वही, 2.24 :
   अपि द्विवत अपि बहुवत्। तद्यत् द्विवत् उपरिष्टात् तद्व्याख्यास्यामः। अथ एतद् बहुवत।
3. वही, 7.1 : तत्र परोक्षकृताः सर्वाभिः नामविभक्तितभिः युज्यनते।
4. वही, 7.1 : प्रथमपुरुषैश्च आख्यातस्य।;
   वही, 7.2 : अथ प्रत्यक्षकृताः मध्यमपुरुषयोगाः।;
   वही, 7.2 : अथ आध्यात्मिक्यः उत्तमपुरुषयोगाः।
5. नि., 2.2 :
   अथ तद्धितसमासेषु एकपर्वसु च अनेकपर्वसु च पूर्वं पूर्वम् अपरमपरं प्रविभज्य निर्ब्रूयात्।
6. अष्टा., 1.1.1, पस्पशाह्निक : चत्वारि शृङ्गाणि-पदजातानि नामाख्यातोपसर्गनिपाताश्च।

मन्त्रस्य व्याख्यायामाचार्ययास्केनापि पदानां चतुर्षु वर्गेषु विभाजनमित्यस्मिन् विषये वैयाकरणानां मतमुद्धृतम्।[1] एवमेव पदानां चतुर्षु वर्गेषु विभाजनं नैरुक्ता वैयाकरणाश्चोभावेव स्वीकुर्वन्ति, यत् तत्कालीनरूपाविज्ञानस्य परिचयमुपस्थापयति।

## अर्थविज्ञानम् ( Semantics )

विज्ञानमेतत् शब्दार्थयोः स्वरूपमथ च तयोः पारस्परिकसम्बन्धान् विवेचयति। भारतेऽर्थतत्त्वस्याध्ययनमाचार्ययास्केनैव प्रवर्तते, यतो ह्यर्थविज्ञानमेव तस्य निरुक्तशास्त्रस्याधारभूमिः। विज्ञानमिदमाधृत्यैव तस्य निरुक्तमर्थमीमांसां प्रस्तौति। तदनन्तरं वैयाकरणानां, नैयायिकानां मीमांसकानां च दार्शनिक-विवेचनेन विज्ञानमेतत् प्रौढिं गतम्। सम्भवतः एतस्मात्कारणात् प्रथमेनार्थविदाचार्ययास्केन निरुक्तेऽथ च महावैयाकरणेनाचार्यपतञ्जलिना महाभाष्येऽतिगभीरैः शब्दैरिदमुक्तं, यदर्थविज्ञानविरहितं शब्दज्ञानं तथैव प्रतिभां कदापि प्रकाशयितुमक्षमं भवति यथा अग्न्यभावे शुष्कैन्धो नाग्निं प्रज्ज्वालितुं सक्षमो भवति।[2] तथ्यमेतत् प्रकारान्तरेणोपस्थापयताचार्ययास्केन पुनर्वैदिकऋषिसम्मतं मतमेतदभिव्यक्तं यदर्थतत्त्वसिद्धिं विना समग्रवेदानां ज्ञान-विज्ञानानां वाध्ययनं तथा निरर्थकं भवति, यथा वेदशास्त्रस्य शब्दभारहारस्य गर्दभरुपजनस्य शब्दभारवहनं व्यर्थं भवति। परन्त्वेतद् विपरीतमर्थतत्त्वविदो जनो ज्ञानेन स्वीयान् पापान् सर्वान् विनाश्य सर्वविधमङ्गलं प्राप्नोति, स्वर्गलोकञ्च गच्छति।[3] इतोप्यधिकमाचार्ययास्कस्य निरुक्तस्य तु वेदार्थप्रकाशनमेव प्रथमं प्रयोजनमस्ति,[4] अपि चार्थज्ञानं विना शब्दरचना, शब्दवर्णगतसंस्कारादीनां कार्यं कथमपि ज्ञातुं न शक्यत इति तस्य दृढो विश्वासः।[5]

शब्दानामर्थतत्त्वचिन्तने वचनद्वयस्यास्य विशेषतः महत्त्वं वर्तते - (i) प्रथमः केनचिच्छब्देन कस्यचिन्निश्चितार्थस्य बोधनम् (ii) द्वितीयश्चार्थस्य परिवर्तनमिति। अनयोर्वचनयोः प्रथमस्य ज्ञानमाचार्ययास्कस्य 'निघण्टु' इत्यस्य शब्दस्य निर्वचनेनैव प्राप्तुं शक्यते।[6] इतोप्यधिकं यास्कप्रदत्तानि प्रायः सर्वाणि निर्वचनान्यस्योदाहरणानि सन्ति, यतोहि

1. नि., 13.9 : नामाख्याते चोपसर्गनिपाताश्चेति वैयाकरणाः।
2. नि., 1.18 :
   यद् गृहीतमविज्ञातं निगदेनैव शब्द्यते।
   अनग्नाविव शुष्कैंधो न तज्ज्वलति कर्हिचित्।।
3. वही, 1.18 :
   स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्यम्।
   योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाम्पा।।
4. वही, 1.15 : अथापीदमन्तरेण मन्त्रेष्वर्थप्रत्ययो न विद्यते।
5. वही, 1.15 : अर्थमप्रतियतो नात्यन्तं स्वरसंस्कारोद्देशः।
6. वही, 1.1 :
   निघण्टवः कस्मात् निगमा इमे भवन्ति-।
   निगन्तव एव सन्तो निगमनात् निघण्टव उच्यन्ते इत्यौपमन्यवः।

शब्दाः धातुभिः सम्बद्धा विद्यन्तेऽथ च धातोरेवार्थं धारयन्ति (-अर्थधारका भवन्ति)। आचार्ययास्कस्य मते निर्वचनपद्धतिस्तु शब्दानां व्याख्याया एकं साधनमेवास्ति। 'कस्यचिदपि शब्दस्य मूले कश्चिद् धातुर्भवति, अपि च धातुना सह पदार्थस्यानेकविधः सम्बन्धो भवितुं शक्यत' इति तस्य प्रमुखः सिद्धान्तः। एतस्मात्कारणादसौ शब्दस्य मूले विद्यमानायाः क्रियाया (धातोः) विभिन्नान् पक्षानक्षिलक्ष्यीकृत्य तस्य (शब्दस्य) विभिन्ना व्याख्याः स्युरित्युचितममन्यत तदनुसारं च व्याख्या अपि कृतवान्। उदाहरणार्थं गौरादित्य-द्यु-आदि-नामपदानां निर्वचनानि द्रष्टव्यानीति।[1] शब्दानामनेकानामितरेतरयोः प्रविष्टेनाप्येनकशो नूतनाः शब्दाः संरच्यन्ते। आचार्ययास्कः तेषां पृथक्-पृथगवयवानामवबोधनेऽपि समर्था आसीत्। एतदर्थम्-असुरः (3.8) किमीदिन् (6.2), कीकटः (6.32), श्मश्रुः (3.5) इत्यादीनां शब्दानां यास्ककृतानि निर्वचनानि द्रष्टव्यानि सन्ति।

भाषाविज्ञानेनार्थपरिवर्तनस्य त्रिस्रोऽवस्थाः निश्चिताः कृताः - (1) संकोचनम्, (2) विस्तारणमथ च (3) पूर्णपरिवर्तनम्। आचार्ययास्केन विषयेऽस्मिन् स्फुटरूपेण किमपि नोक्तम्, परन्तु निरुक्ते तेनार्थपरिवर्तनस्य कारणानि पदे-पदे सङ्केतितानि। तस्याभिमते रूपकमुपमा (सादृश्यं) तद्धितप्रयोगश्चेत्येतान्येवार्थपरिवर्तनस्य प्रमुखानि कारणानि सन्ति। एतदर्थं सादृश्याय 'कक्ष्या' (अश्वस्य रसनेति) - इत्यनेन शब्देनाश्वस्य कक्षेन संलग्नभूत-त्वादस्यौपम्येन मनुष्यस्य कक्षवाचकः 'कक्ष'-शब्दस्यार्थो[2]ऽपि च पशोः चतुर्णां पादानां सादृश्येन चतुर्थभागस्य द्योतकः 'पाद'-शब्दस्यार्थो द्रष्टव्यः।[3] एवमेव तद्धितप्रयोगे 'गौ' इत्यस्य शब्दस्य-पृथ्वी-गो-गोदुग्ध-गोचर्म-धनुर्ज्या-इत्यादयोऽर्था अस्योदाहरणरूपेण द्रष्टुं शक्याः। पूर्णार्थपरिवर्तनस्य कृतेऽस्योदाहरणरूपेण 'गौ' इत्येतमेव शब्दं ग्रहीतुं शक्यते, यदानेन सूर्यस्य, चन्द्रमसः रश्मीणामुत वा सर्वविधानां रश्मीणामवबोधो भवति।[4] इतोप्यधिक-माचार्य यास्केन कस्यापि शब्दस्यार्थद्वय उत्कर्षस्यापकर्षस्य चापि चर्चा कृता। एतदर्थे 'कुचरः' इत्यस्य शब्दस्य ज्ञेन कृता व्याख्या द्रष्टव्या वर्तते, यत्रोभयोरर्थयोः (उत्कर्षाप-कर्षयोः) समावेशः कृतोऽस्ति। वन्यपशोर्वाचके कुचरशब्दे तु 'कु' इत्यस्यार्थः कुत्सित एवास्ति, परन्तु देवताया वाचके कुचरशब्दस्य **"क्वायं न चरति"** इत्यर्थः कुर्वन्नत्र 'कु' इत्यस्य 'क्व' इत्यस्मिन् रूपे विकासो जातः, य उत्कर्षाभिधायको वर्तते।[5] एवमेव निरुक्तस्य सप्तमेऽध्याये 'जातवेदस्' वैश्वानरश्चानयोर्यथार्थान्वेषणेऽपि आधुनिकानुसन्धानस्य

---

1. द्रष्टव्य, नि., 2.5, 2.6 (गौ); 2.13 (आदित्य); 1.6 (द्युः)।
2. नि., 2.2 :
   कक्ष्या रज्जुः अश्वस्य। कक्षं सेवते।---- तत्सामान्यात् मनुष्यकक्षः बहुमूलसामान्यात् अश्वस्य।
3. वही, 2.7 : --पशुपादप्रकृतिः प्रभागपादः। प्रभागपादसामान्यात्--।
4. द्रष्टव्य, नि., 2.6-7; 2.14 आदि।
5. नि. 1.20 :
   कुचरः इति चरतिकर्म कुत्सितम्। अथ चेत् देवताभिधानं, क्व अयं न चरति इति।

नियमानां प्रयोगं कुर्वताचार्ययास्केनानयोर्वास्तविकार्थः पार्थिवाग्निरिति निश्चितः।[1] एवं सम्पूर्णनिरुक्तस्यालोडनेनार्थविज्ञानविषयकान्यनेकानि मूलभूततथ्यानि प्रकाशन्ते।

एवमाचार्ययास्कस्य निरुक्तग्रन्थे विवेचितानां भाषाविज्ञानविषयकानामुपर्युक्तानां विभिन्न-तत्त्वानां परिशीलनेन स्फुटं प्रतिभाति यत् सिद्धान्तदृशाथच व्यवहारदृशापि तेन ध्वनिविज्ञानस्य वैज्ञानिकं विश्लेषणं कृतम्। अनेनेत्थं प्रतीयते यत्तस्मिन् सुदूरे कालेऽपि यास्कः आधुनिक-भाषा-विज्ञानस्य मूलभूतसिद्धान्तैः पूर्णतया सुपरिचित आसीत्। अस्मिन् विषये तस्य ज्ञान-माधृत्य कथनमेतदतिशयोक्तिपूर्णं न भविष्यति यद् भाषाविज्ञानस्य निर्वचनपद्धतिः निरुक्तस्यास्य विषयस्यैकस्याङ्गस्य शब्दनिर्वचनस्यैव विस्तारः प्रतीयतेऽथ च भाषाविज्ञानस्यार्थविज्ञानपद्धति-र्निरुक्तस्यापरस्याङ्गस्यार्थनिर्वचनस्यैव विस्तारः प्रतिभाति, ययोः संहितासु, ब्राह्मणादिषु ग्रन्थेषूपलब्धशब्दार्थबोधस्य पद्धतिमवलम्ब्य सिद्धान्तरूपेणोपस्थापना कृता विद्यते। भाषाविज्ञानस्य विविधध्वनिनियमा अपि यास्कस्य वर्णागम-वर्णविकारादिध्वनिनियमानामेव युगानुकूलं व्यापको विस्तार इति प्रतीयन्ते। वस्तुतस्तु भाषा-विज्ञानविषयकस्याचार्ययास्कस्यास्य ज्ञानस्यालोक इदमपि वक्तुं शक्यते यद् भाषायाः परिवर्तनस्य विकासस्य चैतस्मादधिकं स्फुटं वैज्ञानिकञ्चोदाहरणं तस्मिन् युगे सर्वथालभ्यमासीदित्यलमतिविस्तरेण।

1. द्रष्टव्य, नि. 9.19-22 (खण्ड)।

ISSN : 0975-1769

# अन्योन्याश्रयदोषः तत्परिहारोपायः

**- डॉ. प्रदीपकुमार-पाण्डेयः**

सहायकाचार्य, राष्ट्रियसंस्कृतसंस्थानम्,

भोपालपरिसरः, मध्यप्रदेशः

**अस्मिन् शोधपत्रे 'हलन्त्यम्' इति सूत्रप्रसङ्गे समागतस्य अन्योन्याश्रयदोषस्य ( सिद्धान्तकौमुदी-प्रौढमनोरमा-लघुशब्देन्दुशेखर-महाभाष्यमादाय ) निवारणं सविशदं कृतमिति।**

लक्ष्यते ज्ञायतेऽनेनेति व्युत्पत्या लक्षधातोः करणे ल्युट्प्रत्यये कृते सति निष्पद्यते लक्षणशब्दः। लक्ष[1] धातुश्चार्थद्वयं विद्यते। दर्शनार्थे, अङ्कनार्थे च। तत्र दर्शनरूपमर्थमादायैव निष्पाद्यो लक्षणशब्दः। दर्शनञ्चात्र ज्ञानम्। ज्ञानं द्विविधं सामान्यविशेषयोर्भेदात्। तत्र ज्ञान-सामान्यमेव विवक्ष्यते। अतो फलति यत् येन कस्यचित्पदार्थो लक्षितो भवति तल्लक्षणम्। अथवा व्यवहारनियामकं लक्षणम्। अथवा ज्ञानजनकज्ञानविषयत्वं लक्षणत्वम्।[2] परञ्च स एव नियमः लक्षणपदवाच्यो भवति यो दोषशून्यो भवति। लक्षणस्याव्याप्त्यादयः नव दोषाः भवन्ति। तेषु दोषेष्वन्योन्याश्रयोप्येको दोषः। सः दोषोऽपि यदि लक्षणे भवति तदा तल्लक्षणं न ज्ञानजनकं भवति।

### अन्योन्याश्रयदोषस्वरूपम्

अन्योन्याश्रयदोषस्वरूपज्ञानाय आचार्यबद्रीनाथशुक्लमहोदयेनोक्तं यत्–परस्परापेक्षत्व-मन्योन्याश्रयत्वम्। अर्थात् ज्ञातव्यविषयद्वयस्य स्वज्ञानाय परस्परज्ञानसापेक्षतेति। शास्त्रीय-भाषायामस्य स्वरूपं विद्यते यत् स्वग्रहसापेक्षग्रहसापेक्षग्रहविषयत्वम्[3]। यथा केनचित् गौर्लक्ष्यते यत् सास्नादिमान् गौः, पुनश्च सास्नाज्ञानाय लक्षणं कृतं यत् गोगललम्बकायचर्म-पुटकम्। अत्र हि गोवृत्तिसास्नालक्षणमन्योन्याश्रयदोषग्रस्तो भवति। यतोह्यत्र ज्ञातव्यद्वयम्। एका लक्ष्यभूता गौः, अपरा लक्षणभूता सास्ना। एतयोः सास्नाज्ञानं गोज्ञानमपेक्षते, गोर्लक्षणत्वात्।

1. चुरादिगणपठितधातुसंख्या 1538.
2. (लघुशब्देन्दुशेखरः) "इत्थं भूतलक्षणे" सूत्रस्य, अभिनवचन्द्रिका टीका।
3. माथुरीपञ्चलक्षणी पं बद्रीनाथशुक्लकृत-भूमिका पृष्ठसंख्या 203, प्रकाशकः राजस्थानम् हिन्दीग्रन्थअकादमी, जयपुरप्रकाशनम्संस्करणम् 1984

गोज्ञानञ्चापेक्षते सास्नाज्ञानम्। सास्नालक्षणे गोर्प्रविष्टत्वात्। लक्षणसमन्वय इत्थम्- स्व सास्ना तद्ग्रहसापेक्षज्ञानं तद्गोज्ञानसापेक्षज्ञानविषयतासास्नायाम्। एवमेव सास्नाज्ञाने गोज्ञानमपेक्षते। अतोऽत्रान्योन्याश्रयः। अर्थात् परस्परसापेक्षज्ञानदशायामन्योन्याश्रयो भवति। तत्र ज्ञातव्यविषय-योरेकस्य ज्ञाने जाते दोषस्य परिहारो भवति। परस्परापेक्षत्वमन्योन्याश्रयत्वम्। स्वज्ञप्त्यधीन-ज्ञप्त्यपेक्षत्व-स्वज्ञानाधीनोत्पत्तिकापेक्षत्वान्यतरवत्वमन्योन्याश्रयत्वम्[1]। अपरमपि लक्षणम्, स्वज्ञान-धीनज्ञानाधीनज्ञानविषयत्वम्[2]। अयञ्च दोषः स्थलत्रये भवति ज्ञाने, उत्पत्तौ, स्थितौ च। तत्रोत्पत्तिस्थितविषये विवेचनात्प्राक् ज्ञानस्थलीयमुदारहरणं विवेचयामि। ज्ञानस्थलीयमुदाहरण-मादाय दोषस्यास्योल्लेखो महाभाष्यकारेण बहुषु स्थलेषु सूत्रेषु वा उद्भावितः परिहारश्च कृतः। यथा "हलन्त्यम्[3]" इति सूत्रे "हलन्त्यम्" इति सूत्रे कथमन्योन्यश्रयदोष आगतः तत्परिहारश्च कथं जात इति विचारात्प्राग्लक्षणदोषः सूत्रे कथमागत इति विचार्यते। इदन्तु सत्यं यत् लक्ष्यैकचक्षुष्कैः लक्ष्यं दृष्ट्वा लक्षणैकचक्षुष्कानां ज्ञानाय लक्षणस्य कल्पना कृता। अत एव व्याकरणशास्त्रप्रयोजनेषु साधुशब्दज्ञानमेव मुख्यप्रयोजनमुक्तम्। अतः साधुशब्दज्ञानं लक्ष्यम्, तल्लक्ष्यज्ञानाय पाणिनिना सूत्राणि रचितानि। तस्मात् सूत्रं लक्षणमिति सिद्धम्। उक्तमपि व्याकरणपदार्थविचारप्रसङ्गे "लक्ष्यलक्षणे व्याकरणम्, लक्ष्यं च लक्षणं चैतत् समुदितं व्याकरणं भवति। किं पुनर्लक्ष्यम्, किं वा लक्षणम्। शब्दो लक्ष्यः सूत्रं लक्षणम्[4]। भाष्यकारेण कण्ठरवेणोक्ते सति सूत्राणां कृते लक्षणव्यवहारो भविष्यति न वेति विचारस्यानावश्यकं मत्वा परित्यज्यते। "ज्ञानजनकज्ञानविषयत्वं लक्षणत्वम्[5]" इति लक्षणस्य यल्लक्षणं वर्तते तस्यापि सूत्रेषु समन्वयेन सूत्राणां कृते लक्षणत्वव्यवहारः कर्तुं शक्यते।

एतावत्पर्यन्तं मया साधितं यत् सूत्राणां कृतेऽपि लक्षणशब्दव्यवहारः। अधुना विचार्यते यत् "हलन्त्यम्[6]" इति लक्षणेऽन्योन्याश्रयदोषः कथमागतः तत्परिहारोपायाः के सन्ति। वैयाकरणसिद्धान्तकौमुद्यामुक्तं यत् "एषामन्त्या इतः[7]" अस्य वाक्यस्येदमेव तात्पर्यं यत् चतुर्दशसूत्रेष्वन्त्यहल्वर्णानामित्संज्ञा भवति किन्तु तत्रेयं जिज्ञासा समुदेति यत् केन सूत्रेणैषां हल्वर्णानामित्संज्ञा जायते, अस्यां जिज्ञासायाम् उपदेशेऽन्त्यं हलिदित्यर्थकम्

---

1. वैय्याकरणभूषणसारः, धात्वर्थप्रकरणप्रभाटीका पृष्ठसंख्या 99, तृतीयसंस्करणम् प्रकशनम् वि.सं. 2063 प्रकाशकः चौखम्भासंस्कृतसंस्थानम्
2. वैय्याकरणभूषणसारः, धात्वर्थप्रकरणम् नरसिंहप्रियाटीका, लेखकः कन्दालवेंङ्कटरामकृष्ण-माचार्यः, प्रथमसंस्करणम् 2015. प्रकाशकः सोमनाथसंस्कृतविश्वविद्यालयः सोमनाथगुर्जरः
3. पा.सू. 01/03/03
4. पस्पशाह्निकमहाभाष्यम्, पृष्ठसंख्या 66, आचार्यमधुसूदनप्रसादमिश्रप्रणीत-व्याख्या, प्रकाशकः चौखम्बाविद्याभवनम्, संस्करणम् 1999
5. (लघुशब्देन्दुशेखरः) "इत्थं भूतलक्षणे" सूत्रस्य, अभिनवचन्द्रिका टीका
6. पा.सू. 01/03/03
7. वैय्याकरणसिद्धान्तकौमुदी-संज्ञाप्रकरणम्, पृ. संख्या 05, प्रकाशकः चौखम्भासुरभारती, पुनर्मुद्रितः सन् 2012

"हलन्त्यम्[1]" इति सूत्रं समुपस्थितं भवति। किन्तु वाक्यार्थज्ञाने पदार्थज्ञानं कारणमिति रीत्या हल्पदार्थबोधं विना "हलन्त्यम्" इति वाक्यजन्यवाक्यार्थबोधो न भवितुमर्हति, अतो वाक्यार्थबोधाय हल्पदार्थज्ञानमावश्यकम्। हल्पदार्थत्वेन च त्रिविधः प्रसिद्धः। 'हल्' इति लेखनार्थकः धातुः[2] हलिति चतुर्दशसूत्रम्[3] व्यञ्जनानि च। तत्र सूत्रे हल्पदेन विलेखनार्थकधातोः चतुर्दशसूत्रस्य वा न कर्तुं शक्यते। "न विभक्तौ तुस्माः[4]" इति सूत्रस्य वैय्यर्थप्रसङ्गात्। यतोहि सूत्रमिदं विभक्तिस्थानां सकारतवर्गमकाराणामित्संज्ञां निषेधयति। परन्तु प्राप्तौ सत्यां निषेधः इति सिद्धान्तेनेत्संज्ञायाः प्राप्तिः केनापि सूत्रेण निश्चप्रचमेव वक्तव्या। यदि "हलन्त्यम्" सूत्रघटकहल्पदेन धातोः सूत्रस्य वा ग्रहणं स्यात् तदा एतयोरेवान्यत्यस्य हल्वर्ण-स्येत्संज्ञाप्राप्तिसत्वेन सकारमकारतकारणामित्संज्ञायाः प्राप्त्यभावेन तन्निषेधार्थकस्य "न विभक्तौ तुस्माः" इति सूत्रस्य वैय्यार्थापत्तिरेव स्यादतः तत्सार्थक्याय 'हलन्त्यम्' इति सूत्रे हल्पदेन व्यञ्जनानामेव ग्रहणं वक्तव्यम्। तादृशो बोधश्च हल्पदे व्यञ्जननिरूपितशक्तिज्ञानमन्तरा न सम्भवति। शाब्दबोधं प्रति शक्तिज्ञानं कारणमिति सिद्धान्तस्य सर्वसम्मतत्वात्। हल्पदे तादृशशक्तिज्ञानञ्च "अन्त्येनेता साहितादिर्मध्यगानां स्वस्य चेत्संज्ञेत्यर्थकेन आदिरन्त्येन सहेता[5]" इति सूत्रेणैव साध्यते। एवञ्च हल्पदार्थज्ञानम् 'आदिरन्त्येन सहेता' इति सूत्रार्थ-बोधं विना न सम्भवति। परन्तु "आदिरन्त्येन सहेता" इति सूत्रस्य वाक्यार्थबोधात्पूर्वमित्पदार्थ-ज्ञानमपेक्षितम्। इत्पदनिष्ठशक्तिज्ञानञ्च "हलन्त्यम्" इति सूत्रवाक्यार्थज्ञानाधीनम् एवञ्च यदा लकारस्येत्संज्ञा स्यात् तदा हल्प्रत्याहारसिद्धिः। यदा च हल्प्रत्याहारसिद्धिः तदेत्संज्ञाज्ञानम्। अनेन प्रकारेण हल्पदार्थज्ञानाधीनमित्पदार्थज्ञानम्। इत्पदार्थज्ञानाधीनञ्च हल्पदार्थज्ञानमिति परस्परापेक्षत्वरूपान्योन्याश्रयदोषः "हलन्त्यम्" इति सूत्रे आपतति। अस्यान्योन्याश्रयदोष-परिहारायेमान्नुपायान् प्रदर्शितवन्तः आचार्याः। 01-एकदेशस्यावृत्तिः। 02-तन्त्रम्। 03-एकशेषः 04-हलन्त्यम् इति सूत्रे समाहारद्वन्द्वस्वीकरणम्। 05-योगविभागः 06-सहेताशब्दार्थ-परिवर्तनम्, 07-हलन्त्यम्, इति सम्पूर्णसूत्रस्यावृत्तिः। मुख्यतया सप्त उपायाः विवेचिताः सन्ति, अन्योन्याश्रयदोषपरिहाराय। एषूपायेषु पञ्च उपायाः दीक्षितैः विवेचिताः। अन्ये उपायाः नागेशेन दर्शिताः सन्ति। तत्र युक्तायुक्तत्वं विवेचयामि।

**01 एकदेशस्यावृत्तिः-**

इदं तु सत्यं यदन्योन्याश्रयदोषस्थले ज्ञातव्यविषयद्वयमध्ये पदार्थद्वयमध्ये वा यदैकस्य ज्ञानं भवति तदा तद्दोषस्य परिहारो जायते। यथा मया गोर्लक्षणस्थले प्रदर्शितम्। प्रकृतेऽपि 'हलन्त्यम्' इति सूत्रघटकहल्पदस्यावृत्तिर्क्रियते। आवृत्ते हल्पदे हस्य लेति विग्रहं कृत्वा

---

1. 01/03/03
2. वैय्याकरणसिद्धान्तकौमुदीभ्वादिगणपठितधातुः, धातुसंख्या 837
3. चतुर्दशमाहेश्वरसूत्रम्
4. पा. सू. 01/03/04
5. 01/01/71

समासञ्च विधाय हल्पदोत्तरषष्ठ्याः समीप्यार्थकत्वं स्वीकृत्य हसमीपो यो ल् स इत्संज्ञकः इत्यर्थस्वीकारे हल्चतुर्दशसूत्रघटकस्य लकारस्येत्संज्ञायां जातायामित्पदार्थज्ञाने सति हल्पदार्थ-बोधः, एवं सति नास्त्यन्योन्याश्रयदोषः।

### 02 एकशेषः-

'हलन्त्यम्' इति सूत्रघटकहल्पदे एकशेषः स्वीक्रियते। अर्थात् हल् च हल् च इति हल्। अत्रैकं हल्पदं चतुर्दशसूत्रबोधकम्। द्वितीयं हल्पदं प्रत्याहारस्य बोधकम्। अत्र प्रथमं हल्पदं तस्य हल्त्वेत्याकारकानुपूर्वीबोधकत्वे कथमन्योन्याश्रयस्य परिहार इत्युच्यते-हलन्त्यम्' इति सूत्रे एकशेषस्वीकारे सूत्रस्यार्थद्वयं सम्पद्यते। तत्र प्रथमोऽर्थो भवति यत् हकारोत्तरवर्त्य-कारोत्तरवर्त्ती हलत्वरूपा या हलत्वेत्याकारकानुपूर्वीबोधकः हलिति शब्दः तस्यान्तस्येत्संज्ञा। यत अन्ते लकार एव वर्तते अतः लकारस्येत्संज्ञा भविष्यति। तस्येत्संज्ञायां जातायां हल्पदार्थज्ञानं सुतरामेव जायते, हल्पदार्थज्ञाने जाते सति भवत्यन्योन्याश्रयदोषपरिहारः।

### 03 तन्त्रम्-

तन्त्रेणाप्यन्योन्याश्रयदोषस्य परिहारो भवितुमर्हति। यतोहि तन्त्रत्वं नाम सकृदुच्चरितत्वे सति, अनेकार्थबोधकत्वम्। यथा अक्षान् पश्य इत्यत्र, अक्षशब्दः देवनाक्षरथाक्षविभीतिकाक्षाणां बोधकः तथा प्रकृतेऽपि हल्शब्दस्य हल् रूपान्त्यमिद्भवति, हलः अन्त्यमिद्भवतीत्युभयार्थ-परत्वे परिहारसम्भवात्।

### 04 समाहारद्वन्द्वः-

'हलन्त्यम्' इति सूत्रे समाहारद्वन्द्वस्वीकारेणापि, अन्योन्याश्रयदोषपरिहारसम्भवः। यथा हल्च ल् चेति समाहारद्वन्द्वः। समाहारद्वन्द्वे एकस्य लकारस्याधिक्येऽपि संयोगान्तलो-पात्तन्निर्देशासङ्गतिः। "द्वन्द्वादौ द्वन्द्वमध्ये द्वन्द्वान्ते च श्रूयमाणं पदं प्रत्येकमभिसम्बद्ध्यते" इति न्यायेनान्त्यपदार्थस्य प्रत्येकेन हल्पदार्थेन सहान्वयः। तथा च भवति सूत्रार्थो यत् उपदेशेऽन्त्यं ल इत् भवति। उपदेशेऽन्त्यं हलिति भवति। एवं रीत्यापि इत्पदार्थज्ञानं सम्भवति।

### 05 योगविभागः-

"हलन्त्यम्" "उपदेशेऽजनुनासिकः इत्[1]" इति सूत्रद्वयस्थाने 'उपदेश इदन्त्यम्' अच अनुनासिकः' इति सूत्रकरणेऽपि हल्पदार्थज्ञानसम्भवे, अन्योन्याश्रयदोषपरिहारसम्भवात्। तच्चेत्थम् यदा 'हलन्त्यम्' इति सूत्रस्य उपदेशेऽन्त्यम् इत् भवतीत्यर्थो जायते तदैव इत्पदार्थ-ज्ञानाय 'आदिरन्त्येन सहेता' इति सूत्रस्यावश्यकता जायते। किन्तु यदा विभक्तेषु सूत्रेषु हल्पदमेव न विद्यते तदा तज्ज्ञानस्यावश्यकतायाः अभावादन्योन्याश्रयदोषस्य प्रश्न एव नास्ति।

---

1. पा. सू. 01/03/02

### 06 सहेता शब्दार्थपरिवर्तनम्-

पाणिनिपठितन्यासेऽपि अन्योन्याश्रयदोषो नास्ति। यतोहि सः दोषो तदैवागच्छति यदा 'आदिरन्त्येन सहेता' इति सूत्रे इत्पदमित्संज्ञापरम्। किन्तु सहेतृशब्दात् निष्पन्नं प्रथमैकवचनस्य यद्रूपं सहेतेति सः योगरूढ्या मध्यमवर्णबोधकः। सहेताशब्दस्य मध्यमवर्णबोधकत्वस्वीकारे सः दोषो नास्ति। सहेताशब्दो मध्यमवर्णबोधक एवं रीत्या भवति। कटीधातोरथवा वी-धातौ प्रश्लिष्टो य इकारः तस्मादिकारात् तृच्प्रत्यये गुणे च कृते सति एतृशब्दो निष्पद्यते। ततः आ सह इत्युभयसम्बन्धे सति सह+आ+एतृ ति जाते "एङि पररूपम्[1]" इति सूत्रेण पररूपे सह+एतृ इति जाते "ओमाङोश्च[2]" इति पररूपे सति निष्पद्यते सहेतृशब्दः। सहेतृशब्दस्य प्रथमैकवचने सहेता शब्दो भवति। अत्र हि 'ओमाङोश्च' इति पररूपाय मध्ये आङ्पदस्य सन्निवेशः कर्तव्यो भवति। अन्यथा "वृद्धिरेचि[3]" इति सूत्रेण वृद्धिः स्यात्। न च अध्ययनार्थकाद् इङ् धातोः स्मरणार्थकाद् इक् धातोश्चापि तृच्प्रत्यये कृते सति एतृशब्दस्य साधुत्वं भवितुं शक्नोति किमर्थं धातुद्वयं परित्यज्य प्रश्लिष्टार्थकः ई-धातुः गृहीतः इति वाच्यम्, पूर्वयोः अधिपूर्वकस्यैव नित्यप्रयोगात्परित्यागः।

### 07 हलन्त्यम्" इति सम्पूर्णसूत्रावृत्तिः-

हलन्त्यम्' इति सम्पूर्णसूत्रावृत्तावप्यन्योन्याश्रयदोषस्य परिहारो भवितु शक्नोति। तच्चेत्थम्, एकं सूत्रं पाणिनिना पठितम्, तस्यैव हलन्त्यम् इति सूत्रस्यावृत्तिः क्रियते, आवृत्तस्य 'हलन्त्यम्' सूत्रस्यार्थो भवति यत् हलिति सूत्रे अन्त्यमिति भवति। उपदेशापदानुवृत्तिसामर्थ्यात्। हल्प्रत्याहरज्ञानाभाव उपदेशदशायां हल्त्वेत्याकारकानुपूर्वीबोधकः हल् इति चतुर्दशसूत्रमेवास्ति, अतः तस्यान्त्यस्य लकारस्येत्संज्ञायामित्पदार्थज्ञानं जायते, एवं सति नास्त्यन्योन्याश्रयदोषः।

नन्वेतावत्पर्यन्तं मया अन्योन्याश्रयदोषस्य परिहाराय ये उपायाः तद्तद्ग्रन्थे वर्णिताः सन्ति, तेषां विवेचनं कृतम्। इदानीं तेष्वुपायेषु कः उपायः समुचित इति विविच्यते।

### 01 एकदेशस्यावृत्तिः-

अन्योन्याश्रयदोषपरिहारोपायेषु प्रथम उपायः एकदेशस्यावृत्तिः। यैः हलन्त्यम् सूत्रघटकस्य हल् इत्येकदेशस्यावृत्तिं विधाय हल्पदे हस्य ल् इति षष्ठीसमासं विधाय हपदोत्तरषष्ठ्याः सम्बन्धोऽर्थः इति स्वीकृत्य ह समीपो यो ल् सः इत् इत्यर्थं विधाय इत्पदार्थस्य ज्ञानं कृत्वा अन्योन्याश्रयदोषस्य परिहारः कृतः स न समीचीनं प्रतिभाति। षष्ठ्याः समीप्यार्थकत्वाभावात् षष्ठ्याः समीप्यार्थाभावे तदर्थबोधायान्तरादिपदाध्याहारे तेन सह हपदस्यान्वये सति ययोः पदार्थयोः समासो विवक्षितः तयोः परस्परान्वयाभावेन परस्परान्वयित्वरूपसामर्थ्याभावात्

1. पा. सू. 06/01/94
2. पा. सू. 06/01/95
3. 01/01/01

समासासम्भवः। असमर्थसमासकल्पनायां गौरवः। उक्तञ्च प्रौढमनोरमायाम्-आद्ये समासस्य क्लिष्टत्वादिति[1]। मध्यमपदलोपिसमासे सौत्रत्वाद्वा समासकल्पने महद्गौरवम्। यतोहि मध्यमपदरलोपिसमासं विना छान्दसत्वाद्वा इति कल्पनां विना यद्यन्योन्याश्रयदोषस्य परिहारः सम्भवति तदा कल्पनायाः निर्थकत्वात्।

**षष्ठ्यर्थसम्बन्धखण्डनम्-**

वादी भद्रं न पश्यतीति रीत्या यदि कश्चन षष्ठ्यर्थः सम्बन्धः स्वीक्रियते तत्तु सर्वथाऽसम्भवः, यतोहि व्याकरणशास्त्रे दर्शनान्तरीयसिद्धान्तमिव विभक्त्यर्थविषये मतद्वयम्। विभक्त्यर्थः प्रकारतया भाषत इत्येकः पक्षः। संसर्गत्वेन भाषत इति द्वितीयः पक्षः। तत्र षष्ठीविभक्तेरर्थः सम्बन्धो भवति ते चैकशतं भवन्ति। एकशतं षष्ठ्यर्थाः[2] इत्युक्तत्वात्। एकशतं षष्ठ्यर्थत्वेऽपि सामीप्याद्यर्थो न भवति तत्र का वाचो युक्तरिति जिज्ञासायामुच्यते प्रौढमनोरमायाम् "नहि ब्राह्मणकम्बलः इत्यादौ ब्राह्मणसमीपवर्ती-अन्यदीयः कम्बलः प्रतीयते, न वा चित्रगुशब्दात् चित्रगवीणां समीपवर्त्ती वृक्षादिः प्रतीयते। अत एवान्तरादिषु न समास अनभिधानादिति स्पष्टमाकरे, किं बहुना ब्राह्मणस्य कम्बलः चित्रा गावोऽस्येति व्यस्तप्रयोगोऽपि तत्रानिष्टः। निखिलमनोरमाग्रन्थोऽयं षष्ठ्याः समीप्यार्थखण्डनपरः। अस्येदं तात्पर्यं यत्- यथा राजपुरुष इत्यत्र राज्ञः पुरुषः इति षष्ठीसमासनिष्पन्नराजपुरुषशब्दजन्यबोधे राज्ञः स्वामित्वं पुरुषे च स्वत्वमेव प्रतीयते तथा ब्राह्मणकम्बल इत्यत्रापि षष्ठ्या स्वस्वामिभाव-सम्बन्ध एव प्रतीयते न तु सामीप्याद्यर्थः। एवमेव चित्रा गावोऽस्येति विग्रहे निष्पन्नचित्र-गुशब्देन चित्राभिन्नगोस्वामिकः पुरुषः, इत्येवार्थो लोके प्रतीयते न तु समीपवर्त्ती वृक्षादिः। अनया रीत्या षष्ठ्याः समीप्यार्थो न भवति। ननु 'अस्तेर्भूः[3]' इति सूत्रभाष्ये अस्तेरिति षष्ठीपदमुच्चार्याशङ्कितं यत् अस्तेरन्तरे 'भू' इति भवति समीपे वा' षष्ठ्याः सम्बन्धाभावे सन्देहप्रतिपादनपरकभाष्यासङ्गतिरिति चेन्न, तत्रस्थभाष्यस्येदमेव तात्पर्यं यत्, अस्तेरिति षष्ठीपदान्तरम्, अन्तरपदाध्याहारेण तन्निरूपितो यः सम्बन्धो निरूप्यनिरूपकभावः तदर्थिका षष्ठी, अथवा स्थानपदाध्याहारेण तन्निरूपितसम्बन्धार्थिका षष्ठीति। न च स्थानपदं षष्ठ्यर्थ एव अतः तत्प्रतिपत्तय अध्याहारो नावश्यकः इति वाच्यम्। स्थानेन योगो यस्याः इति व्यधिकरणपदकबहुव्रीहिप्रदर्शनपरभाष्यात् स्थानरूपः सम्बन्धो न षष्ठ्यर्थः। अन्यथा स्थानं योगो यस्या इत्येव वदेत् किन्तु तथा नोक्तम्, अतः स्थाननिरूपितो यः सम्बन्धो निवर्त्य-निवर्तकभावः स एव षष्ठ्यर्थः, स्थाननिमित्तसम्बन्ध इति वदता कैय्यटेनापि स्थानरूप-षष्ठ्यर्थसम्बन्धस्य तिरस्कार एव कृतः। सामीप्यार्थबोधिका षष्ठी न भवतीत्यत्र "तदस्या-स्त्यस्मिन्निति मतुप्[4]" इति सूत्रस्थभाष्यमपि प्रमाणम्। तत्र भगवता भाष्यकारेण विचारितं

1. प्रौढमनोरमासंज्ञाप्रकरण, पृष्ठ संख्या 19, प्रकाशक चौखम्भा संस्कृत संस्थान वाराणसी, संस्करण द्वितीय, प्रकाशन सन् विक्रम सम्वत् 2051
2. 01/01/49 पा. सूत्र भाष्य, पृष्ठसंख्या 409
3. पा. सू. 02/04/52
4. पा. सू. 05/02/94

यत् वर्तमानकालावच्छिन्नगोस्वामिकः पुरुषः, इत्यर्थविवक्षायां यथा गौरस्त्यस्येति विग्रहं कृत्वा 'तदस्यास्त्'-इति सूत्रेण मतुप्प्रत्यये कृते सति गोमान् भवति तथा गावः सन्त्यन्तराः इत्यस्मिन् विग्रहे सति गोशब्दात् मतुप्प्रत्ययो न भवति, असामर्थ्यात् अस्येदमेव तात्पर्यं यत् तद्धितप्रत्ययविधायकेषु सूत्रेषु 'समर्थानां प्रथमाद्वा[1]' इति सूत्रस्याधिकारः, अतः तद्धितप्रत्ययाः सति सामर्थ्ये एव भवन्ति। प्रकृते गावः सन्त्यन्तराः इत्यत्र हि यथा वर्तमानकालावच्छिन्नो-ऽस्त्यर्थः प्रकृत्यर्थस्य गोपदार्थस्य विशेषणं तथाऽऽनन्तर्यमपि प्रकृत्यर्थस्य गोपदार्थस्यैव विशेषणम्, प्रकृत्यर्थस्य विशेषणत्वे तु सापेक्षमसर्मवदित्यसमर्थलक्षणस्य संघटनेन सामर्थ्या-भावादत्र न मतुप्प्रत्ययः। आनन्तर्यस्य प्रत्ययार्थत्वे तु प्रकृतिप्रत्ययौ सहार्थं ब्रूतः तयोः प्रत्ययार्थस्यैव प्राधान्यमिति नियमेन तस्य प्राधान्यत्वे विशेषणाभावे सापेक्षमसमर्थवदित्यस्या-भावेन सामर्थ्याभावात् वृत्यभावोपपादनं भाष्यकारेण यत् कृतं तदसङ्गतं स्यात्। तस्मात् षष्ठ्यर्थो न समीप्यार्थको न वा सम्बन्धः। 'तदस्यास्ति अस्मिन् इति मतुप्' इति सूत्रे गावः सन्त्यनन्तराः इति विग्रहे मतुप्प्रत्ययो भविष्यति न वेति विचारप्रसङ्गे कैय्यटेनापि कथितं यत् "आनन्तर्यमस्त्यर्थवत् प्रकृत्यर्थोपाधिः" अनेन कैय्यटेनाप्यित्येव ध्वनितं यत् यथा वर्तमान-कालावच्छिन्न अस्त्यर्थः प्रकृत्यर्थस्य विशेषणं तथैवानन्तर्यं षष्ठ्यर्थोऽपि प्रकृत्यर्थस्य गोपदार्थस्य विशेषणम्, यद्यानन्तर्यस्यार्थः षष्ठ्यर्थः स्यात् तदा तस्य प्रत्ययार्थत्वेन प्रकृत्यर्थ-विशेषणोपादानमसङ्गतं स्यात्। तस्मात् भाष्यकैय्यटप्रामाण्येन समीप्यादिसम्बन्धरूपषष्ठ्यर्थस्य खण्डनं जातम्। षष्ठ्यर्थस्य समीप्यादिरूपार्थस्य खण्डने सति हसमीपो यो ल् सः इत्संज्ञक इत्यर्थोऽसम्भवी जातः। एवञ्च हलित्येकदेशस्यावृत्तिं विधाय ह-समीपो यो ल् स इत्, इत्यर्थं सम्पाद्यान्योन्याश्रयदोषवारणपर उपाय असम्भवः।

### 02 एकशेषः-

'हलन्त्यम्' इति सूत्रघटके हल्पदे, एकशेषस्वीकार अन्योन्याश्रयदोषवारणं सम्भवति न वेति विचार्यते। हल्पदे हल् च हल् च इति हल्। हलः अन्त्यम् हलन्त्यम्, पाणिनिना कृतैकशेषस्य हल्पदस्योच्चारणं कृतम्। द्वन्द्वापवाद एकशेषः, इति सिद्धान्तेनान्त्यपदार्थस्य प्रत्येकेन हल्पदार्थेन सहान्वयः। यतो द्वन्द्वान्ते श्रूयमाणं पदं द्वन्द्वघटकप्रत्येकपदार्थेन सहान्वयो भवति, अतः तदपादभूते एकशेषेऽपि प्रत्येकेन सहान्वयसम्भवात्। हल्पदोत्तरा या षष्ठी सा निरूप्यनिरूपकभावसम्बन्धसामान्ये, तथा 'हलन्त्यम्' इति सूत्रस्यार्थो भवति यत् हल्त्वेत्याकारका-नुपूर्वीबोधकस्य चतुर्दशसूत्रान्त्यस्य लकारस्येत्संज्ञा भवति। एवं रीत्या इत्पदार्थज्ञाने जात अन्योन्याश्रयदोषपरिहारसम्भवात्। न च सकृदुच्चरितः शब्द सकृदेवार्थं गमयतीति सिद्धान्ते, एकशेषस्यावश्यकत्वेऽपि, अर्थान् अर्थान् प्रत्यपि प्रत्यर्थमिति सिद्धान्तमादायैकेनैव शब्देना-नेकार्थबोधसम्भव एकशेषो नावश्यक इति रीत्यैकशेषः भाष्यकृता प्रत्याख्यातः, तथा च तस्य सत्ता व्याकरणशास्त्रेऽभावादेकशेषेनान्योन्याश्रयदोषः वारयितुं न शक्यत इति वाच्यम्। एकशेषो द्विविधः सहविवक्षायां जायमानः शब्दसाधुत्वसम्पादकः लौकिकप्रक्रियासम्पादकः

1. पा. सू. 04/01/82

प्रथमः। असहविवक्षायां जायमानः शास्त्रमात्रप्रक्रियानिर्वाहको द्वितीयः। तत्र सहविवक्षा विषयक एकशेषो भाष्यकारेण प्रत्याख्यातः। असहविवक्षाविषयकः शास्त्रमात्रप्रक्रिया निर्वाहकः एकशेषः "द्विर्वचनेऽपि[1]" इति सूत्रे भाष्यकारेण स्वीकृतः। तत्र भाष्यकारेण विचारितं यत् चक्रे इत्यादिसिद्ध्यर्थं द्वित्वे कर्तव्ये सतीत्यर्थ आवश्यकः, दुद्यूषति, इत्यादिसिद्ध्यर्थञ्च द्वित्वे निमित्तेऽचि, इत्यावश्यकः किन्तु कथं पुनरेकेन यत्नेनोभयं लभ्यमिति विचारणायामुक्तम् "एकशेषनिर्देशात्" एकशेषनिर्देशोऽयं द्विर्वचनञ्च द्विर्वचनञ्चेति द्विर्वचनम्[2]। अयं भावः द्विरुच्यते येन परनिमित्तेन तद्द्विर्वचनम्, द्वित्वनिमित्तम्। द्विवर्चने इति शब्दे यतः सप्तमी वर्तते, अतो द्वित्वे कर्तव्य इत्यप्यर्थो भवति। द्विवर्चनशब्द एकशेषस्वीकृतिं विना अर्थद्वयं न भवितुमर्हति। अतोऽत्र भाष्यकारेणैकशेषः स्वीकृतः। अयञ्चैकशेष असहविवक्षायामेव वर्तते, यतोहि एकधर्मावच्छिन्नस्यैक-रूपसंसर्गेणैकधर्मावच्छिन्नेऽन्वयः सहविवक्षा सा चात्र नास्ति। एकस्य द्विर्वचनपदार्थस्य सूत्रपठिताज्पदार्थेन सहान्वयः, अपरस्य चानुवृत्या लभ्या-ज्पदार्थेन सहान्वयः, अतः एकधर्मावच्छिन्नेऽन्वयाभावात् सहविवक्षाया अभावात्। एवञ्च सहविवक्षाविषयकैकशेषखण्डनेऽपि, असहविवक्षाविषयकस्य शास्त्रमात्रप्रक्रियानिर्वाहकस्य भाष्यकारेण स्वीकारादेकशेषस्य सत्तासिद्धे हल्पद एकशेषस्वीकारेणैवान्योन्याश्रयदोषवारणा-सम्भव इति वक्तुं शक्यमिति चेन्न, यत्र विरुद्धानेकार्थाः भवन्ति तत्रोच्चारयितुरेकशेषेण बोधः कर्तुं शक्यते तस्यैकशेषेण बोधसम्भवेऽपि बोद्धस्त्वावृत्यैव बोध इत्यनुभवसिद्धम्। प्रकृत एकं हल्पदं चतुर्दशसूत्रबोधकम्, अपरञ्च हल्पदं हल्प्रत्याहारबोधकम्, अतो विरुद्ध अनेकार्थो जातः, अतोऽत्रावृत्तिरेव शरणम्।

### 03 तन्त्रम्-

सकृदुच्चरितत्वे सत्यनेकार्थबोधकत्वं तन्त्रत्वम्। स च द्विविधः शब्दतन्त्रम् अर्थतन्त्र-ञ्चेति भेदात्। तत्र प्रवृत्तिनिमित्तनिष्ठैकप्रकारतानिरूपितनानाविशेष्यताको बोधो यत्र सम्भवति तत्रार्थतन्त्रम्। यथा घटाः, अत्र हि घटत्वनिष्ठनानाप्रकारतानिरूपितनानाविशेष्यताको बोधो जायते। यत्र प्रवृत्तिनिमित्तनिष्ठनानाप्रकारतानिरूपितनानाविशेष्यताको बोधः तत्र शब्दतन्त्रम्। यथा अक्षाः, अत्र हि प्रवृत्तिनिमित्तस्यैकस्याभावेन प्रवृत्तिनिमित्तनिष्ठनानाप्रकारतानिरूपित-नानाविशेष्यताकबोधस्य सम्भवात् शब्दतन्त्रम्। नानार्थस्थले तु शब्दतन्त्रमेव। हलन्त्यम् इति सूत्रे हल्पदमपि विरुद्धानेकार्थबोधकः, अतो शब्दतन्त्रमेव, तन्त्रेण चोभयबोधसम्भवेन नास्त्यन्योन्याश्रदोष इति चेदत्रोच्यते-यथैकशेषस्थले विरुद्धानेकार्थविषये बोद्धुस्त्वावृत्यैव बोधः, तथा शब्दतन्त्रस्थलेऽप्यावृत्यैव बोधसम्भवेन तन्त्रेणान्योन्याश्रयदोषवारणासम्भवात्। न च 'सकृदुच्चरितः शब्दः सकृदेवार्थं गमयती'ति न्यायेन हल्शब्दो नोभयबोधपरको भवितुमर्हतीति वाच्यम्, 'गङ्गायां मीनघोषौ स्तः', इत्यत्र न्यायस्य व्यभिचरितत्वात्। अत्र हि मीनश्च

---

1. पा. सू. 01/01/59
2. पा. सू. 01/01/59 तत्सूत्रभाष्य पृष्ठसंख्या 502, प्रकाशक चौखम्भा संस्कृत प्रतिष्ठान, प्रकाशन सन् 1987, प्रदीपोद्योतटीका

घोषश्चेति मीनघोषौ, इति पदे द्वन्द्वसमासः समुदायर्थस्य गङ्गापदार्थेऽन्वयः, तत्र मीननिष्ठाधेयतानिरूपिताधारता जलप्रवाहे (गङ्गापदार्थे) सम्भवेऽपि घोषनिष्ठाधेयतानिरूपिता-धारता जलप्रवाहे न सम्भवति। समाससम्पादनाय त्वेककालावच्छेदेनान्वय आवश्यकः, अतः गङ्गापदमेककालावच्छेदेनैव भगीरथरथखातावच्छिन्नजलप्रवाहस्य तीरपदार्थस्य च बोधक इति।

**04 समाहारद्वन्द्वः-**

हलन्त्यम्, इति सूत्रघटके हल्पदे हल् च ल् चेति समाहारद्वन्द्वसमासः क्रियते। अन्त्यपदार्थस्य च द्वन्द्वादौ, इति न्यायेनोभयत्रान्वयः तथा च भवति सूत्रार्थो यत्, उपदेशेऽन्त्यं ल् इद् भवति, उपदेशेऽन्त्यं हलिति भवति, एवं रीत्याऽप्यन्योन्याश्रयदोषपरिहारसम्भव इति चेन्न। न च समाहारद्वन्द्वपक्षे लकारस्य संयोगान्त्लोपो दुर्लभः 'यणः प्रतिषेधो वाच्यः' इति निषेधादिति वाच्यम्। वार्तिकस्य प्रत्याख्यानात्। प्रत्याख्यानञ्चेत्थम्-'संयोगान्तस्य लोपः[1]' इति सूत्रेण विधीयमानः लोपो निषिद्ध्यते 'यणः प्रतिषेधो वाच्यः' इति वार्त्तिकेन, तत्र संयोगान्त-इति सूत्रे 'झलो झलि' इत्यतः झल्ग्रहणमपकृष्य झलन्तं यत् संयोगान्तं तदन्तस्य लोपं विधाय वार्तिकं प्रत्याख्यातं भगवता भाष्यकारेण, अतः प्रत्याख्यानपक्षे झलन्तस्यैव लोपो भविष्यति सूत्रेण लकारस्य झल्बहिर्भूतत्वाल्लोपो न भविष्यतीति चेन्न, सौत्रात्वाल्लोप-सम्भवात्। न च सौत्रत्वाल्लोपकल्पनापेक्षया सम्पूर्णसूत्रावृत्तिरेव लघीयसीति वाच्यम्। फल-मुखगौरवो दोषावहो न भवतीति सिद्धान्तात्। अपि च संयोगान्त, इति सूत्रे यज्झल्पदस्यापकर्षणं क्रियते तेन वाक्यभेदेनार्थः सम्पद्यते तत्र प्रथमवाक्यस्यार्थो भवति यत् संयोगान्तं यत्पदं तदन्तस्य लोपः। झलन्तो यः संयोगः तदन्तं यत्पदं तदन्तस्य लोप इति द्वितीयवाक्यार्थ इत्यर्थद्वयम्। तत्र पूर्ववाक्येन झल्यझलि च सर्वत्र लोपः स्यात् द्वितीयं वाक्यं व्यर्थम्, अतः तत्सामर्थ्यात् पूर्ववाक्यं क्वाचित्कम्। तेन क्वचिज्झलभिन्नस्यापि लोपः, तथा च लकारस्य झल्भिन्नेऽपि लोपो भविष्यति। अत एव 'अमो मश्[2]' इति सूत्रस्थशकारप्रत्याख्यानपरकभाष्य-सङ्गतिः। हन् धातोः लुङ्लकारे, उत्तमपुरुषैकवचनविवक्षायां मिप्प्रत्यये तस्य तस्थस-0 इति सूत्रेणामादेशे 'हनश्च वधः[3]' इति हन्धातोः वधादेशे इटीटोः इति सकारलोपे च कृते वधीम्, इति भवति, लोके च अवधिषमिति। तत्र भाष्यकारेण विचारितं यत् किमर्थं शकारः। स चाक्रियमाणे शकारे 'अलोऽन्त्यस्य' इति परिभाषयाऽन्त्यस्य प्रसज्येत् तन्माभूत् किन्तु शित्वात्सर्वादेशः स्यादेतदर्थं शकारः कर्तव्यः इति वाच्यम्। मकारस्य मकारस्थान आदेशविधानस्य प्रयोजनाभावेन शकारेण विनापि सर्वादेशसम्भवे तदर्थं शकारकरणं व्यर्थम्। नच सम्+राट् इति दशायां 'मोनुस्वारः[4]' इति प्राप्तानुस्वारबाधनार्थं 'मो राजि समः क्वौ[5]'

---

1. पा. सू. 08/02/23
2. पा. सू. 07/01/140
3. पा. सू. 03/03/76
4. 08/02/23
5. 08/03/25

इति सूत्रेण मकारस्थाने विधीयमानमकारादेशो यथा सार्थको भवति तथा वधीम्+वृत्रम्, इत्यत्र प्राप्तानुस्वारनिवृत्यर्थं मकारस्थाने मकारविधानं सार्थकमित्युच्यते चेत् तदपि न। द्विमकारको निर्देशः करिष्यते, द्विमकारनिर्देश अनेकालत्वात्सर्वादेशेऽपि भविष्यति। द्वितीय-मकारस्य संयोगान्तलोपेन निवृत्तिः, अत अनुस्वारकर्तव्ये तस्यासिद्धत्वादनुस्वारोऽपि नेति भाष्यहृदयम्। यदि वाक्यभेदेन झल्भिन्नस्य लोपो न स्यात् तदैतत्भाष्यस्यासङ्गतिः स्पष्टैव। एतद्विषये कैय्यटोऽपि प्रमाणम्, 'द्विमकारको निर्देशः करिष्यते' इति भाष्यप्रतीकमादाय स्पष्टमुक्तं यत् तत्रैकस्य मकारस्य संयोगान्तलोपः करिष्यते[1]' तथा च समाहारद्वन्द्वे दोषा-भावादन्योन्याश्रयदोषपरिहारसम्भव इति न वक्तुं शक्यते। समाहारद्वन्द्वस्यैवाभावात्। यतोहि द्वन्द्वसमासः सहविवक्षायामेव भवति सा च सहविवक्षा हल् च ल् चेति समाहारद्वन्द्वे नास्त्यतः समाहारद्वन्द्वोऽसम्भवः सहविवक्षानाम्, एकधर्मावच्छिन्नस्यैकरूपसंसर्गेणैकधर्मावच्छिन्ने-ऽन्वयः। प्रकृते यस्मिन् काले द्वन्द्वसमासः क्रियते तस्मिन् काले हल्पदार्थस्य ज्ञानं नास्ति, हल्पदार्थस्य ज्ञानायैवप्रयत्नस्य क्रियमाणत्वात्। सहविवक्षा चान्वयरूपैव, अन्वयश्चैकपदार्थेऽ-परपदार्थस्य सम्बन्धरूप एव। सम्बन्धश्च ज्ञातपदार्थमध्य एव। प्रकृते ल् पदार्थस्तु ज्ञातः किन्तु हल्पदार्थः अज्ञात एव। अतः ल् पदार्थस्य क्रियायामन्वयेऽपि हलपदार्थस्याज्ञातत्वेन क्रियायामन्वयाभावादेकधर्मावच्छिन्ने वृत्तिघटकपदार्थस्य सम्बन्धाभावात् सहविवक्षाभावः तदभावे च द्वन्द्वो दुर्लभ एव।

**सहविवक्षोपपत्तिप्रकारः तत्खण्डनञ्च-**

ननु, यथा "आद्यन्तौ टकितौ" इति सूत्रे टश्च कश्चेति टकौ ताविताविति टकितौ, आदिश्च अन्तश्चेत्याद्यन्ताविति पदद्वये द्वन्द्वसमासः। किन्त्वादिपदार्थस्य टित्पदार्थे, अन्त-पदार्थस्य च कित्पदार्थेऽन्वयसत्वेनैकधर्मावच्छिन्नेऽन्वयाभावेन सहविवक्षाया अभावात् द्वन्द्वस्य दुर्लभत्वेऽपि लक्ष्यसंस्कारकवाक्यार्थबोधात्प्रागाद्यन्तसमूहे साहित्यावच्छिन्नस्य टित्कित्समुदायस्य समानविभक्तिकतयाऽभेदान्वयमात्रेण सहविवक्षामाश्रित्य द्वन्द्वस्य साधुत्वं भवति तथा 'हलन्त्यम्' इति सूत्रेऽपि लक्ष्यसंस्कारकवाक्यार्थबोधात्प्राक् लकारस्य ज्ञानसत्वेन हल्पदवाच्यः कश्चिद-स्तीति कल्पितं बोधमादाय द्वन्द्वस्य साधुत्वं भवितुं शक्नोति, नहि निर्विशेषं सामान्यं भवतीति न्यायेन सामान्यज्ञानं विशेषजिज्ञासायां हेतुः, अतो विशेषजिज्ञासायां जायमाने सति "आदिरन्त्येन सहेता" इत्यनेन सहैकवाक्यतया हादिहान्तवर्णानां हल्त्वादिना विशेषरूपेण लक्ष्यसंस्कारको वाक्यार्थबोधोऽपि भविष्यतीतिरीत्या द्वन्द्वस्योपपत्या सहान्वन्याश्रयप्रसक्तिरपि न भवतीति चेन्न, लोके यथा शत्रुं मित्रं विपत्तिं च जय रञ्जय भञ्जय, इत्यत्र स्थान्यलौकिकप्रामाण्ये-नान्वयबोधो भवति तथा शास्त्रेऽपि भविष्यति 'यथासंख्य-0 सूत्रं द्वन्द्वार्थमेव। अजाविधनौ देवदत्तयज्ञदत्तावित्युक्ते न ज्ञायते कस्याजा धनम्, कस्यावय इति भाष्योक्तप्रामाण्यात्, लोके यथा द्वन्द्वनिर्देशे यथासंख्यं न प्रतीयते तथा शास्त्रेऽपि न स्यादतः शास्त्रे यथासंख्यशास्त्र-प्रामाण्यात् "आद्यन्तौ टकितौ" इति सूत्रे सामान्यतो बोधमादाय साहित्यावच्छिन्नस्य साहित्य-

1. 07/01/40 पा. सू. भाष्यकैय्यट

वच्छिन्नेऽन्वयं स्वीकृत्य द्वन्द्वस्य साधुत्वं भवति तथा हलन्त्यम्' हल्पदवाच्यः कश्चदिति सामान्यतो बोधं स्वीकृत्य हल्त्वादिना विशेषरूपेण जिज्ञासायाम् 'आदिरन्त्येन सहेता' इत्यनेन सहैकवाक्यताविधानेन लक्ष्यसंस्कारको वाक्यार्थबोधो भविष्यतीत्यत्र प्रमाणाभावान्न समाहारद्वन्द्वः। 'आद्यन्तौ टकितौ' इति सूत्रे साहित्यावच्छिन्नस्य साहित्यावच्छिन्नेऽन्वयसम्भवेऽपि हलन्त्यम् इति सूत्रे हल्पदवाच्यत्वेनैकपदार्थस्य लत्वेनापरपदार्थस्य ज्ञानपुरस्सरोऽन्वयो साधुः। अपि च श्रोतुः हल्पदार्थस्य ज्ञानाभावेऽपि पाणिनेर्हल्पदार्थस्य ज्ञानन्त्वस्त्येव, अन्यथा वाक्यप्रयोगमेव न कुर्यात् यत्नं प्रति, इच्छायाः कारणत्वात्। एवञ्च वक्तृसमवेतानेकपदार्थज्ञानेच्छारूपसह-विवक्षासम्भवेन द्वन्द्वसम्भवात्। श्रोतृणां बोधस्तु क्रमेणैव भवति। इदमपि न सम्भवति, यतोहि श्रोतृसम्बन्धिसहबोधकतृकसत्तेच्छा सहविवक्षा तदैव सम्भवति यदा वक्त्रा सह श्रोतुरपि सहैव बोधः स्यात् स चासम्भव अन्योन्याश्रयात्। अतः श्रोतृसम्बन्धिसहबोधकतृकभवनेच्छा-हेतुकवक्तृसम्बन्धिसहकथनेच्छारूपादिसहविवक्षा नास्तीति तात्पर्यम्। किञ्च 'आदिरन्त्येन' इति प्रणयनान्यथानुपपत्या पाणिनेः हल्पदार्थज्ञानेऽपि हल्पदार्थज्ञानाभिप्रायेण प्रयोगो न तैर्कृतः। अन्यथा पाणिनिप्रभृतयः ये व्याख्यातारः तेषां परम्परया पाणिनेर्तात्पर्यं ज्ञानं सर्वेषां स्यात् तदर्थज्ञानाय कृतोपायो व्यर्थः स्यात्। नन्वेतावत्पर्यन्तं मया 'हलन्त्यम्' इति सूत्रघटकहल्पदे समाहारद्वन्द्वं स्वीकृत्य, अन्योन्याश्रयदोषवारणं न सम्भवतीति विवेचितम्। अधुनोपायान्तराणां विषये चर्चोपस्थाप्यते। ननु यथा "लट स्मे[1]" इति सूत्रादारभ्य पञ्चसूत्र्यां कालविभागेन प्रत्ययविधानार्थं वार्तिककृता, 'स्मा पुरा भूतमात्रे' न स्मा पुराद्यतने' इति वार्तिकद्वयं पठितम्। किन्तु स्मपुरा, इत्याकारकस्य-कस्यापि सूत्रस्याभावात् वार्तिकतात्पर्यमनुपपत्तिभिया प्रथम-वार्तिकस्य स्म-पुरा-शब्दयोः आद्यन्तपदार्थयोः लक्षणा क्रियते। लक्षणास्वीकारे 'लट् स्मे' 'अपरोक्षे च[2]' 'ननौ पृष्टप्रतिवचने[3]' नन्वोर्विभाषा[4] पुरि लुङि चास्मे[5]' इति पञ्चसूत्राणां बोधो भवति। यदि लक्षणा न स्यात् तदा प्रथमवार्तिकेन 'लट् स्मे' अपरोक्षे च पुरि लुङि चास्मे' इति सूत्रत्रयस्य भूतसामान्ये प्रवृत्तिर्बोधिता तस्यैवाद्यतननिषेधप्रतिपादनद्वाराऽनद्यतने विधानप्रतिपादने भूतविशेषे विधानं लभ्यते। ततश्च भूतमात्र इत्यनेन सामान्येन विधाने विरोधः प्राप्नोति, यदा तु प्रथमवार्तिके लक्षणा तदा पञ्चसूत्र्याः भूतमात्रे प्रवृत्तिः प्राप्ता सा द्वितीयवार्तिकेन प्रतिसिद्ध्यते। 'ननौ पृष्टप्रतिवचने' 'नन्वोर्विभाषा' इत्यनयोस्तु भूतमात्रे प्रवृतिः सिद्ध्यति। एवञ्च तत्रत्यभाष्यप्रघट्टबलेन प्रथमवार्तिके लक्षणा यथास्ति तथेहापि हकारादिलान्तसमुदायघटकतत्तत्सूत्रान्त्ये लक्षणा स्वीकार्या, अन्त्यपदं तात्पर्यग्राहकं भविष्यति। यथा 'गभीरायां नद्यां घोषः' इत्यत्र नद्यामित्यस्य गभीरनदीतीराभिन्नाधिकरणप्रतिपादकत्वे गभीरायामिति पदं तात्पर्यग्राहकं तद्वत्, इति। अभिधाशक्त्या कार्यनिवाहे लक्षणायाः अनुचितत्वात्।

---

1. पा. सू. 03/02/118
2. पा. सू. 03/02/119
3. पा. सू. 03/02/120
4. पा. सू. 03/02/121
5. पा. सू. 03/02/122

न च यथा पाणिनीयव्याकरणे सु, औ, जस् इत्यादिविभक्तीनां प्रथमादिसंज्ञाविधायकं किमपि सूत्रं नास्ति किन्तु तन्त्रान्तरे त्रिकसमुदाये प्रथमादिपदानां शक्तिर्बोध्यते तथैवात्र व्याकरणशास्त्रेऽपि प्रथमादिपदानां शक्तिग्रहस्वीकारः, अनयैव रीत्या तेषु सूत्रेषु हादिहान्तान् स्वरूपेण पठित्वा हल्संज्ञायाः कृतत्वात् तदनुरोधेनोक्तहेतोः शक्तिकल्पनं भविष्यतीति वाच्यम्। अगत्या तन्त्रान्तरे प्रसिद्धप्रथमादिपदानां स्वौजस्, इत्यादिविभक्तबोधकानां पदानां शक्तिग्राहकानि भवन्तु, किन्तु हल्पदार्थस्य ज्ञानायोपायस्य सत्वेन तथा कल्पने मानाभावात्। ननु पर्वतादौ वह्न्यादेः प्रत्यक्षज्ञाना भावेऽपि धूमस्य प्रत्यक्षसत्वेन धूमात् वन्हेरनुमानं भवति तथाऽत्रापि हल्पदं हकारादिलान्तवर्णेषु शक्तम्, तादृशबोधतात्पर्येण पाणिन्युचरितत्वादित्यनु-मानेन हल्पदार्थस्य ज्ञानं भविष्यतीति वाच्यम्। व्याप्तिग्राहकप्रमाणं विना व्याप्तेरनुदयात्। यथा अग्निधूमयोर्मध्ये साहचर्यरूपव्याप्तिग्राहकं प्रत्यक्षप्रमाणं विद्यते न तथात्र प्रमाणम्। अपि च यद्यनुमानेन पदार्थज्ञानं स्यात् तदाऽनुमानेनैव सर्वत्र शाब्दबोधोऽपि भविष्यतीति तदर्थं शाब्दबोधकारणीभूतं पदादिज्ञानम्, पदनिष्ठवृत्तिज्ञानाधीनमर्थोपस्थितिरित्यादिरूप कार्य-कारणभावस्वीकृते असंङ्गत्यापत्तेः। तस्मात्तन्त्रान्तरे प्रसिद्धशक्तिरीत्या, अनुमानेन वाऽन्योन्याश्रय दोषपरिहारः असम्भवः।

## 05 योगविभागः-

व्याकरणशास्त्रं इष्टसिद्धय एकस्य सूत्रस्य स्थाने यत् सूद्रद्वयकल्पना भवति स एव योगविभागः। हलन्त्यम् इति सूत्रे यदा हल्पदमस्ति तदैवान्योन्याश्रयदोषः, यदि हल्पदमेव न स्यात् तदा तद्दोषस्य चर्चैव न भविष्यति। तच्चेत्थम्। हलन्त्यम्, उपदेशेऽजनुनासिक इत्' इति सूत्रद्वयस्थाने हल्पदं विहाय उपदेशे इदन्त्यम्' अचः' अनुनासिकः' इति सूत्रत्रयं क्रियते तत्र प्रथमसूत्रस्यार्थो भवति यत्, उपदेशावस्थायामन्त्यस्य वर्णस्येत्संज्ञा भवति स चाच्वर्णः स्यात् हल्वर्णो वा स्यात् सर्वेषा वर्णानामित्संज्ञा भविष्यति। अस्मिन् पक्षे इत्पदार्थ-ज्ञानाय हल्पदार्थज्ञानस्यावश्यकताभावे न च कश्चिद्दोषः, अन्त्यस्य वर्णस्येत्संज्ञाविधाने कस्यचिदन्यस्य वर्णज्ञानस्यापेक्षायाः अभावात्। न चान्त्यभूतस्याज्झलवर्णानामित्संज्ञा विधाने पूर्वसूत्रेणैव सिद्धे 'अचः' इति कल्पितं सूत्रं व्यर्थमिति वाच्यम्। यो ह्यच्वर्ण अन्त्ये नास्ति किन्तु तस्येत्संज्ञा परमावश्यकी तस्येत्संज्ञाविधानार्थम्, अचः' इति द्वितीयसूत्रम्। यथा मनिन्। अत्र हि इकार अन्त्ये नास्ति तथापीत्संज्ञा। ननु सर्वेषामज्झल्वर्णानां प्रथमसूत्रेणैवेत्संज्ञा विधाने भू, रू, श्रू, इत्यादि धातूनामन्त्यस्याच्वर्णस्येत्संज्ञा भविष्यतीति। च न फलाभावादित्संज्ञा न भविष्यतीति वाच्यम्। "उदितो वा[1]" इति सूत्रेणोदितं मत्वा विकल्पेनेड्विधानरूपस्य फलस्य सत्वादिति चेन्न। अनुनासिकः' इति सूत्रस्य यत्फलम्, अनुनासिकवर्णस्येत्संज्ञाविधानं तत्तु पूर्वोक्त (उपदेशे इदन्त्यम्, अचः) सूत्रद्वयेनैव सिद्धौ 'अनुनासिकः' इति विभक्तं तृतीयं सूत्रं व्यर्थम्, स च व्यर्थीभूय ज्ञापयति यत् अचस्चेदित्संज्ञा तर्हि अनुनासिकस्यैव। भू, रू, श्रू, इत्यादीन मच अनुनासिकत्वाभावान्नेत्संज्ञा। ननु यत्र सद् नियमः तत्रासद्

1. पा. सू. 07/03/56

नियमोऽपि सम्भाव्यते, एवञ्च प्रकृते तृतीयं यत्सूत्रम्, अनुनासिकः इति एतद् तृतीयसूत्रेण अचस्चेदित्संज्ञा तर्हि अनुनासिकस्यैवेति शुद्धनियमवत्, अनुनासिकस्चेदच एवेति विपरीत-नियमोऽपि भवितुं शक्नोति। विपरीतनियमे सति, अनुनासिकानामच्वर्णानामित्संज्ञा तु भविष्यति, किन्तु ञमगणनामनुनासिकानां हल्वर्णानामित्संज्ञा न भविष्यतीति चेन्न, यदि विपरीतनियमः स्यात् तदा अनुनासिकानां हल्वर्णानामित्संज्ञाभावे "मिदचोऽन्त्यात्परः[1]" इति सूत्रस्य वैय्यर्थापत्तिः यतोहि मिदागमः कुत्र भविष्यतीति व्यवस्थापनाय मिदचः इति सूत्रम्। विपरीतनियमे मकारस्येत्संज्ञाभावेन णित्वाद्यभावे वृद्ध्याप्राप्तेः नुमाद्यागमानां मित्वाभावात् सूत्रस्य वैय्यर्थापत्तिः स्पष्टैव। एवमेव ञित्णित्प्रत्ययाव्यवहितपूर्वत्वविशिष्टस्याजन्ताङ्गस्य वृद्धिर्भवतीत्यर्थकम् "अचो ञ्णिति" इति सूत्रस्यापि वैय्यर्थापत्तिः। विपरीतनियमे ञकारण-कारयोरित्संज्ञायाः अभावः, अतो न विपरीतनियमः। ननु अनुनासिकः' इति विभक्ततृतीय-सूत्रेण नियमः कृतो यत् अचस्चेदित्संज्ञा तर्हि, अनुनासिकस्यैव, किन्तु नियामकसूत्रात् पूर्वं सूत्रद्वयम् उपदेशे इदन्त्यम्, इत्येकम्, अचः' इति द्वितीयं सूत्रम्, तत्र कस्य सूत्रोपरि नियमो भविष्यतीति जिज्ञासायाम्, "अनन्तरस्य विधिर्भवति प्रतिषेधो वा" इति न्यायेन 'अनुनासिकः' इति सूत्रस्य नियमः स्वस्यान्तरभूतस्य 'अचः' इति सूत्रस्य कृत एव भवितव्यम्। एवं सति विभक्तेन प्रथमसूत्रेण रु, प्रभृतिधातुषु विद्यमानो योऽचः तस्येत्संज्ञायाः आपत्तिर्दुर्वारेति चेन्न, यद्यनन्तरस्येति नियमेन 'अनुनासिकः' इति सूत्रकृतनियमप्रवृत्तिः, अचः इति सूत्रविषयकी स्यात् तदा अजनुनासिकः इति करणेऽपि कार्यनिर्वाहः स्यात् पुनः सूत्रद्वयकरणं व्यर्थं स्यात्, तस्मात्योगविभागसामर्थ्येन "अनन्तरस्य विधिर्भवति प्रतिषेधो वा" इति नियमस्य बाधः, सति बाधे नियमाप्रवृत्त्या व्यवहिताव्यवहितयोः सर्वत्र जायमानत्वेन रुः, इत्यादिधातुषु विद्यमानस्याचः इत्संज्ञायाः अभावात्। ननु ऋषिभिः यादृशानुपूर्वीणामुच्चारणं कृतं तादृशानु-पूर्विविशिष्टानां शब्दानामार्षत्वम्, तत्परायण एव पारायणजन्यफलप्राप्तिः, यदि सूत्रद्वयस्थाने सूत्रत्रयं क्रियते तदाऽपाणिनीयत्वं तु भविष्यत्येव। अपाणिनीयत्वे त्वनार्षत्वेन न पुण्यजनकः। भाष्यकारेणापि बहुषु स्थलेषु, एतादृशप्रसङ्गे समायाते कथितं यदपाणिनीयन्तु भवत्येवेति चेन्न, अपाणिनीयत्वभवनं कश्चिद् दोषो नास्ति, यदि कल्पमानन्यासः पूर्वसूत्रापेक्षया लाघवमूलको भवति। प्रकृते 'हलन्त्यम्' उपदेशेऽजनुनासिक इत्' इति सूत्रद्वये यावन्ति पदानि सन्ति तदपेक्षया कल्पितन्यासे हल्पदं न कर्तव्यो भवतीति शरीरकृतलाघवः ज्ञानलाघवश्च वर्तते, यतोहि यदा हल्पदं सूत्रे भवति तदा, आपतितान्योन्याश्रयदोषवारणाय कश्चनोपायः कर्तव्यो भविष्यति हल्पदाभावे, अन्योन्याश्रयदोषस्य शङ्कैव नास्ति, अतः तद्वारणायोपायोऽपि न भवति। भगवता भाष्यकारेणापि सिद्धान्तोऽयं समर्थितः। 'अच उपसर्गात्तः' इति सूत्रे तत्र भाष्यकृता विचारितं यदनेन सूत्रेण, अजन्तोपसर्गात्परस्य घुसंज्ञकधातोः तकारो विधीयते, किन्तु प्र+दा+त इति दशायां घुसंज्ञको धातुः दा इति तत्र सम्पूर्णस्य स्थाने भवति, अकार-स्थाने दकारस्थाने वेति सन्देहनिवारणाय "आकारग्रहणं कर्तव्यम्" इत्युक्तम्[2]। अर्थात्

1. पा. सू. 01/01/47
2. 07/04/47 पा. सू. भाष्य

आकारस्थाने तकारो भवतीत्युक्त्वा विचारितं यत् दोः इति षष्ठ्यन्तं पदम्, 'अलोऽन्त्यस्य[1]' इति सूत्रेणान्त्यस्यैव सम्भवे तदर्थमाकारग्रहणं नावश्यकम्। ननु आकारग्रहणाभावे न सिद्ध्यति, 'तस्मादित्युत्तरस्य' 'आदेः परस्य' इति परिभाषया दकारस्य सिद्धत्वात्। नायं दोषः 'अस्य च्वौ[2]' इति सूत्रादकार अनुवर्तते, अत अकारस्यैव भविष्यतीति विचार्य्योक्तं यत् "यद्यवर्णग्रहणमनुवर्तते तदा दद्भावे दोषो भविष्यति[3]" यतोहि 'दो दद्घोः[4]' इति सूत्रस्यापदोऽयम्। "अच उपसर्गात्तः" उत्सर्गापवादयोः समानवचनकत्वनियम इति सिद्धान्तेन ददादेशोऽप्यकार-स्यैव स्यात्। आकारस्य ददादेशे दत्तम्, इत्यत्र संयोगादिः श्रूयेत। दोषोऽयं समागते समाधा-नायोक्तं यत् "एवं तर्हि वक्ष्यामि दो दद्घोरिति" दो य अकारः तस्याद्भवति। ततः अच उपसर्गात्तः अस्त्येव। एवमपि सूत्रभेदो कृतो भवति। नासौ सूत्रभेदः सूत्रभेदमुपचरन्ति यत्र तदेव सूत्रमन्यत् क्रियते, भूयो वा, यदि तदेवोपसंघृत्य क्रियते नासौ सूत्रभेदः[5]" अयं भावः सो न्यास एव सूत्रभेदत्वेन व्यवहृयते यत्र तत्समानं परिवर्तनं विधायापरं सूत्रं भवति। अथवा पाणिनिनिर्मितसूत्रस्थाने पाणिन्यपेक्षया दीर्घो न्यासो भवति, यथा 'उपदेशेऽजनुनासिकः' इति सूत्रस्थाने 'उपदेशनेऽजनुनासिकः'। यदि तदेव सूत्रं संक्षिप्तो भवति तदा सः सूत्रभेदो दोषाधायको न भवति। प्रकृत इदमेव जातम्। ननु अङ्गेषु प्रधानव्याकरणस्याध्ययनस्य फलं द्वयम्, एकं शब्दसाधुत्वसम्पादनम्, अपरं पारायणजन्यादृष्टसिद्धिः सूत्रभेदे शब्दसाधुत्व-सम्पादनं तु भविष्यति किन्तु पारायणजन्यं यददृष्टफलं तत्फलाप्राप्तेरिति चेन्न। अङ्गानां यथा सम्भव एव दृष्टफलद्वारैवादृष्टार्थता भवति, यतोहि यदि वेदाङ्गानां मात्रादृष्टार्थैव स्यात् तदा बहुषु स्थलेषु शब्दसाधुत्वसम्पादनाय भाष्यकारेणकृतप्रयास अनर्थकः स्यात्, तस्मात् दृष्टद्वारैवादृष्टार्थत्वं कल्पनीयमङ्गानाम्। एवञ्च प्रकृते, अपाणिनीयत्वरूपो दोषो नास्ति। ध्वनितञ्चेदं नासौ सूत्रभेदः इति दोषाय" इति भाष्येण। तच्चेत्थम्–अस्य भाष्यस्येदमेव तात्पर्यं यत् यत्र लाघवो भवति तत्र सूत्रभेदो दोषजनको न भवति। यदि लाघवरूपदृष्टफल-सत्वेऽप्यदृष्टस्य हानिः स्यात् तदेयं भाष्योक्तिरेकपक्षीया स्यात्। तस्माद्दृष्टफलसत्व अदृष्टहानिः न हानिकरः। अयं निष्कर्षः, आनुपूर्विभिन्नत्वेऽपि यदि दृष्टफलं प्राप्यते तदा तददृष्टफलमपि विद्यत इति स्वीकरणीयः। दृष्टद्वारैवाङ्गानामदृष्टफलं भवतीति स्वीकारादेव भाष्यकृता पाणिनिसूत्राणां तद्घटकपदानां वा वैय्यर्थापत्तिमापाद्य (ज्ञापकपरकं) नैकाः परिभाषाः ज्ञापिताः तज्ज्ञापकपरभाष्यस्योच्छेदो न भवति, अन्यथा अदृष्टफलार्थं सूत्राणां तद्घटकपदानां वाऽवाश्यकत्वेन तद्वैय्यर्थमापाद्य कृतं ज्ञापनमसङ्गतं स्यात्। यथा "अभ्यासस्यासवर्णे[6]" इति सूत्रघटमसवर्णपदम् "वार्णादाङ्गं बलीयः" इति परिभाषायाः ज्ञपकं भवति। इण् धातोः लिट्

1. पा. सू. 01/01/52
2. पा. सू. 07/04/32
3. 07/04/47 पा. सू. भाष्य
4. पा. सू. 07/04/46
5. 06/04/78 पा. सू. भाष्य
6. पा. सू. 06/04/78

लकारे इ+इ+अ इति दशायाम्, इकारद्वयमादाय सवर्णदीर्घप्राप्तः, णल्वृत्तिणित्वमादाय णल्प्रत्ययनिमित्तकवृद्धिर्प्राप्ता, तत्र वृद्धिरपेक्षया सवर्णदीर्घस्यान्तरङ्त्वेन सवर्णदीर्घो भवितव्यः, यद्यन्तरङ्गत्वात् पूर्वं सवर्णदीर्घः स्यात् तदा इयाय इति लक्ष्यासिद्धिः, अतः परिभाषा स्वीकृता 'वार्णादाङ्गं बलीयः' सत्यां परिभाषायां न कश्चन् दोषः, सवर्णदीर्घस्य वर्णकार्यत्वेन तदपेक्षया वृद्धेः बलवत्वात्, किन्तु प्रमेयसिद्धिः प्रमाणात्भवतीति सिद्धान्तेन यावत् वर्णकार्यापेक्षया, अङ्गकार्यस्य बलवत्वबोधके वचने प्रमाणं न भविष्यति तावत् वचनस्याप्रामाणिकत्वेन न कार्यनिर्वाहकः अतो वचन–प्रामाण्याय भाष्यकारेण, 'अभ्यासस्याऽसवर्णे[1]' इति सूत्रघटक–मसवर्ण इति पदं प्रमाणत्वेनोपन्यस्तम्। तच्चेत्थम्, इ+इ+अतुस्, इति दशायाम्, अभ्यासस्ये–वर्णस्येयङ्गादेशवारणाय वर्तते, किन्त्वन्तरङ्गस्य सवर्णदीर्घापेक्षया बहिरङ्गस्येयङ्गादेशस्यासिद्धत्वेन सवर्णदीर्घे स्वत एव ईषतुः, इति लक्ष्यसिद्धिः, असवर्णग्रहणं व्यर्थम्, सैव व्यर्थीभूय ज्ञापयति यत् "वार्णादाङ्गं बलीयो भवति। यदि दृष्टफलद्वारा, अदृष्टफलस्य कल्पना न स्यात् तदा दृष्टफलाभावेऽपि पारायणजन्यरूपादृष्टफलाय सूत्रघटकासवर्ण–ग्रहणचारितार्थ्येन भाष्यकारेण कृतज्ञापनमसङ्गतं स्यात्। तस्मात्दृष्टफलद्वारैवादृष्टफलस्य कल्पना करणीया। ननु "इको यणचि[2]" इति सूत्रे दीर्घशाकलप्रतिषेधः" इति वार्तिकविचारप्रसङ्गे, अन्ते भणितम्, यत् सामर्थ्ययोगान्नहिकिञ्चित्र, पश्यामि शास्त्रे यदनर्थकं स्यात्[3]। अर्थात् शास्त्रसामर्थ्यात् सूत्रार्थव्यवस्थापन्नात् पदमात्रमपि व्याकरणशास्त्रेऽनर्थकं नास्ति। भाष्यस्येदमेव तात्पर्यं यत् पाणिनिसूत्रेषु कानिचित्पदानि दृष्टफलकानि कानिचिच्चादृष्टफलकानि, कानि–चिच्चोभयफलकानि, किमप्यनर्थकं नास्ति। 'अच उपसर्गात्तः' इति सूत्रे त्वङ्गानामदृष्टता दृष्टद्वारैवेति रीत्या परस्परभाष्यमिदं विरुद्धमिति चेन्न, 'इको यणचि' इति सूत्रस्थं भाष्यमेक–देशित्वेन विरोधाभावात्। यतोहि "दीर्घशाकलप्रतिषेधार्थम्" इति वार्तिकविचारप्रसङ्गे यानि प्रयोजनानि दत्तानि सन्ति तानि सर्वाणि छन्दसि दृष्टानुविधिः, इति सिद्धान्तं मत्वा खण्डितानि, तत्पक्ष उक्तत्वात्। यतः खण्डनपक्ष उक्तम्, अत एकदेशी तस्मादुपर्युक्तविवेचनेन सिद्धं यत् सूत्रद्वयस्थाने सूत्रत्रयकरणेन न कश्चित् दोषोऽस्ति, अपितु हल्पदाकरणेनान्योन्या–श्रयदोषाभावेन लाघवः। एवञ्च लाघवादन्योन्याश्रयदोषपरिहारायऽयमेव न्यासः स्वीकरणीय इति केषाञ्चिन्मतं तत्तु नागेशदृष्ट्या न समीचीनं गौरवात्। गौरवश्चेत्थम्–सूत्रद्वयस्थाने सूत्रत्रयकल्पना करणीया भवति "अचः" 'अनुनासिकः' इति पृथक्–पृथक् योगाः भवन्ति, अथ च अचः इति सूत्रेणैव कार्यसम्भवे 'अनुनासिकः' इति तृतीयं सूत्रं नियमार्थम् भवति, तदनन्तरं विपरीतनियमवारणोपायः, योगविभागसामर्थ्यात् "अन्यतरस्य" इति नियमं बाधित्वा व्यवहितस्यापि कृते नियमविधानमित्यादीनि सर्वाणि कार्याणि कृतानि भवन्ति सूत्रत्रयवादिनाम्। एवं रीत्या पक्षेऽस्मिन् महद्गौरवं भवति। सूत्रत्रयवादिना यत्पदाकरणरूपः लाघवः प्रदर्शितः तदपि न समीचीनम् यतोहि हल्पदोच्चारणे यत्वर्णाभिव्यक्तिजनककण्ठताल्वादिस्थानां यः

---

1. पा. सू. 06/04/78
2. पा. सू. 06/01/77
3. 06/01/77 पा. सूत्रभाष्य

अभिघातः स एव गौरवः न तु योगविभागः, नियमः विपरीतनियमवारणाय कृत उपायरूप-मनोव्यापाररूपगौरवः। उच्चारणकृतगौरवः एव गौरवः न तु मनोव्यापाररूपगौरवः गौरवो भवतीति काचित् राजाज्ञाऽस्ति। तस्मादन्योश्रयदोषवारणाय सूत्रं कल्पयित्वा य उपायः स अतीवगौरवग्रस्तत्वेन नागेशेन निरस्तः। ननु मास्तु सूत्रद्वयस्थाने योगविभागेन सूत्रत्रयम्। येन मनो व्यापाररूपो गौरवः स्यात् किन्तु "हलन्त्यम्" इत्येकस्मिन्नेव सूत्रे लन्त्यम् हल् इति सूत्रद्वयं क्रियते देहलीदीपन्यायेनान्त्यपदार्थस्योभयेन सहान्वयः, उपदेशपदञ्चानुवर्तते तथा च भवति सूत्रार्थो यत् उपदेशऽन्त्यं लिति भवति। इत्पदार्थज्ञाते सति 'हलन्त्यम्' इति सूत्रस्य वाक्यार्थबोधे नान्योन्याश्रयदोषापत्तिरिति चेन्न, पाणिनिना एकमेव लकारः पठितः न्यासे तु लकारद्वयमागतं तत्रैको लकारः कुतः समागत इति जिज्ञासायां प्रश्लेष एव स्वीकर्तव्यो भविष्यति। प्रश्लिष्टस्य लकारस्य लोपविधानाय सौत्रत्वादिकल्पने महद्गौरवम्। अपि च प्रथमन्यासस्य कोऽर्थः। अन्त्यं लकार इत भवतीति चेन्न, कस्याऽन्त्यमिति जिज्ञासायाम्, उपदेश इति सम्बद्ध्यते, तथा चोपदेशेऽन्त्यं लित् इत्येव कथयिष्यते तत्तु न सम्भवति, यतोहि, अज्ञातस्वरूपज्ञापकोच्चारणविषयत्वमुपदेशत्वम्। स चोपदेशः हल्त्वेत्याकारकानुपूर्वि-बोधकसमुदाय एव वर्तते स च समुदायः हलिति न तु लकारमात्रम्। न चोच्चारणविषयता यथा पर्याप्तिसम्बन्धेन समुदाये वर्तते तथा अवयवेऽपीति वाच्यम्, समुदायोच्चारणेऽवयवा-नामुच्चारणमवश्यभावितया समुदायोच्चारण एव ऋषीणां तात्पर्यम्। तस्मादुपदेशपदसम्बद्धे लकारस्येत्संज्ञैव न भविष्यति तदसम्बद्धे तु सूत्रान्त्यलकारस्यैवेत्संज्ञा भविष्यतीत्यत्र प्रमाणा-भावात् यस्य कस्यापि लकारस्य इत्संज्ञापत्तिः। एवञ्चायमपि पक्षो न समीचीनः।

**06 सहेताशब्दार्थपरिवर्तनम्-**

'आदिरन्त्येन सहेता' इति सूत्रे यदा इत्पदम्, इत्संज्ञायाः बोधकं तदैवान्योन्याश्रयदोषः समापतति। 'आदिरन्त्येन सहेता' इति सूत्रे यदि इता घटकमित्पदमित्संज्ञायाः बोधको न भविष्यति तदा अन्योन्याश्रयदोषस्य शङ्कैव नास्ति। सहेता शब्दः सहेतृशब्दस्य प्रथमैकवचनस्य रूपम्। अस्य निष्पत्तिः इत्थं कर्तुं शक्यते कटी धातौ वी धातौ वा प्रश्लिष्टो या इ, धातुः तस्मात्कर्तृयर्थे तृच्प्रत्ययः इ+तृ इति जाते "सार्वधातु–0 इति सूत्रेण धातुभूतस्येकारस्य गुणे सति एतृशब्दो निष्पद्यते। ततः सहशब्दः, आङित्युपसर्गश्च पूर्वं योज्यते सह+आ+एतृ इति दशायाम् "एङि पररूपम्" इति सूत्रेण पररूपे सति सह+एतृ इति जाते "ओमाङ्गोश्च" इति पररूपे सहेतृशब्दो जायते ततः प्रथमैकवचने सहेता इति। "ओमाङ्गोश्च" इति पररूप-विधानायैव मध्ये आङिति सन्निवेशः, अन्यथा "वृद्धिरेचि" इति सूत्रेण वृद्धिः स्यात्। न चाध्ययनार्थकः इङ् धातोः स्मरणार्थकश्च इक् धातोः विद्यमानत्वे प्रश्लिष्टात् इ धातुना एतृशब्दनिष्पत्तिरनुचितेति वाच्यम्, उभयोः धात्वोः अधिपूर्वकस्यैव प्रयोगसत्वेनाग्रहणात्। एवमेव गत्यर्थकेभ्यः इण् धातुभ्यो यदि एतृशब्दस्य निष्पत्तिः स्यात् तदा "एत्येधत्यूठ्सु" इति वृद्धिः स्यादतः इ धातुः ग्रहीतः। उपर्युक्तरीत्या निष्पन्नैतृशब्दास्यार्थो भवति यत् सह आ समन्तादेति गच्छति–बुद्धिविषयो भवतीति सहेता मध्यमो वर्णः। सहेता शब्दस्याऽयमर्थो योगरूढशक्त्या भवति। योगशक्त्या सह, एति, इति योगार्थप्रतीतिः। रूढशक्त्या तु मध्यमा-

वर्णबोधः। सहेताशब्दस्य मध्यमवर्णरूपार्थप्रतिपादने "आदिरन्त्येन सहेता" इति सूत्रस्यार्थो भवति यत् सहेता मध्यमो वर्णः अन्त्यसहितादिसंज्ञकः (अणादिसंज्ञकः) अत्र हि मध्यम-वर्णः संज्ञी, आद्यन्तशब्दसंज्ञावाचकः, आद्यन्तशब्दाभ्यां सह मध्यमवर्णस्यैकबुद्धिविषयता-सत्वेन यस्य प्रत्याहारस्य विवक्षा भविष्यति, तस्याद्यन्तवर्णमादाय मध्यपातीवर्णानां बोधसत्वेना-ज्झलादिसंज्ञानां ज्ञानं भविष्यति। एवं रीत्या 'हलन्त्यम्', सूत्रस्य वाक्यार्थबोधकारणीभूतस्य हल्पदार्थस्य ज्ञानसत्वेन नान्योन्याश्रयदोषः, परञ्चेदं समाधानं नागेशरीत्या न युक्तियुक्तम्। यतोहि सहेताशब्दस्यार्थपरिवर्तनेनान्योन्याश्रयदोषाभावे, दोषमाशङ्क्य कृतः परिहारो निरर्थकः स्यात्। अतः तद्भाष्यप्रामाण्यात् कल्पते यत् कटी धातोः वी धातोश्च प्रशलिष्टेकारात् तृच्प्रत्ययो न भवति। एवमेव दिवादिगणपठितात् सह, आङ् इत्यनयोः पूर्वसन्निवेशे गत्यर्थकात् ईङ् धातोरपि तृच्प्रत्ययो न भवति। अपि च यया रीत्या सहेताशब्दस्य निष्पत्तिः अभवत् तद् योगशक्त्या मध्यमवर्णरूपार्थस्यार्थोऽप्यसम्भवः यतोहि मध्ये आङ्शब्दस्य सन्निवेशं विधाय तस्य, आसमन्तादित्यर्थः कृतः तदर्थस्य न काचिदुपयोगिता न वा केनापि पदार्थेन सह तस्यान्वयः। अतः आसमन्तादित्यर्थो व्यर्थः। न च सहेताशब्दो मध्यमवर्णेषु रूढ इति वाच्यम्। रूढौ प्रमाणाभावात्। तस्मादन्योन्याश्रयदोषवारणायान्य कश्चनोपायः कर्तव्यः।

### 07 सम्पूर्णसूत्रावृत्तिः-

इतः पूर्वं मुख्यतया अन्योन्याश्रयदोषवारणाय षड् उपायाः वर्णिताः तेषु सर्वेषु पक्षेषु दोषाः, अतः तद्दोषवारणाय यो मूर्धाभिषिक्तः उपायः सम्पूर्णसूत्रावृत्तिरूपः तं दर्शयति शेखरकारः भाष्येऽपि[1]। भगवता भाष्यकारेण सर्वोऽपि हल् तं तमवधिं प्रत्यन्तं मत्वा सर्वेषां हल्वर्णानामित्संज्ञायाः आपत्तिं विधाय धातुप्रातिपदिकप्रत्ययनिपातागमादेशानां व्यवसितपदार्थत्वेन प्रकल्प्य धातुत्वादिधर्माणां पर्याप्तिसम्बन्धेन यदधिकरणं तेषामित्संज्ञेत्युक्तम्। अर्थात् धातुप्रातिपदिकप्रत्ययनिपातागमादेशानां य अन्त्यो हल्वर्णः सः इत्संज्ञको भवतीति भाष्यतात्पर्यम्। परञ्चेदं कथं सम्भवति वाक्यार्थज्ञाने पदार्थज्ञानस्य कारणतासत्वेन यावत्हल्पदार्थ-ज्ञानं न भविष्यति तावत् सूत्रार्थबोधासम्भवः हल्पदार्थज्ञानन्त्वित् पदार्थज्ञानाधीनम्। उक्तञ्च लकारस्यानुबन्धत्वेनाज्ञापितत्वात् हल्ग्रहणस्याप्रसिद्धिः हलन्त्यमित्संज्ञा भवतीत्युच्यते। लकारस्यैव तावदित्संज्ञा न प्राप्नोति[2]। इदञ्च भाष्यमन्योन्याश्रयदोषसन्देहपरमेव। तदनन्तरं समाधानमपि दत्तम्, यत् "सिद्धं तु लकारनिर्देशात्" अर्थात् एतत् सिद्धम्। कथं लकारनिर्देशः कर्तव्यः हलन्त्यमित्संज्ञा भवति लकारश्चेति वक्तव्यम्। यद्यपि लकारस्येत्संज्ञां विना हल्पदार्थज्ञानं न सम्भवति तथापि 'पाठक्रमादर्थक्रमो बलीयः' इति न्यायेन पूर्वं लकारस्यैवेत्संज्ञा विधेयेति भाष्यतात्पर्यम्। अन्योन्याश्रयदोषपरिहाराय द्वितीयं समाधानं कृतं यत् "एकशेषनिर्देशाद्वा

1. लघुशब्देन्दुशेखर हिन्दी टीका 31 पृष्ट आचार्य विश्वनाथकृत प्रकाशन चौखम्बा संस्कृतप्रतिष्ठान, नई दिल्ली
2. 01/01/03 पा. सू. भाष्य

इति" तृतीयं समाधानं कथितं यत् अथवा लृकारस्यैवेदं गुणभूतस्य ग्रहणम्, तत्र उपदेशेऽजनु–0 इति सूत्रेणेत्संज्ञा भविष्यति। चतुर्थं समाधानमित्थं वर्तते आचार्यप्रवृत्तिर्ज्ञापयति यत् भवति लकारस्येत्संज्ञेति यदयं णलं लितं करोति। एवं रीत्या भाष्यकारेण 'हलन्त्यम्' इति सूत्रे, अन्योन्याश्रयदोषमाशङ्क्य तद्वारणाय समाधानचतुष्टयमुक्तम्। तत्र तृतीयं समाधानं चतुर्थं समाधानं न समीचीनम्, एकदेश्युक्तित्वात्कथमिति चेत् विचार्यते तृतीयसमाधानस्येदमेव तात्पर्यं यत् महेश्वरसूत्रेषु यत् चतुर्दशं सूत्रं तत्तु हल् इत्याकरकमेव किन्तु हकारोत्तरवर्त्यकारस्य लृकारस्य चादाय "आद्गुणः" इति सूत्रेण गुणे सति हल् इति निर्देशः उपपद्यते। एवमेव हलन्त्यम्, इत्यत्रापि हल् इत्येव वर्तते यणि कृते सति हलन्त्यम् इति निर्देशो भवति। हल् इति सूत्रकल्पने तु न कश्चित्दोषः। 'उपदेशेऽजनुनासिक इत्' इति सूत्रेण लृकारस्येत्संज्ञायाम्, इत्पदार्थज्ञाने सति हल्पदार्थज्ञानसम्भवेन हलन्त्यम् सूत्रस्य वाक्यार्थबोधे सत्यन्योन्याश्रयदोषस्या-भावात्। न च 'हलन्त्यम्' इति सूत्रार्थबोधं विना चकारस्येत्संज्ञायाः आभावादच्प्रत्याहारासिद्धौ ल्कारस्येत्वाभावात्। एवञ्च हल्प्रत्याहारज्ञानाधीनचकारस्येत्वज्ञानं तज्ज्ञानाधीनञ्चाच्प्रत्याहार-ज्ञानं तदधीनञ्च ल्कारस्येत्वज्ञानं तदधीनं च हल्प्रत्याहारज्ञानमिति चक्रकापत्तिसत्वेन नेदं समाधानमिति वाच्यम्। लृदितः इति ज्ञापकात् लृकारस्येत्संज्ञासम्भवात्। अन्योन्याश्रयदोषवारण-परकभाष्योक्तचतुर्थसमाधानस्याऽयमाशयः "परस्मै पदानाम्–0 इति सूत्रेण लिटः स्थानिकतिपः स्थाने णलादेशो विधीयते। तत्र णलो लकारः "लिति च[1]" इति सूत्रेण विधीयमानस्वरविधानार्थम्। लकारस्येत्संज्ञाभावे लित्वाभावेन तत्प्रयुक्तः स्वरोऽसम्भवः, एवञ्च 'लिति च' इति स्वर-विधानसामर्थ्यात् ज्ञाप्यते यत् भवति लकारस्येत्संज्ञा, लकारस्येत्संज्ञायान्तु हल्पदार्थज्ञाने कुत अन्योन्याश्रयः। तृतीयं समाधानमेकदेश्युक्तिपरमित्यत्रेदमेव कारणं यत् हल्प्रत्याहारसिद्धेः प्राक् लकारस्येत्संज्ञाया असम्भवात्। यतोहि लकारस्येत्संज्ञायां सत्यामच्प्रत्याहारः, अच्प्रत्याहारे लकारस्येत्संज्ञेति रीत्या, अन्योन्याश्रयस्य तादवस्थ्यात्। लृदितः इति ज्ञापकेन संज्ञाकरणमनुचितम्। सर्वेषामचामित्संज्ञाकाले लृकारस्यापीत्वलाभात्। ज्ञापकेन कार्यं तदैव सम्भवति यदा ज्ञापकं विना न निर्वाहः, सति निर्वाहे ज्ञापकस्यानुचितत्वात्। अत एव चतुर्थसमाधानमप्यनुचितम्। चादीनामित्संज्ञाप्रवृत्तिकाले णलो लकारस्यापि तत्प्रवृत्या ज्ञापकासम्भावात्। तस्मात्समाधान-द्वयमेवावशिष्टम्। तत्र किं समाधानमुचितमिति विचारणायां शेखरकारमते लकारश्चेत्भवति, एतत्भाष्यसाधकमेव "एकशेषनिर्देशाद्वा" इति भाष्यम्। शेखरकारस्याऽयमभिप्रायः। भाष्यकारेण यत् कथितं यत् लकारश्चेत् वक्तव्यम्, किन्तु लकारस्येत्संज्ञा केन सूत्रेण कथञ्च भवतीति सन्देहे सत्युत्तरितं यदिदं कार्यं 'हलन्त्यम्' इति सूत्रे "एकशेषनिर्देशात्सिद्धम्'। अर्थात् हल् च हल् च इत्येकशेषेण निर्देशं विधाय पाणिनिना हलन्त्यम्' इति सूत्रमुच्चारितं यतः विरुद्धानेकार्थविषये बोधृणां बोधस्त्वावृत्त्यैव भवति, अतः हल्पदस्यावृत्तिः, अन्त्यम् पदस्य च हलिति पदद्वयेन तथैवान्वयः यथा 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकेन द्वन्द्वघटितेन पदेन सहान्वयो' भवति। एवं रीत्या उभयोः हल्पदयोः अन्त्यपदेन सह सम्बन्धाभिधाने हलन्त्यम् हलन्त्यम् इति रूपेण हलन्त्यम् इति सूत्रद्वयं भवति। सूत्रद्वयेऽपि हलः अन्त्यम्, हलन्त्यम् इति षष्ठीतत्पुरुषसमासः।

1. पा. सू. 06/01/193

षष्ठ्यर्थसम्बन्धस्तु निरूप्यनिरूपभावरूप एव। तत्र् सूत्रद्वयेऽपि, उपदेश इति पदं सम्बद्ध्यते। तथा च प्रथम हलन्त्यम् इति सूत्रस्यार्थो भवति यत् हलिति चतुर्दशसूत्रस्याऽन्त्यं लकारस्येत्संज्ञा भवति। उपदेशपदसम्बन्धात् चतुर्दशसूत्रलाभः। उपदेशे हल्त्वेत्याकारकानुपूर्विबोधकपदस्या-भावात्। ननु सूत्रद्वयेऽपि हलः अन्त्यम्, इति षष्ठीसमासं विधाय हल्पदोत्तरषष्ठी निरूप्य-निरूपकभावात्मकेति स्वीकृत्यार्थः सम्पादितः स तु प्रथमसूत्रे सम्भवति यतोहि तत्र लकारे हल्सूत्रनिरूपितान्त्यत्वं सम्भवति, किन्तु यस्य हलन्त्यम् सूत्रस्यार्थोऽस्ति यत् हलन्त्यमित्भवति तत्राभेदस्य प्रतीतिसत्वेन षष्ठ्या निरूप्यनिरूपकभावरूपभेदसम्बन्धः कथं सम्भवतीति चेन्न, यथा राहो शिरः इत्यत्र यो राहुः स एव शिरः यश्च शिरः स एव राहुः इति कृत्वा उभयोरभेदः। उभयोरभेदे तु भेदख्यापिका षष्ठी कथमपि न सम्भवति किन्तु राहुपदात्षष्ठ्युपपादनाय राहु पदे एव स्वनिरूपितावयवत्वमारोप्यते, एवं सति राहु-पदवाच्य अवयवयित्वं केतुपदवाच्ये शिरषि, अवयवत्वमुपपद्यते, येन भेदमूलिकषष्ठी भवति, तथैव हलन्त्यमित्यत्रापि व्यपदेशिवद्भावेन हल्पदे एव हल्निरूपितान्त्यत्वस्यारोपं विधाय वास्तविकाभेदे, आरोपितं भेदमादाय षष्ठ्युपपद्यते। एवं रीत्या 'हलन्त्यम्' सूत्रघटक-हल्पदे, एकशेषं स्वीकृत्य, हल्पदमावर्त्य, अन्त्यं पदेन सहान्वयं विधाय हल्चतुर्दश-सूत्रस्यान्त्यस्य लकारस्येत्संज्ञां कृत्वा अन्योन्याश्रयदोषवारणं कृतं शेखरकृता। किन्तु 'हलन्त्यम्' सूत्रे एकशेषस्वीकारे केचन आक्षिपन्ति यदत्रैकशेषो न सम्भवति कथमिति चेत् श्रूयताम्, हल्सूत्रबोधकहल्पदार्थस्यान्त्यपदार्थेन सहान्वयेऽप्यद्यं यावत् हकारादिलान्तसमुदायबोधकहल्पद-शक्तिग्रहाभावेन हल्पदार्थयोरसम्भवेनैकधर्मावच्छिन्ननिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्व-रूपसाहित्यविरहात्। न चास्मादादीनां द्वितीयहल्पदार्थस्य ज्ञानविरहेऽपि पाणिनेः द्वितीय-हल्पदार्थस्य ज्ञानसत्वात्साहित्यसम्भव इति वाच्यम्। करिष्माणशक्तिग्रहोपायकपदस्य तदभि-प्रायेण, आचार्यः पूर्वमप्रयोगः इति 'हलन्त्यम्' इति सूत्रे शब्दरत्ने निर्णीतत्वात्। न चैकस्य हल्पदार्थस्य ज्ञानात् तत्रान्त्यपदार्थनिष्ठविशेष्यतानिरूपितप्रकारतामाश्रित्य बोधे जाते पश्चात्क्रमेण द्वितीयहल्पदार्थज्ञातेऽपरो बोध इति वाच्यम् बोधद्वयस्यान्त्यपदावृत्तिमन्तरेणासम्भवेन प्रचीनमतात् वैलक्षण्याभावात्। अपि च हल्पदवाच्यत्वेन यथा कथञ्चित् हल्पदार्थज्ञानादेकशेषसम्भवेऽपि द्वितीयहल्पदनिष्ठशक्तेः अद्य यावदज्ञातत्वेनेत्वपदार्थोपस्थित्यभावात् पूर्वं पदार्थद्वयविषयको बोधो वक्तुमशक्यत्वात्।

अन्ये तु भाष्यकारेण सहविवक्षायां जायमान एकशेषः प्रत्याख्यातः किन्तु क्वचिद्-सहविवक्षायां जायमान एकशेषः स्वीकृत एव। यथा "द्विर्वचनेऽचि च" 'संज्ञोपसर्जनीभूतास्तु न सर्वादयः' इति वार्तिकप्रत्याख्यानाय "सर्वादीनि सर्वनामानि" इति सूत्रे च। तथा च भाष्यप्रामाण्यात् हल् च हल् च इत्यत्र सहविवक्षाया अभावेऽप्येकशेषः स्वीकरणीय एव। 'हलन्त्यम्' सूत्रभाष्येऽपि हल् च हल् चेति हल् इत्येकवचननिर्देशात्शात् प्रयोगसंस्कारफलको विभक्त्यन्तैकशेषो विवक्षितत्वात्। तस्मात् हल्पद एकशेषस्वीकारे न काचिद्धानिः।

एतावत्पर्यन्तं मया 'हलन्त्यम्' आदिरन्त्येन सहेता' इत्यनयोर्मध्ये यः अन्योन्याश्रयदोषः आसीत् तद्वारणोपायाः तत्तदग्रन्थरीत्या प्रदर्शिताः, अधुना "न विभक्तौ तुस्माः" 'हलन्त्यम्'

इत्यनयोर्मध्ये यः दोषः तदुपरि विचारः क्रियते। ननु "न विभक्तौ तुस्माः" इति सूत्रेण विभक्तिस्थानां तवर्गसकारमकाराणामित्संज्ञा निषिद्ध्यते। किन्तु प्राप्तौ सत्यां निषेधः इति सिद्धान्तरीत्या केन सूत्रेण प्राप्तेत्संज्ञायाः निषेध इति जिज्ञासायाम् 'हलन्त्यम्' इति सूत्रमेव गृहाण। यतो यज्ज्ञानस्योत्तरकाले बाधः तज्ज्ञानमप्रामाणिकमिति भिया 'हलन्त्यम्' इत्युपसर्ग-वाक्यार्थबोधो "न विभक्तौ तुस्माः" इत्यपवादवाक्यार्थबोधोत्तरम्, वाक्यार्थज्ञाने पदार्थज्ञानं कारणमिति रीत्या "न विभक्तौ तुस्माः" इति वाक्यार्थबोधः विभक्तिपदार्थज्ञानाधीनः, विभक्तिपदार्थज्ञानञ्च सुप्तिङ्पदार्थज्ञानाधीनम्, सुप्तिङ्पदार्थज्ञानन्तु, 'आदिरन्त्येन सहेता' इति वाक्यार्थज्ञानाधीनम्, तद्बोधश्चेत्पदार्थज्ञानाधीनः तच्च 'हलन्त्यम्' इति ज्ञानाधीनम्, तज्ज्ञानम् "न विभक्तौ तुस्माः" इति ज्ञानाधीनमिति रीत्या चक्रकापत्तिरिति चेन्न, वाक्यार्थबोधं प्रति पदनिष्ठवृत्तिज्ञानाधीनार्थोपस्थितिः तात्पर्यज्ञानञ्च कारणम्। तच्च तात्पर्यं प्रमात्वेनैवेति नाग्रहः, अतः अपवादवाक्यार्थबोधात्पूर्वं हल्पदे तात्पर्यप्रमात्वविरहेऽपि तात्पर्यनिश्चये पदार्थो-पस्थितिसत्वेनोत्सर्गबोधं प्रति बाधकाभावात्। 'हलन्त्यम्' इति सूत्रस्य वाक्यार्थबोधे जाते तु नान्योन्याश्रयः, यतोहि यथा अभावज्ञानाय प्रतियोगिज्ञानस्यावश्यकता भवति तथा प्रतियोगि-ज्ञानाय नाभावाज्ञानस्य कारणता कस्यापि सम्मताऽस्ति। इदं तु निश्चितं यत् प्रतियोगिज्ञानं विना निषेधस्य वाक्यार्थबोधो न भवितुं शक्नोति। घटाभावज्ञानाय घटसत्तावश्यकी किन्तु घटज्ञानाय घटाभावज्ञानं नावश्यकम्। प्रकृते "न विभक्तौ तुस्माः" इति सूत्रजन्यवाक्यार्थबोधाय विभक्तिपदार्थज्ञानस्यापेक्षा सत्वेऽपि, "हलन्त्यम्" सूत्रघटकपदार्थोपस्थितिसत्वे वाक्यार्थबोधा-भावे प्रमाणाभावात्। अर्थात् "हलन्त्यम्" इति वाक्यार्थबोधाय "न विभक्तौ तुस्माः" इति सूत्रवाक्यार्थबोधस्य न काप्यपेक्षा।

### अत्र केचिदित्थं वदन्ति-

यथा प्रतियोगिज्ञाने अभावज्ञानस्य कारणता नास्ति तथा अभावज्ञानेऽपि प्रतियोगिज्ञनस्य कारणता नास्ति, नहि घटज्ञाने अभावः कारणम्, न वा अभावज्ञाने घटज्ञानं कारणम्। एवञ्च 'हलन्त्यम्' इति वाक्यार्थबोधे "न विभक्तौ तुस्माः" इत्यस्य न कारणता। एवमेव "न विभक्तौ तुस्माः" इति वाक्यजन्यवाक्यार्थबोधे 'हलन्त्यम्' इत्यस्य कारणता। अत एव, अभावः चतुर्विधः, अभावः, प्रमेयः, अभावः पदार्थः, इत्यादौ प्रतियोगिज्ञानाभावेऽप्यभावज्ञानं जायते। न च प्रतियोगिविशेषिताभाव ज्ञानं प्रतियोगिज्ञानमन्तरा न भवतीति प्रतियोगिज्ञानं प्रतियोगिविशेषिताभावज्ञानं प्रति कारणमिति कार्यकारणभावस्वीकारे न काचिदापत्तिरिति वाच्यम्। विशिष्टबुद्धिसत्वेन कार्यकारणभावस्य क्लृप्तत्वेन तेनैव प्रतियोगिविशेषिताभावबुद्ध्या-पत्तौ निरुक्तकार्यकारणभावस्य निर्युक्तिकत्वात्।

### अपरे त्वित्थं वदन्ति-

नञ्पदार्थतावच्छेकं यद् विलक्षणं रूपं तेन रूपेणाभावज्ञानं प्रतियोगिज्ञानमन्तरा न सम्भवति, अत एव लोके न गच्छति न भवतीत्युक्ते को न गच्छति किं न भवतीति जिज्ञासा समुदेति। तथा चाभावज्ञानमित्यस्य नञ्पदवाच्यतावच्छेकविलक्षणरूपेणाभावज्ञाने

प्रतियोगिज्ञानमिति कार्यकारणभावस्वीकारेणादोषात्। अपि च प्रतियोगित्वेन विवक्षितपदार्थज्ञानं विना निषेधशास्त्रजन्यबोधस्य यत्फलं लक्ष्ये प्रवृत्तिः तस्यैव वैय्यर्थापत्तेः। तस्मात् निषेध-शास्त्रस्य "न विभक्तौ तुस्माः" इति वाक्यार्थबोधात्पूर्वमेवोत्सर्गशास्त्रस्य "हलन्त्यम्" इति सूत्रस्य वाक्यार्थबोधो भवति। नन्वपवादशास्त्रस्य वाक्यार्थबोधात्पूर्वमुत्सर्गशास्त्रस्य वाक्यार्थबोध-जाते, उत्सर्गस्य लक्ष्यसंस्कारकप्रवृत्तिः सर्वत्र भविष्यति। एवं रीत्या यद्युत्सर्गशास्त्रप्रवृत्तिः अपवादविषयेऽपि जाता तदा भुक्तवन्तं प्रति मा भुङ्थाः इति सिद्धान्तरीत्या अपवादशास्त्र-प्रणयनवैय्यर्थापत्तिः तस्मात् पूर्वं हि अपवादा अभिनिविशन्ते पश्चादुत्सर्गाः इति परिभाषा-प्रतिपादितसिद्धान्तरीत्योत्सर्गशास्त्रजन्यवाक्यार्थबोधात्पूर्वम्, अपवादशास्त्रजन्यवाक्यार्थबोध आवश्यकः, एवं सति 'हलन्त्यम्' न विभक्तौ तुस्माः' इत्यनयोर्मध्ये अन्योन्याश्रयदोषः तदवस्थ एवेति चेन्न, "प्रातिपादिकार्थलिङ्परिमाणवचनमात्रे प्रथमा" इति सूत्रे पठितायाः पूर्वं हि अपवादा अभिनिविशन्ते पश्चादुत्सर्गाः इति परिभाषायाः नेदं तात्पर्यं यत् उत्सर्ग-शास्त्रीयवाक्यार्थबोधात्पूर्वम्, अपवादशास्त्रीयवाक्यार्थबोधो भवति येनान्योन्याश्रयदोषः तद्वस्थ एव स्यात्, किन्त्विदं तात्पर्यं यत् येषामन्तःकरणं विषयवासनाजन्यदोषहीनम्, ज्ञानञ्चाभिर्भूतं तेषामलौकिकज्ञानवतां स्वतः सिद्धज्ञानिनामपि शब्दानां साधुत्वासाधुत्वविषयकं भवति। अलौकिकज्ञानरहितानां लौकिकानामपि शब्दसाधुत्वासाधुत्वविषयकं ज्ञानं जायते। तत्रालौकिक-ज्ञानवतामृषीणां सूत्रमन्तरैव भवति, अतस्ते लक्ष्यैकचक्षुष्काः। पाणिनसूत्राणमवलम्बनेनैव येषां शब्दानां ज्ञानं भवति ते तु लक्ष्यैकचक्षुष्काः, अर्थात् पाणिनिप्रभृतयो लक्ष्यैकचक्षुष्काः अस्मादृशाः लौकिकास्तु, लक्षणैकचक्षुष्काः तत्र लक्ष्यैकचक्षुष्काः पूर्वमपवादविषयं पर्यालोच्य यत्रापवादशास्त्रस्य विषयता न भवतीति लक्ष्यं निर्णयन्ति, इदञ्च लक्ष्यं नापवादशास्त्रस्येति निश्चयं कृत्वैवोत्सर्गशास्त्रेण लक्ष्यं संस्कुर्वन्ति। अन्यथा उद्देश्यतावच्छेकावच्छिन्ननिखिल-शास्त्राणां संस्कार उत्सर्गशास्त्रेणैव करणे, उत्सर्गापवादयोर्व्यवस्थाभङ्गापत्तिः क उत्सर्गः कः अपवादः इति निर्णयाभावात्। अत अपवादविषयेऽप्युत्सर्गशास्त्रप्रवृत्तिः। तत्प्रवृत्युत्तरापवाद-शास्त्रस्य तथैव वैय्यर्थापत्तिः यथा भुक्तवन्तं प्रति मा भुङ्थाः इति निषेधवाक्यस्य, तस्माद-पवादशास्त्रस्य वैय्यर्थापत्तिः। एवञ्चोत्सर्गशास्त्रस्य पूर्वं बोधे जातेऽपि, अपवादशास्त्रबोधोत्तर-मपवादशास्त्रीयोद्देश्यतावच्छेकावच्छिन्नातिरिक्तत्वेनोत्सर्गशास्त्रीयोद्देश्यतावच्छेकावच्छिन्ने संकोचं कृत्वा प्रवर्तनीयम्। ननु लक्षणैकचक्षुष्काणां मते राम+ङे इत्यस्य प्रसङ्गे "ङेर्यः" इत्यनेन राम+य इत्यस्य "सुपि च" इति सूत्रेण रामाय इत्यस्य च साधुत्वबोधनेन परस्परविरोधात् अप्रामाण्यापत्तिरिति चेन्न, 'उपायाः शिक्षमाणानां बालानां चोपलालनाः' इति भतृहरिप्रतिपादित-सिद्धान्तरीत्या अदन्तादङ्गात्परस्य ङे, इत्यस्य यादेशं विधाय राम+य इति समुदायस्य साधुत्वं बोधितम्, 'ङेर्यः' इति शास्त्रेण, ततश्च मत्प्रवृत्युत्तरप्रवृत्तिमता शस्त्रेण यत्बोधितं तदपि साधु अतः यञादिप्रत्ययाव्यवहितपूर्वत्वविशिष्टादन्ताङ्गस्य दीर्घविशिष्टस्य रामाय इति समुदायस्य साधुत्वं बोधितं 'सुपि च' इति शास्त्रेण। अतः पूर्वशास्त्रेणोत्तरशास्त्रस्य कृते या अभ्यनुज्ञा प्रदत्ता तया अभ्युनुज्ञाकल्पनेनादोषात्। अन्यथा उद्देश्यतावच्छेकावच्छेदेनोत्सर्गशास्त्रप्रवृत्ता-वपवादशास्त्रवैय्यर्थापत्या, उत्सर्गशास्त्राप्रवृत्तावप्रामाण्यबोधनपूर्वकमपवादशास्त्रीयोद्देश्यता-

वच्छेकव्यापकतावच्छेदकतामुत्सर्गापवादमुत्सर्गापवादशास्त्रीयविधेयतान्यतरत्वे ण्वुल्तृजादिवत् पर्यायापत्तिः। ननु 'भुक्तवन्तं प्रति मा भुङ्‌थाः' इति न्यायस्येदमेव तात्पर्यं यत् जातस्य निवृत्तिर्न भवति। अमुं सिद्धान्तमादौ यैः वोक्तं यत् निषेधशास्त्रप्रवृत्तिः पूर्वं भवति, किन्तु न्यायोऽयं व्यभिचरितः लुगादिस्थले, यतोहि लिह् धातोः पूर्वं क्विप् प्रत्ययो भवति, अनन्तरं तस्य सर्वापहारिलोपः, न्यायसिद्धान्तरीत्या तस्य निवृत्तिः न भवितव्यम्, किन्तु निवृत्तिः जाता अतो व्यभिचारयुक्तः। एवञ्चोक्तन्यायसिद्धान्तमादाय, अपवादशास्त्र वाक्यार्थबोधः पूर्वमिति चेन्न, यत्र पूर्वमुत्पत्तिः अनन्तरं सर्वापहारिलोपः तत्र प्रत्ययानामनुत्पत्तिकल्पनेन दोषाभावात्। प्रक्षालनादिपङ्कस्य दूरात्स्पर्शनं वरमिति सिद्धान्तात्। ननु जातनिवृत्तिस्वीकारे भुक्तवन्तम्, इति न्यायो व्यभिचारयुक्तो भवति, व्यभिचारवारणाय प्रत्ययानामनुत्पत्तिरेव स्वीकृता तच्च युक्तं न वेति विचारयति नागेशोक्तिप्रकाशकारः[1]। ननु लुकि स्थले जातनिवृत्तिभिया प्रत्ययानामनुत्तपत्तिर्न भवतीति स्वीक्रियते तथा लोपस्थलेऽपि येषां प्रत्ययानां लोपो भवति तेषामनुत्पत्तिरेव स्वीक्रियताम्। एवं सति हल्ङ्याभ्यः इति सूत्रेण यत्र स्वादिविभक्तिषु सु प्रत्ययस्य लोपो भवति तत्र 'स्वौजस्' इति सूत्रेण सुप्रत्ययस्य अनुत्पत्तिरेवेति फलत आगच्छति। अर्थात् हल्ङ्यादिसूत्रेण स्वौजस् इत्यत्र प्रातिपदिकपदे हलन्ताद्यतिरिक्तत्वेन संकोचः तथा सति पन्थाः इत्यादावपि सोः अनुत्पत्तिरिति चेन्न, हल्ङ्यादिसूत्रेण परिनिष्ठितप्रयोगकालिकहलन्तादतिरिक्तत्वेन संकोचस्याश्रयणात्। न चैवं राजेत्यादेरपि परिनिष्ठिते हलन्तत्वाभावेन तत्रापि सोः श्रवणापत्तिरिति वाच्यम्। अगत्या सुब्विधिशब्दे तन्त्रेण सुप्कर्मकविधावपि नलोपस्याश्रयणासिद्धत्वेन परिनिष्ठितप्रयोगकालिक-हलन्तत्वबुद्धिसम्भवात्। "पथिमथि–0 इति सूत्रादौ, अनुवर्तमानसुप्पदे विषयसप्तम्याश्रयणेन पूर्वमत्वादिषु सत्सु प्रक्रियाकालिकहलन्तातिरिक्तत्वेन संकोचेऽपि क्षतिविरहेण प्रकृतेऽदोषाच्च। अथेवमपि प्रसक्तकर्मकानुपत्तेरेवलोपसंज्ञायाम् "प्रत्ययलोपे–0" इत्यस्य प्रत्ययाभिन्नप्रसक्त-कर्मकानुत्पत्तौ प्रत्ययलक्षणं भवतीत्यर्थात् राजेत्यादौ नलोपवत् "कर्मण्यण्" इत्यस्यापवादभूतेन "आतोऽनुपसर्गे कः" इत्यनेन प्रसक्तस्याणोऽपवादशास्त्रजसंकोचेनानुत्पत्या प्रत्ययलक्षणप्राप्तेरिति चेन्न, आतोऽनुपसर्गे' इत्येतच्छास्त्रीयोद्देश्यतावच्छेदककुक्षावणोऽप्रवेशेनाणत्वेन रूपेणाणः प्रसक्तेरनपेक्षणेन कर्मण्यण्' इत्यत्र संकोचमात्रस्य तेन कारणात्। राजेत्यादौ तु हल्ङ्यादिसूत्रे सुतिसीनामुपादानेन सुत्वादिरूपोद्देश्यता– वच्छेदकरूपेणोद्देश्यसिद्धेरपेक्षणे नास्ति तत्प्रसक्तिरिति बोध्यम्। न चैवमपि "न षट्स्वस्रादिभ्यः" इत्यादिशास्त्रीयोद्देश्यतावच्छेदकरूपेणोद्देश्यसिद्धये ङीबादेः प्रसक्तेरावश्यकतया षट्संज्ञकादौ प्रत्ययलक्षणेन ङीबादिप्रयुक्तकार्यापत्तिरिति वाच्यम्। तैर्ङीबाद्यभावस्यैव विधानेन ङीबादेः प्रतियोगितया विधेयकोटौ प्रवेशेन विधानात्प्राक् तेषां प्रसक्तेरनपेक्षणेन प्रत्ययलक्षणाप्राप्तेः। न च लुकानुत्पत्तेरेवान्वाख्याने "सेर्ह्यपिच्च" इति शास्त्रीयसिपदार्थे अदन्ताव्यवहितोत्तरत्वाभावत्वेन संकोचस्यैव फलितत्वेन 'भव' इत्यादौ हेरनुत्पत्तावपि सेः श्रवणं दुर्वारम्। किं बहुना आदेशलुङमात्रे स्थानिनां श्रवणापत्तिरिति

---

1. नागोशोक्तिप्रकाश, लेखक खुद्दी झा, प्रकाशक चौखम्भा संस्कृत सिरीज, सम्पादक जयकृष्णदास हरिदास, सन् 1938, संज्ञाप्रकरण पृ.सं. 38

वाच्यम्। "अतो हेः" इत्यादेस्तात्पर्यग्राहकत्वेन लोट्स्थानिकसेः प्रसङ्गेऽभावस्यादन्ता-व्यवहितोत्तरत्वाभाववतो हेश्च साधुत्वबोधनेनादोषात्। न चैवमुद्देश्यतावच्छेदकलोटस्थानिक-सित्वव्यापकत्वस्य द्वितीये विधेये हानिरिति वाच्यम्। जातिपक्षाश्रयणेन लोटस्थानिकसित्व-मुद्दिश्योभयोर्विधानेनोद्देश्यतावच्छेदकसित्वत्वाधिकरणे सित्वे स्वप्रतियोगिवृत्तित्वसम्बन्धा-वच्छिन्नप्रतियोगिताकाभावस्य स्वस्थानिवृत्तित्वसम्बन्धावच्छिन्नप्रतियोगिताकस्यादन्ता-व्यवहितोत्तरत्वाभावविशिष्टहेरभावस्य च तत्रासत्वेन व्यापकत्वोपपत्तेः। एवं भूतो व्याप्यव्यापकभावः "हलादि शेषः" इति सूत्रे कैय्यटः प्रदर्शितः। तत्र हि आट्, आटतुः इत्यादौ 'हलादि शेषः' इत्यस्य प्रवृत्यर्थमभ्यासमुद्दिश्यादीतरहल्निवृत्तिमादिहल्शेषञ्च विध ायोद्देश्यतावच्छेकाभ्यासत्वत्वव्यापकत्वं विधेययोः साधितम्। भाष्योक्तमुपायत्रयं व्यक्ति-पक्षाभिप्रायेणेति चोक्तम्। वस्तुतस्तु लुकानुत्पत्तेरेवान्वाख्यानमिति चिन्त्येमेव। अन्यादेशेष्वि-स्थानिघटितबुद्धिप्रसक्तावादेशघटितं साध्विति बोधनेन जातनिवृत्तेराभावेन भुक्तवन्तमिति न्यायस्य विषयाभावात्। भावरूपादेशविषयेऽन्यादृशस्य स्थान्यादेश भावस्य गृहणे प्रमाणाभावात्। न च 'पूर्वं हि अपवादाः' इति न्यायः नास्माभिः स्वीक्रियते, एवं सति पूर्वमपवादशास्त्रस्य वाक्यार्थबोधो भवतीत्यत्र न किमपि प्रमाणम्। तथा च "न विभक्तौ तुस्माः" इति सूत्रवाक्यार्थ-बोधपूर्वमेव "हलन्त्यम्" इति सूत्रस्य वाक्यार्थबोधे सति न काचित्विप्रतिपत्तिरिति वाच्यम्। न्यायास्वीकारे उत्सर्गापवादयोः विकल्पापत्तेः, विषयव्यवस्थानापत्तेश्च। उत्सर्गशास्त्रस्य बोधः पूर्वं भवति, अपवादशास्त्रस्य वेति विषये कैय्यटेनेत्थं विचारितम्। प्रकल्प्यचापवाद-विषयं ततः उत्सर्ग अभिनिविशते इति न्यायस्वरूपम्। अत्र हि ततः इति पदे दिग्योगलक्षणा-पञ्चमी तत्करणात्प्रकल्प्यपदस्यार्थो भवति सम्पाद्यम्। तथा चापवादविषयं सम्पाद्योत्सर्गशास्त्र-प्रवृत्तिः। सम्पादनञ्चात्र प्रवृत्तिरेव। यथा 'युवन्' शब्दस्य प्रातिपदिकसंज्ञायां द्वितीयाबहुवचन-विवक्षायां शस्विभक्तौ युवन्+शस्(अस्) इति जाते शस्विभक्तिपरतः "श्वयुमघोनामद्धिते[1]" इति वकारस्य सम्प्रसारणं प्राप्तम्। तत्र यकारस्थाने सम्प्रसारणं वकारस्थाने वेति जिज्ञासायां यदि पूर्वं यकारस्य सम्प्रसारणं स्यात् तदा "न सम्प्रसारणे सम्प्रसारणम्[2]" इति सूत्रस्य वैय्यर्थापत्तिः, यतोहि सूत्रमिदं सम्प्रसारणं परतः पूर्वयणः प्राप्तसम्प्रासरणनिषेधार्थम्, यदि पूर्वं यकारस्थाने स्यात् तदा सम्प्रसारणपरकत्वाभावात् निषेधवैय्यर्थस्यापत्तिः स्पष्टैव। एवञ्च 'न सम्प्रासारणे' इति सूत्रसार्थक्याय पूर्वं परयणः स्थाने सम्प्रसारणमावश्यकम्। अत्र हि उत्सर्गशास्त्रम् 'श्वयुमघोनामद्धिते' इति सूत्रम्। निषेधशास्त्रञ्च 'न सम्प्रसारणे सम्प्रासारणम्' यत्रोत्सर्गशास्त्रम्, अपवादशास्त्रस्य सम्पादनं पूर्वं न क्रियेत् तदा अपवाद-शास्त्रस्य वैय्यर्थापत्तिः स्यात्। तथा च कैय्यटमत अपवादशास्त्रप्रवृत्तिः वाक्यार्थबोधश्च पूर्वं भवतीति। कैय्यटरीत्या प्रकृतेऽपि "न विभक्तौ" इति निषेधशास्त्रस्य 'हलन्त्यम्' इति, उत्सर्गशास्त्रवाक्यार्थबोधात्पूर्वमावश्यकत्वम् अन्योन्याश्रयदोषो दुरुद्धर इति चेन्न "न सम्प्रसारणे–0

1. पा. सू. 06/04/133
2. पा. सू. 06/01/37

इति सूत्रस्थभाष्यविरोधात्। एतदेव सूत्रे भाष्यकारेण विचारितं यत् "न सम्प्रसारणे सम्प्रसारण्[1]" इति सूत्रस्य किं प्रयोजनमिति प्रश्नं विधायोक्तं यत् सम्प्रसारणविधायकसूत्रेषु वचिस्वपियजादीनां ग्रहादीनाञ्च सम्प्रसारणुक्तम्। तत्र यावन्तो यणः सर्वेषां सम्प्रसारणं प्राप्नोति, इष्यते च अनेकेषु यण्षु विद्यमानेषु परस्य यणः स्थाने न तु पूर्वस्य। तत्र यत्नं विना न सिद्ध्यतीति विचार्य बहुषु स्थलेषु ज्ञापकेन परयणः सम्प्रासरणं संसाध्य पूर्वोक्तज्ञापकस्य चानेकधा खण्डनं विधायोक्तं यत् आचार्येण, इङ्गितेन चेष्टितेन निमिषितेन महता वा सूत्रप्रबन्धेनाचार्याणमभिप्रायो वा गम्यते। "एतदेव ज्ञापयति परस्य भविष्यति न पूर्वस्येति यदयं न सम्प्रसारणे सम्प्रसारणमिति प्रतिषेधं शास्ति[2]"। अनेन भाष्येण कैय्यटमतविरोधात् कैय्यटमतं नादरणीयम्। भाष्यसिद्धान्तेन कैय्यटमतविरोध इत्थम् एतदेव ज्ञापयति इति भाष्यस्येदमेव तात्पर्यं विद्यते यत् यदि पूर्वं परस्य यणः सम्प्रसारणं न स्यात् किन्तु पूर्वयणः स्यात् तदा "न सम्प्रसारणे, इति निषेधशास्त्रस्य वैय्यर्थापत्तिः। यतोहि यस्य यणः सम्प्रसारणनिषेधाय सूत्रमिदं वर्तते तस्य यदि सम्प्रसारणजातमेव, यस्य सम्प्रासरणस्य परत्वं मत्वा सम्प्रसारणनिषेधः इष्टः तस्य तु न जातः तदा सूत्रस्य प्रवृत्तय उपयुक्तस्थितेरभावेन सूत्रं व्यर्थीभूय ज्ञापयति यत् पूर्वं परयणः सम्प्रसारणं न तु पूर्वस्य, यदि कैय्यटरीत्या 'प्रकल्प्य चापवादविषयम्' इति परि-भाषाघटकप्रकल्प्यपदस्य सम्पाद्येत्यर्थं मत्वा परिभाषयैव परयणः सम्प्रसारणं स्यात् तदा भाष्यकारेण ज्ञापनमाश्रित्य परयणः पूर्वं सम्प्रसारणं स्यादिति साधनस्यासङ्गतिरेव स्यात्। न च कैय्यटेन प्रकल्प्य चापवाद-इति पदस्य परिभाषाघटकस्य प्रकल्प्य इति पदस्य सम्पाद्येत्यर्थ-करणे भाष्यविरोधः आगतः तत्भाष्यविरोधपरिहाराय कैय्यटस्येदं तात्पर्यं विद्यते यत् "न सम्प्रसारणे सम्प्रसारणम्" इति सूत्रं व्यर्थीभूय प्रकल्प्य चापवादविषयम् इति परिभाषां ज्ञापयति, अनया परिभाषया परयणः स्थाने पूर्वं सम्प्रसारणविधानं तन्निमित्तकस्य पूर्वयणः स्थाने प्राप्तसम्प्रसारणस्य निषेधः इति कैय्यटोक्तिः तस्यैव फलितार्थकथनमिति रीत्या न कैय्यटसिद्धान्तस्य भाष्यसिद्धान्तेन सह विरोध इति वाच्यम्, भगवता भाष्यकारेण यूनः इति लक्ष्यसिद्ध्यर्थं य उपायः प्रदर्शितः तेन सह विरोधात् कैय्यटाशयं प्रकारान्तरेण व्याख्यान-कर्तुमसम्भवात्। यूनः इति लक्ष्यसिद्ध्यर्थं भाष्यकारेण दत्तमुपायान्तरमित्थं वर्तते, तत्र भाष्यकारेण विचारितं यत् "न सम्प्रसारणे सम्प्रासरणम्" इति सूत्रं न कर्तव्यम्, किन्तु 'सम्प्रसारणाच्च' इति सूत्रस्थाने सम्प्रसारणादसम्प्रसारणे इति न्यासः कर्तव्यः। अस्य कल्पितन्यासस्यायमेवार्थो भविष्यति यत् सम्प्रसारणादचि परतः पूर्वरूपं भवति न तु सम्प्रसारणे परे। एवं सति युवन्+अस् इति दशायां यकारवकारयोरेककालावच्छेदेन सम्प्रसारणे जाते, इ+उ+उ+अन् इति स्थिते इकारोत्तरवर्तिनः अकारस्य स्थाने पूर्वरूपो न भविष्यति। वकारस्थानिकसम्प्रसारणपरत्वात्। वकारस्थानिकसम्प्रसारणसंज्ञकादकारात्परस्याकारस्य स्थाने तु पूर्वरूपं भविष्यत्येव सम्प्रसारणपरत्वाभावात्। एवं रीत्याकारस्य पूर्वरूपं विधाय, उभयोरुकारयोः दीर्घानन्तरम्, इ+ऊन्+अस्, इति दशायां यणि सति यूनः इति लक्ष्यसिद्धि-

1. पा. सू. 06/01/37
2. 06/01/37 पा. सू.भाष्य

र्भवितुं शक्नोति। यदि कैय्यटरीत्या प्रकल्प्य चापवाद–0 इति परिभाषायां प्रकल्प्यपदस्यार्थः सम्पाद्येति स्यात् तदा परिभाषयैव पूर्वं परयणः स्थाने सम्प्रासारणे जाते यूनः इति लक्ष्यसिद्धौ बाधकाभावेन तदर्थम् "सम्प्रसारणाश्रयस्य प्रतिषेधः" इति भाष्योक्तिः सर्वथा व्यर्थं भजेत्, तस्मात् कैय्यटोक्तं न समीचीनम्। ननु कैय्यटरीत्या यदि प्रकल्प्यपदस्य सम्पाद्यर्थः स्वीक्रियते तदा अयमपि दोषः। प्रकल्प्य चापवादविषयं ततः उत्सर्गः प्रवर्तते" इति परिभाषास्वरूपम्। परिभाषाघटकप्रकल्प्यपदस्य सम्पाद्यार्थविधाने परिभाषायामेव पठितानां ततः उत्सर्गः प्रवर्तते इत्यादिपदानामर्थसङ्गतिः न स्यात्। यतोहि उत्सर्गशास्त्रमपवादशास्त्रस्य विषयं परित्यज्य पूर्वमेव प्रवर्तते येनापवादशास्त्रप्रवृत्तौ काचित्बाधा न भवति। एवं सत्युत्सर्गशास्त्रप्रवृत्ति–बोधकानां ततः उत्सर्गः प्रवर्तते इत्यादिपदानां न किमप्यौचित्यं प्रतिभाति। उत्सर्गशास्त्रस्य पूर्वमेव प्रवृत्तिजातत्वात्। अनया रीत्या परिभाषार्थसम्पादने कैय्यटमतं न समीचीनं प्रतिभाति किन्तु नागेशमतमेव समुचितम्। नागेशेन प्रकल्प्यपदस्य परित्यज्यार्थः स्वीकृतः। अस्येदमेव तात्पर्यं यत् लक्ष्यैकचक्षुष्काणां कृते अपवादशास्त्रपर्यालोचनस्यावश्यकता न भवति। यतोहि लक्ष्यैकचक्षुष्क अपवादविषयं परित्यज्योत्सर्गशास्त्रेण लक्ष्यसंस्कारं करोति, तस्मात् "हलन्त्यम्" 'न विभक्तौ तुस्माः" इत्यनयोर्मध्ये यः अन्योन्याश्रयः चक्रकापत्तिरूपो दोषश्च प्रदर्शितः सः सर्वथा सम्भवः एव। ननु 'हलन्त्यम्" 'न विभक्तौ तुस्माः' इत्यनयोर्मध्ये अन्योन्याश्रय–दोषपरिहाराय नागेशेन प्रकल्प्य चापवाद इति परिभाषाघटकस्य प्रकल्प्यपदस्य परित्यज्य इत्यर्थः स्वीकृतः किन्तु तथा भूतार्थस्वीकारेऽपि नान्योन्याश्रयदोषपरिहारः, यतोहि "न विभक्तौ–0" इति सूत्रस्योद्देश्यतावच्छेकाक्रान्तेः परित्यागाय तत्सूत्रस्य वाक्यार्थबोधः आवश्यकः, वाक्यार्थबोधानन्तरं विषयस्य ज्ञानसम्भवात्। सूत्रस्य विषयज्ञानसत्त्वे तत्विषयं परित्यज्य यदा "हलन्त्यम्" इति सूत्रस्य प्रवृत्तिः तदा ङकारपकारादीनामनुबन्धानामित्संज्ञा, इत्संज्ञासत्वे सुप्तिङ्प्रत्याहारसिद्धिः, सुप्तिङ्प्रत्याहारयोः ज्ञानसत्वे "न विभक्तौ" इति सूत्रस्य वाक्यार्थबोधः इति रीत्या अन्योन्याश्रयदोषः तद्वस्थ एवेति चेन्न, न पदार्थतुस्मापदार्थज्ञानमात्रेण वाक्यार्थबोध–सम्भवात्। इदं तात्पर्यम् 'न विभक्तौ'–इति सूत्रे नञर्थः पर्युदासार्थकः नञर्थभेदे तुस्मपदार्थस्या–न्वयः, तथा च भवति सूत्रार्थो यत् तुस्मभिन्नाः हलः इत्संज्ञकाः भवन्तीति प्रथमवाक्यार्थेन पादानीमित्वं ततो विभक्तिपदार्थनिश्चये विभक्तिस्थतुस्मभिन्नाः हल इत्संज्ञको भवतीति वाक्यार्थेन विभक्तिस्थतुस्मादीनामित्वं न भवति। ननु आभ्यन्तरप्रयत्नः चतुर्धा इति पक्षे अज्झलोः मिथः सवर्णसंज्ञाप्राप्ता तन्निषेधार्थं पाणिनिना "नाज्झलौ" इति सूत्रं निर्मितम्। अनेन सूत्रेण अज्झलोः मिथः प्राप्तसवर्णसंज्ञा निषिद्ध्यते। यतो वर्णसमाम्नाये ह्रस्वाकार एव पठितः, अतः ह्रस्वाकारेण सह हल्वर्णस्य सवर्णसंज्ञायाः निषेधो भविष्यति न तु दीर्घाकारेण सह, किन्तु रमासु, इत्यत्र षत्वापत्तिवारणाय दीर्घाकारेण सहापि सवर्णसंज्ञायाः निषेधः स्यात्, एतदर्थं भाष्यकारेण तत्र दीर्घाकारस्यापि प्रश्लेषः स्वीकृतः। नाज्झलौ इति सूत्रघटका–च्पदे, अणुदितसूत्रस्य प्रवृत्तिर्न भवति। अतो दीर्घाकारस्य प्रश्लेषः सार्थकः। नाज्झलौ इति सूत्रे अणुदितसूत्रस्य प्रवृत्याभावस्येदमेव कारणं यत् 'नाज्झलौ' इति सूत्रजन्यवाक्यार्थबोधकाले, अणुदितसूत्रस्य वाक्यार्थबोधो नास्ति। तत्र भाष्यकारेण कारणं प्रतिपादितं यत् प्रथमं वर्णा–

नामुपदेशः तावदुपदेशोत्तरकालेत्संज्ञा तदुत्तरमादिरन्त्येनेति प्रत्याहारस्तदुत्तरकला सवर्णसंज्ञा तदुत्तर-कालमणुदिति। एतेन समुदितेन वाक्येनाऽत्र सवर्णानां ग्रहणं न भवति, अस्य वाक्यपरि-समाप्तिन्यास्येदमेव तात्पर्यं यत् 'आदिरन्त्येनेति प्रत्याहारसिद्धौ नाज्झलावित्येतत्वाक्यार्थबोधे सति निर्णीतैतद्विषयपरिहारेण सवर्णसंज्ञा बोधनिश्चये अणुदित्सूत्रेण तावतां ग्रहणं बोधनीयम्। अन्यथा बाधकसम्भावनया तुल्यास्यसूत्रजशक्तिग्रहेऽप्रामाण्यसन्देहेनाणुदिच्छास्त्रजन्यबोधा-नापत्तिः। न चैतत्वाक्यार्थबोधात्प्राक्तन्निश्चयः। एवञ्च यथा "न विभक्तौ तुस्माः" इति सूत्रे न पदार्थतुस्मपदार्थयोः ज्ञानमात्रेण वाक्यार्थबोधः तथा प्रकृतेऽपि (नाज्झलौ) अक्षरसमाम्नायि-काचो हलश्च मिथो न सवर्णाः इति प्रथमवाक्यार्थे जातेऽपि "अणुदित'-0 इति सूत्रवाक्यार्थ-बोधानन्तरमचः तद्गृहीतश्च हल्भिर्मिथो न सवर्णाः इति द्वितीयो वाक्यार्थः स्यादेव। तथा चकारप्रश्लेषो व्यर्थः, वाक्यपरिसमाप्तिप्रतिपादकभाष्यासंगतिश्चेति चेन्न, न विभक्तौ, इत्यत्र विभक्तिग्रहणसामर्थ्याद्द्वितीयवाक्यार्थाङ्गीकारेऽपि, नाज्झलावित्यत्राङ्गीकारे प्रमाणाभावात्। स्पष्टा चेयं रीतिः प्रकृतसूत्रे शब्दरत्ने। तच्चेत्थम् हल् च हल् च इति विग्रहे सति समाहारद्वन्द्वो भविष्यति न वेति विचारणायां दीक्षितेनोक्तं यत् सहविवक्षाया असम्भवाद्द्वन्द्वो दुर्लभः, सहविवक्षा कथं नास्तीति प्रतिपादितं वर्ततेऽस्मिन्नेव निबन्धे। तत्र शब्दरत्नकृता प्रतिपादितं यत् यथैकधर्मावच्छिन्नस्य, एकरूपसंसर्गेण, एकधर्मावच्छिन्नेऽन्वयरूपा सहविवक्षा 'आद्यन्तौ टकितौ' इत्यत्र नास्ति किन्तु द्वन्द्वसमासो भवति तथा 'हल् च हल् च' इत्यत्रापि स्यादित्यत्राशङ्क्योत्तरितं यत् 'आद्यन्तौ टकितौ' इत्यत्र यथासंख्यसूत्रारम्भसामर्थ्येन तथा साधुत्वाङ्गीकारेऽप्यन्यत्र तथा साधुत्वकल्पने मानाभावात्। अस्य शब्दरत्नग्रन्थस्येदमेव तात्पर्यं विद्यते यदेकत्र कल्पनायां प्रमाणसत्वेन तथाविधकल्पनाङ्गीकारेऽपि, प्रमाणाभावादन्यत्र कल्पना न करणीया, तथा प्रकृतेऽपि विभक्तिग्रहणसामर्थ्यादर्थद्वयकल्पनासत्वेऽपि, नाज्झ-लावित्यत्र प्रमाणाभावादर्थद्वयकल्पनाऽसम्भवात्। अपितु भाष्यविरोधोऽपि दुष्परिहरिणीयः। न च भाष्योक्तपरिसमाप्तिन्यायात्, 'हलन्त्यम्' इति सूत्रजन्यवाक्यार्थबोधकाले "उपदेशेऽजनु-नासिकः इत्" इति सूत्रजन्यवाक्यार्थबोधकाले च नाज्झलौ, इति सूत्रस्य 'अणुदित्–' इति सूत्रस्य च वाक्यार्थबोधाभावः, एवञ्च उदितपदार्थज्ञानाभावात् 'न विभक्तौ' इति सूत्रघटकतु-पदार्थज्ञानाभावेन तुपदेन तवर्गबोधकत्वाभावेन विभक्तिनकारस्य पकारस्येवेत्संज्ञा दुर्वारेति वाच्यम् परस्मिन्नित्यादिनिर्देशैः तद्वारणसम्भवात्। यतोहि परशब्दात्सप्तम्येकवचनविवक्षायां ङि विभक्तौ पर+ङि इति दशायाम् "ङसिङ्योः स्मात्स्मिनौ" इति सूत्रेण स्मिन्नादेशे सति परस्मिन्निति शब्दो निष्पद्यते। यदि नकारस्येत्संज्ञा स्यात् तदा निर्देशस्यासंङ्गतिः स्पष्टैव। अत एतन्निर्देशसामर्थ्यात् "हलन्त्यम्" सूत्रघटकहल्पदेन नकारभिन्नस्य बोधः इति कल्पनेनादोषात्। इयञ्च कल्पना अत्यावश्यकी, यतोहि अनेन प्रकारेणेति विग्रहे "इदमस्थमुः" इति सूत्रेण थमुप्रत्यये कृते सति, इत्थं शब्दः सिद्ध्यति। थमुप्रत्यये उकारः मकारपरित्राणार्थक एव, अन्यथा थमुप्रत्ययविधानेऽपि 'हलन्त्यम्' इति सूत्रेण मकारस्य प्राप्तायाः इत्संज्ञायाः निषेधः 'न विभक्तौ तुस्माः' इति सूत्रेण न स्यादतः मकारपरित्राणार्थकमुदितकरणं व्यर्थमेव, तच्च व्यर्थीभूय ज्ञापयति यत् 'न विभक्तौ' इति निषेधोऽनित्यः, अनित्यत्वपक्षे विभक्तिस्थतुस्मानां

पदार्थानां निषेधाभावे विभक्तिस्थनकारस्येत्संज्ञा पकारस्येव दुष्परिहारत्वादिति चेन्न, व्याकरण-शास्त्रे विभक्तिसंज्ञाविधायकं सूत्रद्वयम् "विभक्तिश्च[1]" इत्येकं सूत्रम्, "प्राग्दिशो विभक्तिः[2]" इति द्वितीयं सूत्रम्। तत्र न विभक्तौ इति सूत्रे विभक्तिपदेन कस्य ग्रहणमिति जिज्ञासायां विनिगमकाभावात् "विभक्तिश्च" इति सूत्रेण येषां प्रत्ययानां विभक्तिसंज्ञा भवति तस्यैव ग्रहणम्। एवञ्च थमुप्रत्यये यद्युकारो न स्यात् तदा मकारस्येत्संज्ञापत्तिः तन्माभूत् अत उकारग्रहणम्। तस्मादुकारोच्चारणसामर्थ्यात् निषेधोऽयमनित्य इति वक्तुमशक्य इति चेन्न, यथा विनिगमकाभावात् 'विभक्तिश्च' इति सूत्रग्रहणं न तु 'प्राग्दिशो विभक्तिः' इति सूत्रस्य तथा इदमपि वक्तुं शक्यते यत् 'प्राग्दिशो विभक्तिः' इति सूत्रस्यैव ग्रहणम्, न तु विभक्ति-श्चेति सूत्रस्य'। न च 'न विभक्तौ' इति सूत्रे विभक्तिपदेन 'विभक्तिश्च' इति सूत्रस्य ग्रहणाभावे "जस्शसोः", शकारस्येत्वापत्तिः। लक्ष्यानुरोधात्तस्ववारणसम्भवात्। ननु लक्ष्यानुरोधेन वारणकल्पनापेक्षया "न विभक्तौ"–, इति सूत्रे विभक्तिपदेन तद्ग्रहणमेवोचितम्। तस्मात् विभक्तिपदेन यथा प्राग्दिशो विभक्तिः इत्यस्य ग्रहणं तथा 'विभक्तिश्च' इत्यस्यापि ग्रहणं भवतीति स्वीकरणीयम्।

### समीक्षा/निष्कर्श्च

निबन्धेऽस्मिन्, अन्योन्याश्रयदोषस्य किं लक्षणम्, स च दोषः कथं समापतति, निवारणञ्च कथं भवतीति विचार्य "हलन्त्यम्" 'आदिरन्त्येन सहेता' इत्यनयोर्मध्ये कथं स दोषः समागतः। समागतदोषस्य वारणोपायः मनोरमाकारेण कया रीत्या कृतः। शब्दरत्नकारेण कियन्तः उपायाः कथिताः, शेखरकारेण च कति उपायाः वर्णिताः। उक्तग्रन्थत्रयेण वर्णिताः ये उपायाः ते समीचानाः सन्ति न वेति विचार्य भाष्यस्वीकृतः यः हल्पदार्थज्ञानाय सम्पूर्णसूत्रावृत्तिरूपः सिद्धान्तः तस्यैव विवेचनं कृतमस्ति। अपि च "हलन्त्यम्" न विभक्तौ तुस्माः" इत्यनयोर्मध्ये यः अन्योन्याश्रयदोषः चक्रकापत्तिरूपो दोषो वा आगतः तस्य वारणं कथं जातमिति कृतं वर्तते।

वस्तुतः, नहि, 'हलन्त्यम्' सूत्र एव अन्योन्याश्रयदोषः किन्त्वनेकेषु स्थलेषु दोषोऽयं समागतः, तत्र-तत्र ग्रन्थकृद्भिः वारणोपायः दर्शितः। दोषोऽयं स्थलत्रये भवति। उत्पत्तौ स्थितौ ज्ञप्तौ च। तत्रोत्पत्तिस्थलीयमुदाहरणमस्ति वटवीजौ। वटोत्पत्तिराधीना वीजोत्पत्तिः, तदुत्पत्तिराधीना वटोत्पत्तिः। स्थितेरुदाहरणमस्ति, सिंहसत्वे वनसत्ता वनसत्वे सिंहसत्तेति। ज्ञानस्थलस्योदहारणमस्ति कार्यकारणज्ञानम्। अर्थात् कारणत्वज्ञानम्, तदधीनञ्च कार्यत्वज्ञानम्। तत्रोत्पत्तावस्य दूषकतावीजन्तु तर्कः एव। यथा घटो यदि घटजन्यः स्यात् तदा घटभिन्नः स्यात्, यतो घटो न घटजन्यः अतो न भेदः। कारणं हि अन्यथासिद्धिशून्यकार्याव्यवहित-प्राक्क्षणवृत्तिः भवति, अतो न दोषः। एवमेव ज्ञानस्थलेऽपि येन केनचिदुपायेन एकस्य पदार्थस्य ज्ञानं पूर्वं भवति, अतो तद्दोषवारणं जायते। यत्रोत्पत्तावनादित्वं तत्रान्योन्याश्रयो न

1. पा. सू. 01/01/104
2. पा. सू. 05/03/1

क्षतिकरः वीजाङ्कुरवत्। एवमेव स्थितावपि बोध्यम्। सूत्रेषु लक्षणेषु वा यत्र कुत्राप्यन्योन्याश्रयदोषः तत्र ज्ञानमेव कारणं भवति। यथा शेखरकृता प्रातिपदिकसंज्ञाविधायक पूर्वसूत्रघटकार्थवत्वस्य लक्षणं कृतं यत्-एतत्संज्ञाफलभूतविभक्तीतरसमभिव्याहारानपेक्ष्यलोकेऽर्थविषयकबोधजनकत्वम्[1]। एतल्लक्षणे वारद्वयमन्योन्याश्रयदोषः आपादितः अभिनवचन्द्रिका टीकाकृद्भिः। तत्र प्रथमः विभक्तौ प्रातिपदिकसंज्ञाफलभूतत्वमित्यनयोरंशे। द्वितीयः अर्थवत्वप्रातिपदिकसंज्ञयोर्मध्ये। तत्र विभक्तौ, प्रातिपदिकसंज्ञाफलभूतत्वमित्यशंस्योपलक्षणं मत्वा दोषवारणं कृतम्। विशेषणस्वीकारे दोषः, उपलक्षणस्वीकारे दोषो नास्तीत्यस्येदमेव तात्पर्यं यत् विद्यमानत्वे सतीतरव्यावर्तकत्वं विशेषणत्वम्। यथा नीलो घटः। घटे नीलत्वं यदा विद्यते तदैवेतरघटव्यावर्तको भवति नान्यथा। अविद्यमानत्वे सतीतरव्यावर्तकत्मुपलक्षणत्वम्। यथा काकवन्तो देवदत्तस्य गृहम्। अत्र हि देवदत्तस्य गृहे काकस्य विद्यमानत्वाभावेऽपि देवदत्तेतरगृहस्य व्यावर्तको भवति। अस्येदं रहस्यम्—विशेषणस्थले विशेष्यव्यावृत्तये विशेषणस्यापि ज्ञानमावश्यकम्। उपलक्षणस्थले विशेष्यव्यावृत्तये, उपलक्षणीभूत पदार्थस्य ज्ञानं नावश्यकम्। अतो विशेषणस्थल अन्योन्याश्रयदोषो भवितुं शक्नोति, किन्त्वुपलक्षणस्थले न तद्दोषशङ्कालेशः। प्रकृतेऽर्थवत्वलक्षणे प्रातिपदिकसंज्ञाफलभूतत्वमुलक्षणत्वेन टीकाकृद्भिः स्वीकृतः न तु विशेषणत्वेन अतो नान्योन्याश्रयदोषः। एवमेवार्थवत्वज्ञानाधीना प्रातिपदिकसंज्ञा तज्ज्ञानाधीनञ्चार्थ वत्वज्ञानमिति रीत्या पुन अन्योन्याश्रदोषो जायते, किन्तु लक्षणे अर्थवत्वस्योपलक्षणस्वीकारे दोषवारणम्। अत एव वस्तुतः प्रातिपदिकसंज्ञाफलभूतेत्यादिलक्षणं फलितमित्युक्तमभिनव- चन्द्रिकाकारः[2]। श्रीमता कौण्डभट्टेन वैय्याकरणभूषणसारस्य धात्वर्थप्रकरणे फलव्यापारौ धातुवाच्यौ, इति सिद्धये गणपठितत्वे सति क्रियावाचकत्वं धातुत्वमिति धातुलक्षणमुक्तम्। धातुलक्षणे क्रियापदेन फलव्यापारयोर्ग्रहणमिति, (अन्या कथा) तत्र मीमांसकैः धातुलक्षणे क्रियापदेन फलस्यैव ग्रहणं कृतम्। अतः तल्लक्षणे क्रियापदेन फलमेव विवक्षितम्, न तु व्यापारः। तत्र व्यापारस्यापि ग्रहणं कर्तव्यमिति स्वमतपोषये कथितं यत्—

**धत्वर्थत्वं क्रियात्वञ्चेद्धातुत्वं च क्रियार्थता।**
**अन्योन्यसंश्रयः स्फष्टस्तस्मादस्तु तथाकरम्[3]॥**

अस्याः कारिकायाः व्याख्यानप्रसङ्गे कथमन्योन्यश्रयदोषः कथञ्च तद्वारणमिति विषय इत्थं प्रतिपादितम्। यदि क्रियात्वं धात्वर्थमेव तर्हि धातुत्वग्रहे तदर्थत्वरूपक्रियात्वग्रहः। क्रियात्वग्रहे च तदवच्छिन्नवाचकत्वघटितधातुत्वग्रहे इत्यन्योन्याश्रय इति ग्रहपदं पूरयित्वा

---

1. लघुशब्देन्दुशेखर, पृष्ठ संख्या 03, षट्टीका द्वितीयभाग, प्रकाशक वाणीविलास, द्वितीयसंस्कारण, प्रकाशन सन् विक्रम सम्मत 2048
2. अभिनवचन्द्रिकाटीका, पृ. 04, षट्टीका द्वितीयभाग, प्रकाशक वाणीविलास, द्वितीयसंस्करण प्रकाशन सन् विक्रम सम्मत 2047
3. वैय्याकरणभूषणसार धात्वर्थप्रकरण कारिकासंख्या।

व्याख्येयम्। यथाश्रुते चान्योन्याश्रयस्योत्पत्तौ ज्ञप्तौ वा प्रतिबन्धकत्मभ्युपेयम्। अयं भावः "भूवादयो धातवः" इति सूत्रं धातुत्वग्रहे प्रमाणत्वेनोक्तम्, तद्प्रमाणं मीमांसकैरपि स्वीक्रियते, मीमांसकमतेऽपि 'भूवादयो धातवः' इति सूत्रस्य क्रियावाचकाः भ्वादयः धातुसंज्ञकाः इत्येवार्थो भवति, अतो मीमांसकमतेऽपि सूत्रविरोधो नास्ति, किन्तु धातुत्वलक्षणे क्रियापदेन न लोकप्रसिद्धाक्रिया स्वीक्रियते किन्तु धात्वर्थ एव स च धात्वर्थः फलरूप एव। फलस्यापि क्रियापदेन व्यवहारः "कर्मवत्कर्मणा तुल्यक्रियः[1]" इति सूत्रभाष्ये दृश्यते अतः क्रियावाचकत्वे सति गणपठितत्वं धातुत्वमिति लक्षणं मीमांसकमतेऽपि संगच्छते। परञ्चास्मिन् लक्षणे अन्योन्याश्रयदोषः समापतति, यतोहि क्रियावचनो धातुः इति लक्षणम्। तत्र क्रिया नाम का इति जिज्ञासायां या धातुसंज्ञकेन प्रतिपाद्यते सा इति वक्तव्यम्। तथा च धात्वर्थ-रूपक्रियाज्ञाने धातुसंज्ञाज्ञानमपेक्षितम्, धातुसंज्ञाज्ञाने च क्रियाज्ञानमपेक्षितमिति रीत्या स्वज्ञाना-धीनज्ञानाधीनज्ञानविषयत्वरूपः अन्योन्याश्रयो दोषः प्राप्तः। अस्यान्योन्याश्रयदोषवारणज्ञान-सूचकं ग्रहपदं पूरयित्वा करणीयम्। इदं तात्पर्यम्—धात्वर्थत्वस्य क्रियात्वे सति क्रियात्वस्य धात्वर्थत्वे बाधकाभावेन क्रियावाचकत्वे सति विशेषणदानस्यानुचितत्वापत्तेरिति दर्पणकारः। धात्वर्थत्वस्य क्रियात्वे क्रियात्वस्य धात्वर्थत्वे बाधकाभावेन दोषोद्भावनमसङ्गतं स्यादतः तज्ज्ञानप्रतिबन्धकत्वमेवेति सूचयितुं ग्रहपदं पूरणीयम्। अनेनात्रान्योन्याश्रयज्ञप्तिप्रतिबन्धक-त्वमिति सूच्यते। यदि च क्रियाशब्दो लोकप्रसिद्धव्यापारसन्तानवाचकः तदा तु क्रियात्वज्ञाने धातुत्वज्ञानस्यानावश्यकत्वात् न दोषः। क्रियाशब्देन फलस्य लोके व्यवहाराभावादिति तात्पर्यम्। निष्कर्षतः इदं वक्तुं शक्यते यत् स्थलत्रयेषु यत्रान्योन्याश्रयदोषो भवति, तत्र येन केनापि माध्यमेनोपायेन वा एकस्य पदार्थस्य ज्ञानं करणीयम्। पदार्थैकस्य ज्ञाने जाते तद्दोषवारणं स्वत एव भवति। कारणताविरहात्। एकपदार्थस्य कारणीभूतापरपदार्थज्ञानस्य जातत्वात्।

1. पा. सू. 03/01/87

Saṃskṛta-Vimarśaḥ– 2016 (Vol.-11) ISSN : 0975-1769

# Synthesis : The Governing Principle of the Vedic Way of Life

**Dr. Shashi Tiwari**
Former professor of Sanskrit,
University of Delhi, New Delhi

**वैदिकजीवनपद्धतेर्विहितसिद्धान्ता वैज्ञानिकदृष्ट्युपेताः कालानवच्छिन्नां अद्यापि प्रासङ्गिकतां भजन्ते येषां परिपालननेन जीवनमुत्कृष्टतमत्वमाप्नोपि। शोधलेखेऽस्मिन् विदुष्या लेखिकाया वैदिकजीवनपद्धतेः स्फुटसिद्धान्तानां सुविशदं संश्लेषणं प्रास्तूयत्।**

In this age of globalization we are totally influenced by modernity or materialism. Individuals nowadays are mostly far away from ethos and morality. Absence of values directs society to that extent where everyone wants success through violent competition and rivalry, both of which are based on disintegration, undesirable cruelty, and jealousy. In this context, it is important to know the viewpoints of our great ancestors who realized the true meaning of human life. Vedic insight guides us for the achievement of true success in all stages and the attainment of a happy, flourishing and peaceful life. Obviously, the Vedic way of living has various dimensions, so in this paper, focus is given only to its principle of synthesis and harmonization by bringing together important aspects related to this thought specially in reference to life. Simultaneously, some essential Vedic concepts and techniques will be discussed which help to keep life on the right track and make it more healthy and enjoyable.

I may say at the outset, that the Vedas reveal their seers as men of very great intellectual caliber. The poetical elements of the Vedic hymns, namely imagery, symbolism etc. are thoroughly fascinating and entrancing. Besides its poetic grandeur, the Vedas contain detailed injunctions for a well-ordered society and social life, great philosophical truths, and even scientific laws. There is

spiritualism of the highest order, not only in certain hymns, but even in those verses where it is not too apparent. Above all, there is a central concept running throughout the Vedic literature, which includes ideas for ensuring the wellbeing of all in this world and the world to come.

The Vedas are the most reliable source of knowledge about what life is and how one should live oneés life. They guide the actions of a person from the moment of birth to the moment of death and thereafter to ensure his or her salvation. How should society behave, how should a king govern his country, what should be the conduct of a woman, what are the duties of a man - all such matters have been presented to us in a codified form in the Vedas. The essential purpose of the Vedas is to ensure the well-being of the universe. They contain divine laws for the well-being of the entire humanity. Collective wellbeing does not refer only to humanity, because animals and plants also come under its vision. It goes even further and stresses the well-being of shrubs, trees, mountains and rivers- in fact all creation. The famous *Śānti Mantra* is its best example:

**Dyauḥ śāntirantarikṣamṣāntiḥpṛthi-**
**vī śāntirāpaḥ śāntiroṣadhayaḥ śāntiḥ/**
**Vanaspatayaḥ śāntirviśvedevāḥ śāntirbrahma Śāntiḥ**
**sarvam śāntiḥ Śāntireva Śāntiḥ sā mā śāntiredhi //**
-Yajurveda, 36.17; Atharvaveda, 19.9.94

*Śānti.* e. peace is a state of equilibrium which is needed for the proper existence of all and everyone in this universe. For a peaceful and fine life, the Vedas visualize the key principles of synthesis and balance. Combination of often diverse concepts into a coherent mood is called synthesis, which is regarded as the basic law for maintaining harmony. We can see this principle as the crux of Vedic wisdom in its various notions. Some of them are concepts of life, aims of human life, means for achievement, concepts of happiness, a definition of health, and ideal nature or behavior.

### 1. Vedic Concept of Life

The seers of the Vedic hymns were very optimistic about human life. In many mantras they express their love for life and hate for death. Life is a specific duration of time between taking birth and leaving the body. Birth and death are two ends of life.

The duration of time between the birth and the death varies. Everyone wants to live in this world for the maximum period. Vasiṣṭha, the seer of the seventh Maṇḍala of Ṛgveda says, 'that bright eye (Sun) placed in the east by the gods, has arisen. A hundred autumns may we see that bright eye, i.e. the sun, beneficent to gods; a hundred autumns may we live'.

> **Taccakṣurdevahitamśukramuccarat paśye-**
> **maśaradaḥ śatamjīvema śardaḥśatam/** -RV 7.66.16

The Vedic Seers believe that they have been granted a life of a full hundred years by the gods. So they ask them not to break the course of life in the midst, but to extend it to the full hundred years (RV 1.89.9). They always seek the friendship of the gods, so that they may grant all auspicious things to make life happy. Gotama Ṛṣi says, 'May the auspicious favor of gods be ours, may the bounty of the righteous gods descend on us. We devotedly seek the friendship of gods, so may the gods extend our life that we may live here'.

> **Devāḥna āyuḥpratirantujīvase / -** Ṛgveda, 1.89.2.

Gotama says in another verse, 'O Gods, may we hear good with our ears, may we see good with our eyes, with firm bodies and limbs eulogizing you, O All, we may attain the hundred year's life'.

> **Bhadam karṇebhiḥ śruṇuyāma devā-**
> **bhadram paśyemākṇabhiryajatrāḥ /**
> **Sthirairaígaistuśṭuvānsastanūbhir-**
> **vyaśema devahitam yadāyuḥ //** -Ṛgveda 1.89.8

From these and many other similar verses, it is clear that a life of hundred years was always sought for from the gods. Longevity was the important general object to be asked for from the gods. It is to be pointed out that whenever the Vedic seers asked for a full hundred year's life, they always mean a life with good health and wealth. They knew that a life of a hundred years will be a curse if it is devoid of good health and wealth. Yajurveda says clearly, 'May we see for hundred years, may we breath for hundred years, may we hear for hundred years, may we speak for hundred years, may we be not poverty-trodden, and if provided so, we would like to live even after hundred years.'

> **Paśyema śaradaḥ śatam, Jīvema śaradaḥ-**
> **śatam, śruṇuyāma śaradaḥ śatam,**

**prabravāma śaradaḥ śatamadīnāḥ syāma-**
**śaradaḥ śatam, bhūyaśca śaradaḥ śatāt /**

-Yajurveda, 36.24

The big objective is to secure a long life of one hundred years with prosperity, brave offspring, freedom from diseases, and abundance of food and drink. For the Vedic seers, life means 'active' not 'inactive'. They always desire an active life of one hundred years (YV 40.2). A man should aspire to live a life of one hundred years only being active; otherwise he will not be able to enjoy the fruits of life. Along with worldly requirements, intelligence is also desired for a happy life. The famous Gāyatrī mantra expresses desire for the improvement of mental faculties (RV 3.62.10). A prayer to Agni is about the desire of intelligence, 'O Agni! Make me endowed with that intelligence which is always sought for by the divine beings and ancestors'.

**Yāmmedhām devagaṇāḥ pitaraścopāsate/**
**Tayā māmadya medhyā'gne medhāvinam kuru //**

-Yajurveda 22.14

This Vedic Concept of life is very realistic, scientific and balanced. It has several angles and applies generally to all men. Certainly other than this, higher goals for life are mentioned in the Vedic verses to make a holistic concept of life.

## 2. Aim of Human Life

*Puruṣārtha-chatuṣṭaya* i.e. fourfold values of human existence - Dharma, Artha, Kama and Mokṣa are prescribed in the Vedic tradition. The four aims in the life of a human being are well established in post-Vedic intellectual traditions, but the root of the aims lies in the Vedic texts. The Vedic society acknowledges the four pursuits of human life, namely, Dharma (principles of virtue), Artha (economic development), Kāma (pleasure and entertainment) and Mokṣa (final emancipation from the cycle of birth and death). All are important. All are interrelated. All are to be pursued by a man in his life time. Their sequence is often linked with the different stages of life (Āśrama).When combined, they make a 'man's goal of life'. Making an effort to possess any one of them is condemned as it will be harmful and will make life one-sided. Emphasis is given to the coordination of all the four at the same time.

Out of first three Puruṣārthas, Dharma (righteousness) is

considered more important because without it Artha (wealth) and Kāma (pleasure) would be baseless. The Vedas have established the foremost virtues (Dharma) for men.

**Tāni dharmāṇi prathamānyāsan /** -Ṛgveda 10.90.16.

Vedic culture believes in a hierarchy of goods, so here wealth is not negligible. Man's natural urge for wealth and prosperity is seen in the numerous prayers of the Vedas. Without wealth one cannot discharge even one's religious duties efficiently. A Vedic Ṛṣi says clearly, 'O Agni! Whatsoever good you will give to the doer of sacrifice, it will definitely be returned to you in the form of religious rites.'

**Yadaṅga dāśuṣe tvamagne bhadram kariṣyasi /**
**Tavettatsatyamaṅgiraḥ//** -Ṛgveda 1.1.6

Realizing the importance of material pleasures in life, Vedic seers pray, 'May we be the masters of prosperity.'

**Vayam syāma patayo rayīṇām /**
- Ṛgveda10.121.10; Yajurveda 10.20

The emphasis was always laid on honest means for the attainment of wealth. A Ṛgvedic prayer indicates,' O Agni! Lead us to wealth through the right path'.

**Agne naya supathā rāyeasmān/** -Ṛgveda 1.189.1

The freedom of the soul is the ultimate goal of mankind. In the Vedic traditions, it is generally called Mokṣa i.e. liberation from the cycle of life and death. There is no point of difference in realizing that the supreme happiness lies in the liberation of soul. The Upaniṣads elaborate this idea in length and declare, 'after knowing Brahman one becomes Brahman.

**Brahmavidbrahmaiva bhavati/** -Muṇḍakopaniṣad,3.2.9

Knowledge of Brahman leads to liberation, the state of Mokṇa. Thus, in a human life, a person should set his goals progressively on the higher side, keeping all the four collectively as aims of life. Veda Vyāsa explained this aspect very clearly, èFirstly Dharma should be pursued. Then Artha should be pursued according to Dharma. Then Kāma should be accomplished and finally ones hould attain Mokṣa'.

**Dharmam samācaretpurvam**
**tato'rthamdharmasamṛtyutam /**

**Tataḥ kāmam caret**
**pascātsiddhārthaḥ sa hi tatparam //**

### 3. Means for Achievement

For attaining certain goals, means are required. The means may be in the form of a principle, an action, or may be material. Vedic seers have discussed values, morality and ethics, which lay the grounds for the cultivation of the final goals of life. The observance of morality in domestic and public-life is prescribed forcefully. These are shown as means, but till they are practiced, they should be treated as the main instrumental goals to be acquired. They are sādhana for the accomplishment of certain sādhya.

The importance of knowledge or Vidyā is explained variously in the Vedas, which are themselves considered as the source of whole knowledge. Here actions are proposed as most essential for human being. The Vedic Seers knew very well that mere knowledge and its practice in action are two different things. Is life to be spent in walking the path of renunciation or in striving on the path of action? The Vedic literature covers a wide range of thoughts about it, but the Īśa Upaniṣad's real excellence lies in the analysis of two doctrines, the two ways i.e. knowledge(Jñāna) and action (Karman). According to some thinkers, this Upaniṣad advocates a synthesis of Karman and Jñāna, for the achievement of final liberation. Its first verse says, èwhatever there is changeful in this changing world, all that must be enveloped by the Lord. Protect the Self by renunciation. One should not lust after any manés wealth.'

**Īśāvāsyamidam sarvam yatkiñca jagatyām jagat/**
**Tena tyaktena bhuñjīthā ma gṛdhaḥ kasyasviddhanam//**

-Īśa. Up. 1

An illumined person regards the whole universe as Ātman alone, and so he renounces worldly objects. The second verse indicates the path of action. It declares, 'In this world one should desire to live a hundred years, but only by performing actions. Thus, and in no other way, can man be free from the taint of action'.

**Kurvanneveha karmāṇi jijīviṣecchatam samaāḥ/**
**Evam tvayi nānyatheto'sti na karma lipyate nare//**

-Īśa. Up. 2

This verse says that those who are attached to earthly life]

should perform righteous duties in a spirit of dedication. The Verse provides the philosophical background of Karma-yoga for the Bhagavad-Gītā. Verses nine to eleven indicate that knowledge (Vidyā) and ignorance or action (Avidyā) are to be taken together for a superior result. In the opinion of some commentators such as Madhvāchārya, Vedānta Deśika, and Uvata, the harmonization of knowledge and action is suggested here for the attainment of immortality, Amrita or Mokṣa. The ninth verse shows that those who worship ignorance or action i.e. Avidyā enter into blinding darkness, but into even greater darkness enter those who are devoted only to knowledge i.e. vidyā. The tenth verse says that by the pursuit of Vidyā a really different result is achieved, and another different result is achieved from the practice of Vidyā. The eleventh verse says, 'who synthesizes both, crosses death, evil by ignorance or action (Avidyā) and enjoys immortality, perfection by knowledge (Vidyā)'.

**Vidyām cāvidyām ca yastadvedobhayam saha/**
**Avidyayā mṛtyum tīrtvā vidyayāmṛtam aśnute//**

-Īśa. Up. 11

The Upanishad, therefore, considers that both concepts are apparent contradictions, and results achieved by those concepts are different. But when known and pursued together consecutively by the same person, Avidyā enables an aspirant, on the path of spirituality, to overcome death, and Vidyāenables him to attain to immortality. The text hints at the combination of Vidyā and Avidyā. It is not necessary to withdraw from active life to give oneself up to contemplation. Even a Jñānī or Samnyāsin cannot give up action, though his action must be without attachment. The message is clear that knowledge and action are to be taken together. A man attains the ultimate goal only by the combined pursuit of religious duties (karman) and spiritual knowledge (Jñāna). Knowledge without action and action without knowledge cannot lead to salvation as the synthesis of both is recommended here by the Upaniṣad.

Muṇḍakopaniṣad states this point differently, 'There are two kinds of knowledge to be acquired - one is the lower knowledge (Aparā Vidyā) and the other superior knowledge (Parā Vidyā)'.

**Dve vidye veditavye parā ca aparā ca/** -Muṇḍa. Up. 1.4

Simply it means that after completion of textual knowledge, it is essential to experience the superior level of knowledge i.e. vidyā, which alone can lead to realization of the Self. So a combination

of action and knowledge is the best means for the achievement of goals in life according to Vedic philosophy.

## 4. Concept of Happiness

The ultimate goal of human life is happiness. Happiness, all in all, is a state of mind. The mind is the most valuable instrument given to us by nature. In Indian philosophical thought, it comprises Chitta, Buddhi, Manas and Aham. The faculty of liking, disliking, feeling, and memorizing is called Chitta, the faculty of discriminating right and wrong is called Buddhi or intellect, that which takes decisions on the basis of instruction from either Chitta or Buddhi is Manas, and lastly the one that implements the determination or otherwise of Manas is called Aham. Aham is the essence, the executor power of the self, Jīvātamā, or the soul. Disciplining of the mind, comprising of Chitta, Buddhi, Manas and Aham,is the ultimate key to happiness and that is why seer Patanjali's Yoga Darśana, in its entirety, is only an exercise in disciplining the aforesaid faculties of the mind. He says that when all the fluctuation of mind are restricted, then comes Yoga.

**Yogaśchitta-vṛtti-nirodhaḥ/** - Yogasūtra 1.2

When the soul as master succeeds in freeing Chitta from all Vṛttis then the soul establishes itself in the svarūpa of God, the great supervisor, and this state is called ultimate happiness.

The soul in its very nature is always calm and quite like the full moon in the sky. Only when it gets involved with Chitta, does it get perturbed, and that only when it has different kinds of vṛttis rising in it due to contacts with outward worldly objects. So one has three options for being away from worldly tensions that agitate the mind - remaining away from such agitating objects, keeping away such agitating objects , or strengthening spiritually in such a manner that even if the soul comes into contact with worldly objects, it does not allow any waves to rise in it.

All schools of Indian thought consider life to be lived for attaining absolute happiness. The option of living a life in mere enjoyment of the senses is ridiculed by most of the schools and therefore, they include the above mentioned end in their viewpoints.

Hence, for real happiness, a combination of physical and spiritual life is recommended in the ancient scriptures. Vedas speak about all sort of worldly achievements, but highlight the attainment

of inner peace, and set goals for utmost happiness.

## 5. Definition of Health

Health is a constitutive attribute of human life. A Vedic seer prays for a long life with good health as 'this body is very dear to him and he wishes that it should be in perfect shape up to his old age for the worship of Gods.'

**Ayam lokaḥ priyatamo devānāmaparājitaḥ/**
**Yasmai tvamiha mṛtyave diṣṭaḥ puruṣa jajūiṣe//**

AV 5.30.17

In the modern perception of health, there is no end for which one is preserving it. Attainment of health is considered to be a substantial end in itself. Hence health is for health's sake. One might achieve other ends after attaining health but that does not make health a means. The notion of health is not related with a grand narrative like a spiritual end. Something can become a means if it has the potential to make somebody meet an end. Taking the road is not an end in itself. We find the notion of health in the Vedas as most composite, precisely because it is interlaced firstly to provide the purpose of serving Mokṣa, and secondly, to provide features such as wellbeing and morality, which find a place in the design of this notion. Nowhere in the history of civilization, have we found a notion of health consisting of moral features. This is because here, Mokṣa is understood as a state where moral righteousness and good conduct help one to reach towards it. According to the Vedic view, the human body is a vehicle to be used for attaining an end. As says the Upaniṇad, 'you should realize your body as chariot and the soul as its master.'

**Ātmānam Rathinam viddhi Śariśram rathameva tu /**

-Kathopaniṣad,1.3.3

So health of the body has to play merely an instrumental role. It is only a means to attain something higher in virtue. Āyurveda basically evolved not as a medical system, but as a way of life that would enable man to reach the state of Brahman or Mokṣa, which is the highest Puruṣārtha. For attaining the last end man should be physically, mentally and socially healthy.

In Indian traditions, moral acts are tightly linked with the overall wellbeing of a person. Several principles of moral acts and righteousness are considered important for maintaining good health

also. The fuel of the spiritual journey is acquired through virtuous acts and cleansing of the body, so health is basically connected with morality. The constitution of the nexus and interrelation containing morality, health and Mokṣa is evaluated in most of the Vedic literature. The Atharvaveda indicates that moral righteousness and good health jointly function as a means to push one towards superior end.

> **Brahmacaryeṇa tapasā devā mṛtyumapāghnata/**
> **Indro ha brahmacaryeṇa devabhyaḥ svarābharat//**
> -AV 11.5 .19

Just as the Sun dispels darkness with light and produces excellent materials like green trees, similarly man should dispel disease, laziness, wretchedness etc. to obtain the bliss of inner peace. Health and morality not only place one in the right direction, but also speed up the process of attainment of goals.

Importantly, health is not a necessary condition for attaining the spiritual end of life, as without good health also one can proceed towards it, but proper health enhances oneés chances of attaining Mokṣa. In the modern perception of health, no other aspects of life are essentially linked to the concept of health.

### 6. Balanced Nature

One of the main causes of our unhappiness is our uncontrolled reaction to our human environment–what people do around us–and to the pleasant or unpleasant conditions in which we get involved. The ordinary man has no well-defined principle for the regulation of these reactions. He reacts to these things in a haphazard manner according to his whims and moods with the result that he is being constantly disturbed by all kinds of violent emotions. Some people, finding these emotional reactions unpleasant, decide not to react at all and gradually become cold, hard-hearted and indifferent to those around them. But these attitudes are undesirable and cannot lead to acquiring a calm, gentle and compassionate nature in accordance with the requirements of the higher life. Spiritual life can go neither with violent reactions nor with cold indifference which some misguided Philosophers recommend to their followers. It requires a balanced nature in which our reactions are correctly regulated by the highest motives and are in harmony with the Divine Law. Maharshi Patanjali has

